# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]





६१ वर्षे

३-४ अङ्कौ

मार्गशीर्ष-फाल्गुन-पूर्णिमे

दिसम्बर-मार्च, २००६-२००७ ई.

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


सम्पादकौ

**प्रो. नरेन्द्रनाथपाण्डेयः**
निदेशकः, अनुसन्धानसंस्थानस्य

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य






६१ वर्षे
३-४ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
दिसम्बर-मार्च, २००६-२००७ ई.

## परामर्शदातृसम्पादकमण्डलम्






*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

*मुद्रकः —*

**श्रीजी प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००२

*प्राप्तिस्थानम्—*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

# विषयानुक्रमणी

●

सारस्वती सुषमा
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ६१ वर्षे | मार्गशीर्ष-फाल्गुनपूर्णिमे, वि.सं. २०६३ | ३-४ अङ्कौ |
|---|---|---|

# कालिदासप्रबन्धेषु वेदान्तभावाः*

**प्रो. वेम्पटिकुटुम्बशास्त्री**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



श्रीवेङ्कटाचलाधीशं श्रियाध्यासितवक्षसम्।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे।।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः।।

उच्यते हि विद्वद्भिर्यच्छास्त्रमेकं सम्पूर्णमधीत्य कश्चित् स्यात् साकल्येन तदीयविषयज्ञः, तथापि सम्पूर्णमपि कविहृदयं न कोऽप्यालोडयितुं शक्नोतीति। युक्तं चेदं सन्दृश्यते। अपरिमिते अगाधे च कविहृदये सहृदयतासमुल्लासात् सम्भवन्ति प्रादुर्भूतास्तरङ्गा इव भावा महाकवीनाम्। अत एव प्रतिदिनं प्रतिक्षणं चास्माभिर्यदवलोक्यते वस्तु, तदेव वस्तु कविभावप्रतिबिम्बितं किमपि सौन्दर्यमातनोति यन्न प्रागुपलक्षितम्। सर्वजनसाधारणाश्च भावाः कदाचित् महाकविनिबद्धाः सन्तः प्रत्यक्षेणानुभूयमाना इव विलसन्ति। अपि च सर्वजनानुभवगोचर एवायं विषयो यत् शतशोऽपि सहस्रशोऽपि पठितः कस्यचन महाकवेः कोऽपि ग्रन्थः पुनः पुनरपि नित्यनूत्नतां धत्ते एव। किमत्र

---

* प्रायः पञ्चत्रिंशद्वर्षपूर्वं गुरूणां डॉ. राघवन्महोदयानाम् आज्ञया पञ्चसु दिवसेषु अध्ययनानुसन्धानविश्लेषणपूर्वकं विरचय्य कुप्पुस्वामिशास्त्रिशोधसंस्थाने मद्रास-नगरस्थे विद्वत्परिषदि प्रस्तुतोऽयं लेखकस्य प्रथमः शोधप्रबन्ध ऐदम्प्राथम्येन प्राकाश्यमानीतः।
—सम्पादकः

कारणम्? महाकवीनां महाकवित्वमेव। तेषां हि हृदये भाविता लौकिका एव पदार्थास्तेषां रचनासु किमप्यलौकिकं रूपं भजन्ते, येन तदास्वादनात् सम्भवति महानानन्दः सहृदयानाम्। तदानन्दलिप्सवश्च पुनः पुनरपि तत्काव्यानि पठन्ति, पुनः पुनरप्यभिगच्छन्ति तमेवानन्दम्। कविर्हि सहृदयानां कामधेनुः। एतादृशस्य चालौकिकानन्दस्य नास्ति इयत्ता। नास्ति चैतत्कारणस्य कविहृदयस्य मितिः। कवयो हि कञ्चिदर्थं वदन्ति, अन्यञ्च लक्षयन्ति, इतरञ्च नैकविधमर्थं व्यञ्जयन्ति। तल्लिखिते एकैकस्मिन्नप्यक्षरे भासत एव भावगम्भीरिमा। ये ये पुरुषा यथा यथा चिन्तयन्ति, तेषां तेषां तथा तथा भासतेऽयमर्थः। अत एव सर्वात्मना कविहृदयं ज्ञातुमशक्यमित्युक्तं प्राक्। नैवं कथा शास्त्रेषु। तत्र तावद् वस्तुस्थितिः कथ्यते, अत्र तु विभिन्नाकारा भावना। एवं स्थिते महाकवीनामग्रेसरस्य कालिदासस्य भावमाकलयितुं यतमानोऽहं नूनं संवृत्तः साहसिकः, तथापि मद्बुद्ध्यनुरूपः कोऽपि विषयस्तस्माद् ग्रहीतुं शक्य इति धैर्येणात्र प्रवर्तितोऽस्मि।

अथैतद्विदितमेव विश्वेषां विदुषां यत् संस्कृतवाङ्मये द्विधाः कवयो विलसन्ति, विद्वत्कवयस्तदितरे च। अर्थाद् एतत् प्रतिभायाद् यच्चरमाः अविद्वांस इति। नैतद् युक्तम्। अत इदमत्र वक्तव्यं कोऽत्र तादृशविभागहेतुरिति। केचित्कवयः स्वकीयेषु काव्येष्वात्माश्रितं शास्त्रविषयकं पाण्डित्यमिच्छया दर्शयितुमीहन्ते। अत एव प्रयत्नपूर्वकं तैस्तादृशार्थाः स्वकाव्येषु प्रतिक्षिप्यन्ते। उक्तं हि श्रीहर्षेण—**'ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया'** इति। फलं चैतस्य न्यासस्य स्वयमेव वक्ति—**'मास्मिन् खलः खेलतु'** इति। यद्यपि नूनमेतानि काव्यानि सर्वजनसुलभगम्यानि न भवन्ति, तथापि विदुषां कस्यापि विशिष्टानन्दानुभवस्य कारणतां भजन्ते। अतश्च तेषां कवीनां कवित्वं न हीयते। अन्योऽयमानन्दः, अन्यश्च तदितरकविसम्पादितः। प्रसिद्धाश्च माघभारवि-श्रीहर्षभट्ट्यादयो विद्वत्कवयः।

यस्तु **"अस्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा एव वा महाकवय इति गण्यन्ते"**[1] इत्येवमाचार्यानन्द-वर्धनादिभिः प्रस्तुतो महाकविः कालिदासः, सोऽपि प्रसिद्ध एव। एष विद्वत्कवित्वेन न कैश्चिदप्यभिहितः। अथ किं नायं विद्वान् इति प्रश्नोऽयमस्मत्पुर आपतति। तथ्यमेष विद्वानेव। यथा माघादयः स्वकविताप्रकटनेन साकं पाण्डित्यप्रकटनस्य समं प्राधान्यं ददुः, तथा च सुस्पष्टं तदाविष्करणञ्चाकार्षुः, तथायं सत्यवकाशे शास्त्रविषयान् स्पृशन्नपि नोद्वेजयति

१. रसगङ्गाधरः-१.६।

सहृदयान् अत्यन्तं विरचितेन शास्त्रार्थेन। अत एवैतस्य ग्रन्थेषु अलक्ष्यलक्ष्यं दृश्यन्ते शास्त्रार्थाः। अपि च कवेरस्य सरसपदबन्धेन कोमलकान्तपदावल्या च प्रभाविताः शास्त्रार्थाः स्वीयान् काठिन्यदुरवगाहत्वादीन् गुणान् विहाय काव्यात्मतां भजन्ते। अत एव अनुस्यूततया एतद्ग्रन्थपठितॄणां मनसि शास्त्रार्थप्रतिपादनसमयेऽपि तत्कृतश्रमो नैव जायते। यथा चायं रसपरिपोषणैकदृष्टिः कविः क्वचिद् अनुक्रान्तमपि शास्त्रार्थं रसविघातुकतया मध्ये विसृजति, तथा उदाहरणेनैकेन निरूप्यते।

परमेश्वर उमायाः प्रार्थनां प्रतिपिपालयिषुर्हिमवते सन्देशप्रेषणाय ज्योतिर्मयान् सप्तर्षीन् सस्मार, ते च सारुन्धतयः परमेश्वरान्तिकमुपेत्य तं मानयित्वा तुष्टुवुः। स्तोत्रान्ते—

**'किं येन सृजसि व्यक्तमुत येन बिभर्षि तत्।**
**अथ विश्वस्य संहर्ता भागः कतम एष ते'।।** (कु.सं. ६.२३)

इत्यपृच्छन्। इतः पूर्वं तैः कृते स्तोत्रे विद्यन्ते केचन शास्त्रविषयाः। पुनश्च तैः **'न धियां पथि वर्तसे'** इत्युक्त्वा अवाङ्मनसगोचरत्वात् तदीयस्वरूपस्य, केन शरीरभागेन इमं व्यक्तं प्रपञ्चं सृजसि, केन वा सृष्टं बिभर्षि, केन वा तत् संहरसीति परमेश्वरः पृच्छ्यते। एतत्पृच्छाव्याजेन कविः परमेश्वरस्य विश्वात्मकस्य जन्मस्थितिभङ्गकारणत्वादिविषयानधिकृत्य किमपि वक्तुमुपक्रान्त इति सुस्पष्टं ज्ञायत एव। तथापि सुमहानयं जगज्जन्मादिस्थितिभङ्गकारणविचारः **'जन्माद्यस्य यतः'** इत्यादिवैयासिकसूत्रविषयः सहृदयानां रसभावनां किञ्चिदिव व्याकुलयेदिति चिन्तयन्नेव तत्प्रासङ्गिकं परिसमापयति सप्तर्षिमुखात्—

**अथ वा सुमहत्येषा प्रार्थना देव तिष्ठतु।** (कु.सं. ६.२४) इति।

एवमत्यन्तजागरूकोऽयं कविर्नातिमात्रं शास्त्रविचारं सहते। यावच्च रसाविरोधि सहृदयसह्यं च तावदादत्ते। अत एव शरन्मेघावृतश्चन्द्र इव कुत्रचित् किञ्चिदिव प्रकाशमानः शास्त्रार्थ एतस्य काव्यानां शोभामातनोत्येव। माघादीनां ग्रन्थेष्वनुभूयत एव अर्थशास्त्रादिशास्त्राणां साकल्यम्। अत एव नायं विद्वत्कवित्वेन प्रसिद्धिं प्राप; परन्तु वर्तन्त एवास्य ग्रन्थेषु परश्शतं शास्त्रार्था विना क्लेशेन साधु निरूपिताः काव्यतां गताः।

अथ 'कालिदासप्रबन्धेषु वेदान्तभावाः' इति विषयमधिकृत्य लेखनोद्यतस्य मम पुरः प्रश्नोऽयमवतिष्ठते यत् कथं नाम शृङ्गारपरिपोषणैकभाजनं कालिदासस्तदत्यन्तविरोधि शान्तरसप्रधानं वेदान्तविचारं कुर्वीत, कियद्वा सोऽत्राधिकारीति। समाधीयते। यद्यपि सहृदयहृदयसन्तर्पणाय

शृङ्गाररसो भूय एतेन पोष्यते, तथाप्येतस्य काव्येषु आप्रथमाद् आन्तं च वेदान्तभावा रेखामात्रेण नातिस्पष्टं नास्पष्टं प्रदर्श्यन्त एव। तथा हि—

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**

**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।** (रघु. १.१)

इति सगुणौ पार्वतीपरमेश्वरौ ध्यायन् कविर्वागर्थप्रतिपत्तये इत्यनेन श्रुत्यर्थभूतात्मसाक्षात्कारप्राप्तये पार्वतीपरमेश्वरौ नौमीत्यर्थं व्यञ्जयति। तथा हि वाक् = उपनिषद्रूपा वाक्, तदर्थः = तत्प्रतिपाद्य आत्मा, तत्प्रतिपत्तये = तत्साक्षात्कारायेत्यप्यर्थकरणस्य सुगमत्वात्। उत्तरेषु सर्गेषु च बहुविधानि सगुणनिर्गुणोपासनानि कृतानि। यथा चायमर्थस्तथा उत्तरत्र प्रतिपादयिष्यते। अन्ते च अग्निवर्णेन काव्यं परिसमापितम्। एवं ह्यत्र चिन्तनीयं विद्यते यत् सत्सु बहुषु राजसु दिलीपादिषु श्रीरामादिषु च विख्यातवृत्तेषु अग्निवर्णचरित्रेण विरसावसानं विरचयता महाकविना किन्नु खल्वभिप्रेतं स्यादिति। नातिपरोक्षोऽत्र समाधिः। चित्स्वरूपेतरसकलविनाश एव कविना विवक्षितः। नैव इक्ष्वाकुकुलप्रतिष्ठा तथैव प्रतिष्ठास्यति, नापीक्ष्वाकवः। सर्वमिदमनित्यमिति। तस्माद् एतादृशः कोऽपि सन्देशः कालिदासेन नूनं विवक्षितः। नेयं स्वोपज्ञा व्याख्यानपद्धतिः, यावता आनन्दवर्धनाचार्या अपि चतुर्थोद्द्योते— **'महाभारतेऽपि शास्त्रकाव्यच्छायान्वयिनि वृष्णिपाण्डव-विरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः'**[१] इत्यादि कथयन्ति।

अपि चाभिज्ञानशाकुन्तले—आदौ विश्वात्मकस्य सगुणस्येश्वरस्य स्तुतिः कृता। मध्ये च 'विनीतवेषप्रवेश्यानि नाम तपोवनानि' इत्यादि कथयता नूनं शृङ्गाररसाविरोधितया तत्परिपोषणार्थं किञ्चिदिव न्यूनतया च शमादीनां प्रस्तावः कृत एव। 'शान्तमिदमाश्रमपदं', 'शमप्रधानेषु तपोधनेषु' इत्यादयोऽत्रो-पकुर्वन्ति; परन्तु दृश्यकाव्यत्वात् नास्तीतोऽपि शमादीनां निबन्धनेऽवकाशः। अन्तेऽत्रातिरमणीयं किञ्चिद् विद्यते। शृङ्गाररसखण्डस्य शाकुन्तलस्य भरतवाक्ये अयं कविर्न भोगान् वृणुते, न च धनानि, नापि यशः, न वा ऐश्वर्यम्; परन्तु पुनर्भवच्छेदं मोक्षं स्वकण्ठेन भगवन्तं नीललोहितं प्रार्थयते—

**'ममापि च क्षपयतु नीललोहितः पुनर्भवं परिगतशक्तिरात्मभूः'।**

(अभि.शा. ७.३५)

---

१. रसगङ्गाधरः-४, का. ५।

विनिश्चितमेवात्र समेषां प्रतिभायाद् अस्माद् वाक्याद् यावदस्य मुमुक्षुत्वमिति। हा वयं सर्वेऽपि वञ्चिता एव यद् रसमयेन काव्येन भगवन्तमाराधितवताऽनेन सत्यमेव मोक्षोऽधिगतः स्याद् यत्कारणं न तत्सदृशं कविं, न वा तत्सदृशं काव्यान्तरमद्यावधि वयं विन्दामहे।

किञ्च रघौ अजचरिते कोऽपि विशेषः। यद्यप्ययं धीरोदात्त एव, तथापि किञ्चिदिव धीरललितत्वेन सः पोषितः। स्वयंवृता भार्या। प्राज्यं राज्यम्। भोज्यानि च भाग्यानि। तथापि ईश्वरेच्छया अमृतमपि विषमभूत्। तदारभ्य यदजविलाप इति कथ्यते, तदन्तपर्यन्तं कविना वैराग्यमेव पोषितम्। तथा हि—अजस्तावत् चिन्तयति—

**'कुसुमान्यपि गात्रसङ्गमात् प्रभवन्त्यायुरपोहितुं यदि।**
**न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः'।।**

(रघु. ८.४४)

अत्र हि कथं नाम पुष्पैः प्राणापहरणं शक्यमिति अतर्कयदजः। स्वयमेव च समाधत्ते—

**अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः।**
**हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता।।** (रघु. ८.४५)

सहृदया आलोचयत अनन्यसाधारणां कविप्रज्ञाम्। इन्दुमत्याः शरीर-सौकुमार्यमजेनानुभूतं प्रत्यक्षमिवाक्ष्णोर्दर्शयति। लोके तावद् अनुभूयते मारकः कोऽपि आयुधविशेषो मार्यात् कठिनतरो भवतीति। इन्दुमती च कुसुममालया हतप्राणा दृश्यते। अतश्च कुसुमेभ्योऽप्यत्यन्तं पेलवं सुकमारञ्च तस्याः शरीरमित्यनुभावयति सहृदयान् कविः। तथाभूतायास्तस्याः प्रियतमाया नाशे कथं नाम नायकस्य मनोव्यापृतिर्भवतीति चिन्तनीयम्। अत एव सः **'सहजामप्यपहाय धीरतां'** रोदिति। स एषाजस्य भाग्यविप्लवः। अत एव मुहुर्मुहुराकलयति देहभृतामसारताम्। तां विना सर्वमपि निष्फलमभात् तस्य—

**'धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।**
**गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे'।।** (रघु. ८.६६)

अत्र किं सत्यमेव ऋतुर्निरुत्सवः? न, अपि तु प्रवृत्तिमार्गवर्तिनामितरेषां सोत्सव एव। यस्तु निवृत्तावभिनिविष्टस्तस्य निरुत्सवः। एवं च शोकोद्विग्नमनसं निवृत्तिपथे स्थापयितुं शमिनामग्रणीः सन्दिदेश। अजन्मनः पुरुषस्य पदेषु त्रिभुवनेषु यदतीतं यच्च भवद् यदपि भावि तत्सर्वं ज्ञानचक्षुषा पश्यन् स वसिष्ठर्षिस्तत्त्वज्ञो ब्रवीति—

**उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्त्वया।**
**मनसस्तदुपस्थिते ज्वरे पुनरक्लीबतया प्रकाश्यताम्।।**
**मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः।**
**क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ।।**

(रघु. ८.८४,८७)

मरणावस्थाया नियतत्वात् मरणं प्रकृतिः। तथा च एतद्देहस्य जन्म-मरणादिभिरनित्यत्वमनेकश्रुतिबोधितं विना क्लेशलेशं साधु निरूपयति कविः। अपि च—

**'अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम्।**
**स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम्'।।**

(रघु. ८.८८)

'विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणां, विपरीतं तु विपश्चिताम्' इति मल्लिनाथः। भगवद्गीतास्वपि—

**गतासूनगतासूँश्च नानुशोचन्ति पण्डिताः।** (गी. २.११)
**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।।** (गी. २.१३)
**'तांस्तितिक्षस्व भारत'।**

इत्येवमादिना प्रतिपाद्यतेऽयमर्थः। किञ्च—

**'स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा।**
**विरहः किमिवानुतापयेद् वद बाह्यैर्विषयैर्विपश्चितम्।।** (रघु. ८.८९)

स्वशरीरशरीरिणोरपि=स्वदेहात्मनोरपि, संयोगविभागयोः श्रुत्या बोधितयोर्नास्त्यनुतापः कस्यापि, कुतोऽयं ते विषादो बाह्यविषयवियोगेनेति प्रतिबोधयति। तथा च बाह्यविषयवियोगाद् दुःखमाप्तुं नार्हसीत्युपदिशति। तथा च गीतास्वपि—

**मात्रास्पर्शास्तु कौन्तेय! शीतोष्णसुखदुःखदाः।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत।।** (गी. २.१४)

उपसंहरति चोपदेशम्—

**न पृथग्जनवच्छुचो वशं वशिनामुत्तम! गन्तुमर्हसि।**
**द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः।।**

(रघु. ८.९०)

एवञ्च महता प्रबन्धेन वेदान्तविषयान् तदुपकरणानि वैराग्यादीनि च आरचयता कविना पठितृभ्यः कोऽपि सन्देशो मनसि धृत एवेति निश्चीयते। स एव सन्देशोऽनित्यवस्तुवैराग्यरूपः, सहृदयानामुपदेशभूतः।

नापीदं मरणवैराग्यमात्रम्। यत आप्रायोपवेशनान्तं वर्णितम्। भवन्तु नाम अजकर्तृकवैराग्ये विप्रतिपत्तयः, वादोत्तरवादाश्च, तथापि तत्पठितॄणां मनसि कापि वैराग्यच्छाया नूनमुदयत्येव। एवञ्च महाकविरयं साधनचतुष्टयसम्पन्न इत्यध्यवसीयते। प्रबोधयति चास्मान् अनुपदम्। काव्यनिष्ठा इतिवृत्तकृता अप्येते उपदेशाः कवेरेवेति ग्रहीतव्याः। काव्यादर्शे हि कविरात्मानमेव दर्शयति सहृदयेभ्यः।

अपि च **'वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्'** (रघु. १.८) इति प्रथममेव विरचयता कविना योगान्मोक्षावाप्तिरेव परमं फलं महात्मनामिति प्रकटीकृतम्। अमी हि रघुराजर्षयो योगिनां वरा इव आप्रथमं चित्रिताः कविना। सत्स्वपि बहुमुखेषु भोग्येषु न ते भोगेच्छया तत्र प्रवर्तन्ते; किन्तु 'केवलं स्वधर्म इति चावेक्ष्य' तत्र असक्ता एव धर्मपरिरक्षणाय राज्यं प्राज्यं भुञ्जते। गीताचार्योऽपि—'तस्माद् युध्यस्व भारत', 'मुक्तसङ्गः समाचर' इत्याद्यादिशन् फलाकाङ्क्षाराहित्येन कर्मकरणं प्रस्तौति। कदाचित् निरीहो ज्ञानी सन्नपि लोकसङ्ग्रहाय कर्म कुर्यादित्यनुशास्ति। एनमेव निःस्पृहत्वं साधु ज्ञापयति कवी रघावष्टमे सर्गे। तथा हि—

**'अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया।**
**विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत्'।।**

(रघु. ८.१०)

अत्र हि भगवती श्रुतिः कर्मचितलोकानामिव पुण्यचितानामपि लोकानां नाशं बोधयति। 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति। अतश्च स्वर्गीया अपि विषया विनाशधर्माण एव। अत एव न तेष्वपि मतिमकार्षीत् मतिमतां वरो रघुः परन्तु स्वयं क्षत्रियत्वाद् यावदात्मजन्मनो राज्ये प्रतिष्ठा, तावत् स्वधर्म इति राज्यपालनमकार्षीत्। युज्यते चैतद् दिलीपपुत्रस्य। योऽपि—

**'किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।**
**एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु'।।**

(रघु. २.५७)

इति नन्दिनीकृते आत्मानं मृगराजाय अर्पयितुकामो व्याजहार। नैषा स्थितिः केवलं रघोः, यावत्—

**'गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः।**
**पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे'।।** (रघु. ८.११)

अहो महापुरुषा इक्ष्वाकवः, येन चतुस्समुद्रमुद्रितमप्यनन्तभोगभाजन-मपि राज्यं विहाय आत्मनः पुनरुद्भवच्छेदिनि मोक्षे इच्छा, तदनुकूलाचरणं च। एतादृशांश्च राज्ञो वर्णयन् कविर्भोगेष्वतृष्णतामसक्तताञ्चोपदिशतीत्युक्ते नास्ति किञ्चिदत्रासमञ्जसं स्वकपोलकल्पितमिति भावयामि। अत एव 'असक्तः सुखमन्वभूत्' इत्यसङ्गतिं सुखसाधनं निरूपयति कविः। बन्धो हि दुःखहेतुः।

स रघुः—

**'स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः।**
**समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया'।।**
(रघु. ८.१४)

अत्र रघुरविकृतेन्द्रिय इति वर्णितः। अत एव चतुर्थसर्गे—

**'पारसीकाँस्ततो जेतुं प्रतस्थे स्थलवर्त्मना।**
**इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी'।।** (रघु. ४.६०)

इति विरचयता कविना पारसीकान् जेतुं प्रस्थितस्य रघोः संयमी उपमानतया प्रतिपादितः। रघोरुत्तरचरित्रेण प्राक्प्रतिपादितेन च श्लोकेन यावदयं श्लोक एकवाक्यतां नापाद्यते, तावत्संयम्युपमाने कविहृदयं नातिस्पष्टं प्रकाशते। वीररसप्रधानस्थले कुतः संयम्युपमितिः कुतो नान्य उपमित इत्येवं विषया नूनं व्याकुलयन्ति भावुकान्। उत्तरग्रन्थसन्दर्शनेन चापगताः सन्देहा भवन्ति। अत एव मया प्रथममेव प्रत्यपादि यत् सर्वेषु कालिदासीयेषु काव्येषु रेखामात्रेण निवृत्तिमार्गोऽप्युपदिष्ट इति।

अथ चैवं वितृष्णस्यानासक्तस्य च मोक्षप्राप्तये साधनं किमित्या-काङ्क्षायामनुपदमेवाष्टमे सर्गे षोडशतमं श्लोकमारभ्य विंशतितम-श्लोकपर्यन्तमष्टभिः श्लोकै रघुणा मोक्षावाप्तये कृतां साधनां विवृणोति महाकविः—स्वधर्म इति। लोकसङ्ग्रहार्थं च प्रवृत्तिकर्म, तथा स्वश्रेयसे निवृत्तिकर्म, एवमुभे अपि राजर्षीणां कर्तव्यत्वेन स्थिते इति प्रागेव मया न्यरूपि। कविरपि एनमेव विषयं द्रढयितुमेष्वष्टसु श्लोकेष्वेकैकस्मिन्नपि श्लोकेऽभ्युदयापवर्गाभ्यां प्रयतमानयोरजरघ्वोः साधनप्रकारं हृदयङ्गमं वर्णयति।

बलान्निगृहीतमपि मे मनो न समाधत्तेऽनुदाहृतैरेतैः श्लोकैः। सहृदया विभावयन्तु यावतीं कवित्वस्य परां काष्ठामेषोऽध्यगच्छद् इति—

'अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदैरजः।
अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः।।

नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा।
परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम्।।

अनयत्प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरान्।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान्।।

अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात्।
इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना।।

पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
रघुरप्यजयद् गुणत्रयं प्रकृतिस्थं समलोष्ठकाञ्चनः।।

न नवः प्रभुरा फलोदयात् स्थिरकर्मा विरराम कर्मणः।
न च योगविधेर्नवेतरः स्थिरधीरापरमात्मदर्शनात्।।

इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ।
प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः'[१]।।

एवं मोक्षावाप्त्यै रघुः सज्जनसङ्गतिं समपादयत्। तथा हि श्रीमद्भगवत्पादाः सत्सङ्गस्य परम्परया मोक्षाङ्गतां प्रतिपादयन्ति—

'सत्सङ्गत्वे निस्सङ्गत्वं निस्सङ्गत्वे निर्मोहत्वम्।
निर्मोहत्वे निश्चलतत्त्वं निश्चलतत्त्वे जीवन्मुक्तिः'।।

तदनन्तरं चित्तैकाग्र्यापराभिख्यां धारणां प्राप्तुकाम एकान्ते कुशमयं विष्टरमाददे। धारणालक्षणन्तु वसिष्ठः—

'यमादिगुणसम्पन्ने मनसः स्थितिरात्मनि।
धारणा प्रोच्यते सद्भिर्योगशास्त्रविचक्षणैः।। इति प्रोवाच।

तथा चेन्द्रियान् बाह्येभ्यो विषयेभ्यः परावृत्य आत्मनि नियम्य स्थापयामास इत्यर्थः। 'युक्त आसीत मत्परः' इति गीतावचनमप्यत्रानुसन्धेयम्।

---

१. रघुवंशमहाकाव्यम् ८.१७-२३।

ततः सञ्चितकर्मणो ज्ञानाग्नावदहत्। ज्ञानस्य कर्मदाहकत्वे प्रमाणं तु गीतायाम्—

**'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा'।।** इति।
(गी. ४.३७)

इदमन्यच्चास्माच्छ्लोकादवगम्यते यत् कवेरस्य मते ज्ञानादेव मोक्ष इति।

ततश्च सत्त्वरजस्तम आख्यान् त्रीन् गुणान् जित्वा समलोष्ठ-काञ्चनोऽभवत्। एवमापरमात्मदर्शनात् स योगविधेर्न विरराम। अन्ते च सिद्धिमवाप।

ततः काश्चित् समा गमयित्वा तमसः परमव्ययमात्मस्वरूपानतिरिक्तं पुरुषमाप। अत्र सिद्धिप्राप्त्यनन्तरं काश्चित्समा गमयित्वा इत्युक्तेर्जीवन्मुक्तिरप्यस्य सम्मतेति ज्ञायते।

एवं मोक्षप्राप्तये साधनचतुष्टयवता पुरुषेणानन्तरं निरूपितक्रमयुक्तेन योगविधिना प्रयतनीयमित्युपदिष्टं भवति।

एवञ्चवगन्तव्यत्वेनोपगन्तव्यत्वेन च सिद्धे कस्मिंश्चित् पुरुषे तस्य स्वरूपादिषु जायते जिज्ञासा। तत्र ब्रह्मसूत्रेषु पठ्यते—**'जन्माद्यस्य यतः'** इति। श्रुतिरपि—**'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभि-संविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति'** इति ब्रह्मणो लक्षणमाम्नाति। उपसंहरति च—**'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति'** इति। एतस्माच्च ज्ञायते आनन्दघनस्य परमात्मनो लक्षणं जगज्जन्मस्थितिभङ्गकारणत्वमिति। कारणत्वं चास्य मुख्यं न सम्भवतीत्युपलक्षितम्, तदुपलक्षितशुद्धचित्स्वरूपमेव ब्रह्मणः स्वरूप-मित्यन्यदेतत्। एतेनैव लक्षणेन ब्रह्मस्वरूपं बोधयति कवी रघौ दशमे सर्गे—

**'नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते।**
**अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने'।।** (रघु. १०.१६)

कुमारे द्वितीयसर्गे—

**'नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने।**
**गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे'।।** (कु.सं. २.४)

पुनश्च तत्रैव सप्तमे सर्गे—**'एकैव मूर्तिर्बिभिदे त्रिधा सा'** इति।

एतेन चैकस्यैव परमात्मतत्त्वस्य तत्तदवस्थाभेदेन भेदं परिकल्प्य ततः 'प्राक्सृष्टेः केवलात्मने', 'त्रेधा स्थितात्मने', 'एकैव मूर्तिः' इत्यादिना अवस्थाकृतभेदमपनीय शुद्धस्वरूपं जगज्जन्मस्थितिभङ्गकारणत्वरूपलक्षणेन उपलक्षयतीति स्पष्टमेवात्र प्रतिभाति। उक्तश्चायमर्थः कण्ठरवेणैव कुमारे द्वितीयसर्गे देवकृतब्रह्मस्तुतौ—

**'तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः'**।। (कु.सं. २.६) इति।

येऽप्यत्र तिसृणामासां मूर्तीनां प्रथमावरत्वभावमाकलयन्ति, ते खल्विदं जानीयुर्यत् प्रदर्शितक्रमेण रघुवंशे जगज्जन्मस्थितिभङ्गकारणं विष्णुरित्युक्तम्। कुमारसम्भवे च द्वितीयसर्गे ब्रह्मैव तत्कारणमिति, तत्रैव सप्तमसर्गे च परमेश्वर एव त्रिधा भूत इति च। तस्मादेवेदमवगम्यते नास्ति भेदस्त्रयाणामिति, तत्तदुपाध्युपमर्दने एकमेव तेषां स्वरूपमिति च। एषां त्रयाणामुच्चावरत्वं नास्तीति वक्तुमेव कथयति—

**सामान्यमेषां प्रथमावरत्वम्।**
**'विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ'**।। इति।

अथ यदेतदेकस्या मूर्तेस्त्रिधा भवनं तदपि श्रुतिकटाक्षितमेव। तथा हि श्रूयते मैत्रायणीयशाखायाम्—**'अथ यो ह खलु वा वास्य तामसोंऽशोऽसौ सब्रह्मचारिणः–योऽयं रुद्रः, अथ यो ह खलु वा वास्य राजसोंऽशोऽसौ सब्रह्मचारिणः–योऽयं ब्रह्मा, अथ यो ह खलु वा वास्य सात्त्विकोंऽशोऽसौ सब्रह्मचारिणः–योऽयं विष्णुः, स वा एकस्त्रिधा'** इति।

तमेनं पुरुषं हृदयस्थं ज्योतिस्वरूपं चाभिधत्ते श्रुतिः—

**'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्।**
**अधो निष्ठ्यापि तस्यान्ते नाभ्यामुपरि तिष्ठति।।**
**ज्वालमालाकुलं भाति विश्वस्यायतनं महत्'**।।

इत्युपक्रम्य,

**'तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तताः।**
**सन्तापयति स्वदेहमापादतलमस्तकः'**।।

इत्युक्त्वा,

'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा।
नीवारशुकवत्तन्वी पीताभा स्वस्त्यणूपमा।।
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः'।।

इत्युपसंहरति। एनमेवार्थं कविरप्याह—

'हृदयस्थमनासन्नमकामं त्वां तपस्विनम्।
दयालुमनघस्पृष्टं पुराणमजरं विदुः।।
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम्।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये'।।

(रघु. १०.१९,२३) इति।

'योगात्स चान्तःपरमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम' इति च। 'स हि देवः परं ज्योतिः' इति श्रुतिरपि कटाक्षयति अर्थममुम्।

अपि च रघौ दशमे—

'रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः'।। (रघु. १०.१७)

इति परमपुरुषस्य सत्यस्वरूपतां प्रतिपादयति। तथा हि सत्यं नाम तत्, यत् त्रिषु कालेषु न रूपविपर्ययं गच्छति। यथा च स्वतो मधुरं जलमेकरसमपि तत्तद्देशेषु रसान्तराणि प्राप्नोति, एवं स्वतोऽसर्वकर्मा असर्वरसश्च सः परमात्मा सर्वकर्मा सर्वरस इति श्रुत्या अभिधीयते। कुत इति चेत्—उपाधिकृतोऽयं व्यवहारो न स्वत इति ज्ञापयितुम्। सर्वथा अविक्रिय एव सत्यस्वरूपः स इत्यधिगम्यते। अत एवोक्तम्—'त्वमविक्रियः' इति।

अपि च एनमेवान्तर्यामिणं ब्रवीति—

'या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसम्भवा।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम्।। (कु.सं. ६.२१)
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो'।। इति।

तथा चेदानीमालोचनीयमवशिष्यते यद् य एवं सत्यानन्दज्योतिरन्तर्यामिरूपेण प्रतिपादितः पुरुषः, सोऽयं किं जीवात्मनो भिन्न उताभिन्न इति। कुमारसम्भवे तृतीये सर्गे—

**'मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम्।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम्'।।**

(कु.सं. ३.५०) इति।

नवभ्यो द्वारेभ्यो निवर्तितसञ्चारं समाधिना वशं गतं मनो हृदि व्यवस्थाप्य क्षेत्रविदः = जीवात्मानो यं = आत्मानम् अक्षरम् = अविनाशिनं विदन्ति तमात्मानम् आत्मन्यवलोकयन्तमित्यर्थः। **'स्वातिरेकेण परमात्मनो भावाद् इति भावः'** इति मल्लिनाथः।

अपि च—

**'योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम्।**
**अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः'।।** (कु.सं. ६.७७) इति।

अत्र क्षेत्राभ्यन्तरवर्ती जीव एव स्यात्। तथा चानावृत्तिभयपदत्वं तु जीवस्य नोपपद्यत इति विरोधः समुल्लसति। यदि जीवपरमात्मनोर्वस्तुत ऐक्यमभ्युपगम्येत तर्हि विरोधपरिहारः शक्यकार्य इति हेतोर्जीवपरमात्मनो-रभिन्नत्वमेवाभिमतं मतं कालिदासस्येति मयाध्यवसीयते। एष एव **'स ते दुहितरं साक्षात् साक्षी विश्वस्य कर्मणाम्'** इत्यनेन सर्वकर्मसाक्षित्वेनाभिहितः। अत एव जीवात्मगता दोषास्तदभिन्नत्वेऽपि परमात्मनि न सङ्क्रामन्ति।

इदन्त्ववश्यमेवावधारणीयं यत् कवेरस्य कस्मिन् मते अभिनिवेश इति निःशङ्कं निर्णेतुं न पार्यत इति। यावता शङ्करभगवत्पादेभ्योऽपि पूर्वं विरचिता औपनिषदर्थप्रतिपादका ग्रन्था उपलभ्येरन्, तावता भवितव्यमेवानेन विषयेणान्धकारे। तत्र तत्र परस्परविरुद्धतया दृश्यमाना उपनिषदस्तथा स्मृतीश्च एकवाक्यताप्रापणाय विरोधपरिहाराय चासीद् भगवत्पादानामवतारः। अतः प्रागेवाचार्योदयस्य सत्स्वप्यद्वैतविशिष्टाद्वैतद्वैतादिषु मतेषु तेषां विशिष्टं रूपं तत्तदाचार्योदयानन्तरमेवाजनीत्यत्र नास्ति संशयः। अत एव कालिदासप्रबन्धेषु तत्र तत्र दृश्यन्त एव सांख्यादीनामप्यभिप्रायाः। भगवत्पादैरेवाङ्गीकृतं यत् सांख्यानां योगिनां च मतेषु प्रायो दृश्यन्तेऽद्वैतभावाः। 'अथ तत्र भ्रान्ताः केचन निःश्रेयससाधनमिति मन्वानाः सांख्यादिषु प्रवर्तेरन्, अनर्थं च गच्छेरन्नित्य-स्माद्धेतोस्तेषां मतानि सविस्तरं खण्ड्यन्ते' इति च प्रतिज्ञातं तैः। तस्माद् अनयैव भ्रान्त्या कालिदासोऽप्यौपनिषदर्थविचारावसरे सांख्यादीनां मतान्यपि कुत्रचिदनुसृतवान् स्यादित्यहमाकलयामि। अतो यावच्छङ्करीयवेदान्तविकासः साध्ववगतस्स्यात्, तावत् सर्वमतानुकूल एवैष च गृह्यताम्, नैतदधिकृत्य विचारः पण्डितान् बाधेत इत्यहं चिन्तयामि। अथ च यच्छ्रीमद्भी

रामचन्द्रदीक्षितैः सांख्यमतानुरूपव्याख्यानावसरे मल्लिनाथादिषु पराक्रान्तं तत्तत एव ग्राह्यमिति। तेषां 'कालिदासीयं दर्शनम्' नामा लघु-निबन्धः 'जर्नल् आफ् ओरियण्टल् रिसर्च्' इति पत्रिकायां प्रकाशितः।

रघुवंशे कालिदास एव दर्शयति सर्वेषां मतानां गम्यमेकमेवेति। तथा च रघौ—

**बहुधाप्यागमैर्भिन्ना पन्थानस्सिद्धिहेतवः।**
**त्वय्येव निपतन्त्योघाः जाह्नवीया इवार्णवे।।** (रघु. १०.२६) इति।

उक्तं चान्यैः कविसहृदयैः—

**'त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।**
**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव'।।**
(शिवमहिम्न. ७) इति।

एवञ्च लक्षिते निर्गुणब्रह्मस्वरूपे तस्य सगुणस्वरूपाकाङ्क्षाप्युदेति। यतो निर्गुणस्वरूपं हि अवाङ्मनसगोचरम्, नोपासितुं न वा भावयितुं शक्यम्। तथा च कविराह—

**'अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम्।**
**स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते।।**
**साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा।**
**प्रसीद कथयात्मानं न धियां पथि वर्तसे'।।** (कु.सं. ६.२२) इति।

श्रुतिरप्याह—**'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'** इति। अथ च—**'नाहं मन्ये सुवेदेति नो न वेदेति वेद च। अविज्ञातं विजानतां विज्ञातमविजानताम्'।।** इत्यपि।

आह च पुष्पदन्तः—**'अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि'** इति। अतो विना वाक्यान्तरोपरोधं निर्गुणं ब्रह्म भावयितुमशक्यमिति सगुणमप्येष कविराज उपास्ते।

'तथापि भक्तिस्तरुणेन्दुशेखरे' इति न्यायेन सर्वासु सगुणब्रह्ममूर्तिषु समभक्तिरप्ययं कविर्विश्वात्मके अष्टमूर्तौ च कमप्यभिनिवेशविशेषं प्रकाशयत्येव। तथा हि मालविकाग्निमित्रे—

**'एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यस्स्वयं कृत्तिवासाः**
**कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम्।**
**अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः**
**सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः'।।**

(मालविकाग्नि. १.१) इति।

**'अवेहि मां किङ्करमष्टमूर्तेः'** इति च। एवं क्रियासमभिहारेण नैकवारं स्मृतस्याष्टमूर्तिस्वरूपस्य मूर्तीर्विवृणोति—

**'या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री**
**ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।**
**यामाहुस्सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः**
**प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः'।।**

(अभि.शा. १.१) इति।

अपि च—

**'द्रवस्सङ्घातकठिनः स्थूलस्सूक्ष्मो लघुर्गुरुः।**
**व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु।।**
**उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम्'।।**

(कुमार. २.११-१२)

**'प्रत्येकं विनियुक्तात्मा'** इत्यादिभिर्बहुभिश्श्लोकैर्विश्वात्मत्वमपीश्वरस्य प्रकाशयति।

**'जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।**
**जगदादिरनादिस्त्वं जगदीशो निरीश्वरः।।**
**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे।।** (कुमार. २.९-१०)
**त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः।**
**वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम्।।** (कुमार. २.१५)
**सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः।**
**सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक्'।।** (रघु. १०.२०)

इत्यादयः परःशतं विद्यन्ते श्लोकाः, यैः सर्वज्ञं सर्वशक्तिमच्च सगुणं ब्रह्म उपास्यतया प्रतिपाद्यते। अथ च तत्र विरोधस्य प्रस्फुटत्वात् तद्विरोधपरिहाराय सकलगुणरहितमेव स्वरूपमात्मन इति तत्त्वमप्याविष्कृतं भवति।

कृतमेतेन कालिदाससूक्तिषु वेदान्तभावगवेषणेन। यतः श्रीमन्तोऽमलानन्दश्रीपादा एतदीयं मेघसन्देशश्लोकमेकं लौकिकस्मृतेरुदाहरणत्वेन दर्शयन्ति। तथा हि ब्रह्मसूत्रेषु पठ्यते—**'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च'** इति। अत्र सूत्रे स्मृतिशब्दस्य लौकिकी स्मृतिरित्यर्थमाचक्षते वाचस्पतिमिश्राः। सा च लौकिकस्मृतिः कालिदासीया इत्यमलानन्दाः। अत्रायमवधार्योंऽशः। स्वर्गादिसाधनैः पुण्यकर्मभिः स्वर्गं गताः स्वर्गानुभवसमाप्तिसमये किञ्चिच्छिष्टेन तेनैव पुण्यकर्मणा प्रत्यावर्तन्त इत्येकदेशिनां मतम्। कवेश्च श्रीविशालां विशालां स्वर्गतुल्यां वर्णयितुं मनीषा। अतो मतमेतदेकदेशिनामाधारीकृत्योत्प्रेक्षितं कविना—

**'स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां**
**शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्'**। (मेघदूतम् १.३२)

इति विशालावर्णने। यद्यप्यत्र सिद्धान्ते एकदेशिनामिदं मतं नाङ्गीकृतम्, तथाप्येकदशिनां मतानुरोधेन कालिदासेनेत्थमुत्प्रेक्षणं तस्यैतस्योत्प्रेक्षणस्य स्मृतित्वेन सादरं शास्त्रविद्भिरङ्गीकरणं कवेरस्य प्रबन्धेषु वेदान्तभावभूयस्त्वं व्यञ्जयत एव। अर्थोऽयं सङ्गृहीतः कालिदासश्लोकानुकारिश्लोकविरचनाग्रहैः श्रीमद्भिरमलानन्दैः—

**'वेदैर्गीतां सुकृतशकलैः स्वर्गिणां भूमिभागे**
**भोगप्राप्तिं कथयति पुरीं वर्णयन् कालिदासः।**
**स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां**
**शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्'**।। इति।

कथ्यते च विद्वद्भिर्यज्जीवन्मुक्तेनोदासीनेन केवलं सर्वे रसाः सर्वात्मना वर्णयितुं शक्यन्त इति। अतश्च स्वयं जीवन्मुक्तः कविः कालिदासः स्वीयेषु काव्येषु सर्वेषु बहून् वेदान्तविषयान् प्रत्यपादयदिति प्रतिपादितं मया। येऽत्र गुणा ते ग्राह्याः। ये च दोषाः सदयं ते मर्षणीया इति साञ्जलिबन्धं सहृदयान् प्रार्थये। इदमपि चास्तु—

**'वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी**
**यस्मिन्नीश्वर इत्यनन्यविषयश्शब्दो यथार्थाक्षरः।**
**अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते**
**स स्थाणुस्स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः'**।।

(विक्रमो. १.१) इति।

●

# मदुपज्ञं संस्कृतवाङ्मयम्

**प्रो. मिश्रोऽभिराजराजेन्द्रः**

पूर्व-कुलपतिः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणस्याम्



कतिपयदशकपूर्वमस्मन्मित्रवर्यैराचार्यराधावल्लभत्रिपाठिभिः सागर-विश्वविद्यालयेऽर्वाचीनसंस्कृतवाङ्मयमधिकृत्य काचित् शोधसङ्गोष्ठी समायोजिताऽभूद्यस्यामहं स्वकाव्ययात्राविषये किमपि वाचिकं प्रस्तोतुं सप्रणयमनुरुद्धः। इदम्प्रथमतया तत्रैव मया स्वकाव्ययात्रामधिकृत्य किञ्चिद्व्याहृतम्। कथमबोधविक्लवे शैशवे जनन्या निर्भर्त्सनं श्रुत्वा स्वपितृहीनताऽनुभूता मया, कथं च सैव निर्भर्त्सनपीडा मां गाढगाढं चिच्छेद, अवसरञ्चानुकूलमवाप्य कथं सा काव्यीभूय बहिरागतवतीति सर्वमपि वृत्तं मयाऽऽत्मप्रामाण्येनैव वर्णितम्। आलेखेऽस्मिन्मया सशपथमिदमपि रहस्यं प्रकाशितं यन्मल्लेखनमखिलमपि पराम्बानुकम्पामूलमेव भवति। यतो हि, प्रायेणाऽहमकस्मादेव लिखामि। विशालकलेवरं ग्रन्थमपि द्वित्रैः पञ्चषैर्वा दिवसैः परिसमाप्य, भेक इव भूयोऽपि गभीरधरित्रीरन्ध्रे क्वचिन्निलीय निर्भरं स्वपिमि।

अयमालेखः सर्वेभ्यः पाठकेभ्योऽतीव रुचिकरो जातः। तदवेक्ष्य मयाऽपरमपि निबन्धद्वयं प्रणीतम्—मदीया कथायात्रेति, मदीया नाट्ययात्रेति च। सर्वेऽपीमे शोधलेखाः पश्चात्प्रकाशितेषु काव्यकथानाट्यग्रन्थेषु भूमिकारूपेण प्रकाशिता अभूवन् सहृदयपाठकलाभदृष्ट्या[१]।

सकृत्पुनस्तादृश एव कश्चिदवसरः सम्प्राप्तोऽस्मत्कुटुम्बिरत्नभूतानां विद्वद्धौरेयश्रीकुटुम्बशास्त्रिणां सुरभारतीकुलपतीनां कृपया। यथाऽहमस्मिन् विपश्चित्समवाये नासीरे प्रतिष्ठापितः प्रख्यापितः समज्ञोत्तुङ्गशिखरेऽधिरोपितः

---

१. मदीया काव्ययात्रेति श्रुतिम्भरायां (१९८९), मदीया नाट्ययात्रेति चतुष्पथीये (द्वितीयसंस्करणे, २००४), मदीया कथायात्रेति च शास्त्रालोचने (१९९४) भूमिकारूपेण प्रकाशिताः।

स्निग्धहृदयैः सुहृद्वर्यैस्तत्सर्वं स्मृत्वाऽमन्दमन्दाक्षमप्यनुभवन् स्वसौभाग्यस्य परां काष्ठामनुभवामि।

मत्साहित्यसंरचनाविषये साम्प्रतिकसाहितीसूत्रधारैरत्र पुष्कलमुक्तम्। नतेन मूर्ध्ना समेषां सुहृज्जनानां प्रीतिपुष्पमाल्यं गृह्णामि। सप्रणयमनुभवामि च यदेतत्सर्वं मत्कृते पुरस्कारकल्पं पारितोषिककल्पं वा। यतो हि स्वकवितामाध्यमेन यथा मयाऽधुनातनाः साहित्यकारा वशंवदा अवशंवदा वा, स्निग्धा अस्निग्धा वा, प्रत्यक्षं परिचिता अपरिचिता वा संस्मृताः, प्रतिष्ठाधुरमधिरोपिता वा, तदन्यत्र नैव दृश्यते साङ्गोपाङ्गतया। श्रुतिम्भरायां लिखितं मया—

प्रागल्भ्यं काश्यपोऽस्याः प्रणतिपरिमितो बच्चुलालोऽपि मानः
कारुण्यं श्रीनिवासः स्मितचटुलकलाभास्करो वल्लभोऽङ्कः।
रोषः कान्तो रमाया निभृतरसकथा दीक्षितव्यूढपुष्पा
लावण्यञ्चाभिराजो जयति नवनवा संस्कृता वाग्वधूटी।।

विद्योत्तमानाटिकायाः प्रस्तावनायां सूत्रधारमुखेन भूयोऽपि प्रस्तावितं मया—

वैदग्धीं तनुते सनातनकविर्लोकव्यथां श्रीरथः
प्राचार्यस्स च बच्चुलाल उभयीं वृत्तिं समं गाहते।
सौशब्द्यं कविभास्करश्शबलतां गुम्फत्यलं वल्लभो
माधुर्यं सुकुमारतां पुनरहो युङ्क्तेऽभिराजीसुतः।।

मृगाङ्कदूताख्येऽभिनवसंविधानके खण्डकाव्ये प्रायेण पञ्चाशन्मिताः समवयस्का वयोवृद्धा वा संस्कृतसाहित्यकारा मया प्रतिपाद्याङ्गीकृत्य यथाप्रसङ्गं संस्मृताः। पूर्वमृगाङ्के मृगाङ्को बालीद्वीपाद् धनुष्कोटिं यावद्यात्रां सम्पाद्य भारतमागच्छति। ततश्चोत्तरमृगाङ्केऽसौ तत्तन्नगरमासाद्य कुशलवार्ताभिर्नायक-(अभिराजराजेन्द्र)सुहृद्वरान् परितोषयति। प्रसङ्गेऽस्मिन् तिरुवनन्तपुर-मद्रास-तिरुचिरापल्ली-श्रीरङ्ग-तञ्जावुर-पाण्डीचेरी-पुरी-कलिकाता-गुवाहाटी-पटना-जबलपुर-सागर-उज्जैन-भोपाल-इन्दौर-दिल्ली-जयपुर-अहमदाबाद-बडौदा-मुम्बई-कानपुर-लखनऊ-गोरखपुर-वाराणसी-इलाहाबादप्रभृतिनगरेषु कृतवसतीनां कविवशंवदानां समादृतानां वा साम्प्रतिकसाहित्यकाराणां काव्यमयी चर्चा

सन्दृश्यते। एवं हि मृगाङ्कदूतेन सहैव समेषामेतेषां साहित्यकाराणामप्यस्तित्वं शाश्वतिकं सञ्जातम्।

सद्यः प्रकाशितेऽभिराजयशोभूषणाख्येऽभिनवकाव्यशास्त्रेऽपि प्रायेणाशीत्यधिकशतमितान्युदाहरणपद्यानि विंशशताब्दोत्पन्नकविविरचितान्येव समुद्धृतानि मया। तत्राशीतिमितानि पद्यानि तु प्रायेण ममैव; परन्तु शतमितानि पद्यान्यन्येषां समवयस्कानां ग्रन्थेभ्य एव मयाऽऽहृतानि। एवं हि, संस्कृतरचनाकर्मणि व्यापृताः प्रायेण सर्वेऽपि मूर्द्धन्याः कवयः कथाकारा नाट्यकाराः समीक्षकाश्च येन केनापि मिषेण प्रसङ्गेण वाऽभिराजरचनासु प्रतिष्ठास्पदीकृता दृश्यन्ते।

मत्काव्यप्रणयनस्येयमेव प्रकृतिः। प्रायेण प्राक्तनाः सर्वेऽपि कवयः समकालीनानां विषये मौनं भजन्ते। परवर्तिनः सुभाषितकारा निर्भरं विज्ञापयन्ति यदिमे कवयोऽमुकस्य भूपते राजसभायामासन्। कल्हणोऽस्मान् सूचयति यत्—

मनोरथः शङ्खदत्तश्चटकः सन्धिमाँस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः।।

दीनारशतलक्षेण प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः।।

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः।।

कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्।। (राजतरङ्गिणी)

समवयस्कानां साहित्यकाराणां विषये बृहतीयं सूचनाऽवाप्यते महाकविकल्हणप्रामाण्येन, तथापि सर्वेऽप्येते कवयो मिथो विज्ञापनविषये मौनमेव भजन्ते। न वामन उद्भटं नाम्नाऽपि सङ्केतयति न चाप्युद्भटो वामनम्। रत्नाकरोऽपि शिवस्वाम्यानन्दवर्धनविषये नोद्घाटयति मुखम्! विचित्रा स्थितिः। संस्कृतकवयः केवलं ग्रन्थमुपनिबध्नन्ति; परन्तु स्वयुगीनसमाजं स्वयुगीनशासनतन्त्रं स्वयुगीनसाहित्यकाराँश्च न जातु परिचाययन्ति। कस्मादिदं कार्पण्यं तेषाम्? तेषामेतावतैव कार्पण्येनाद्य सर्वमपि सत्यं संशयाच्छादितं परिलक्ष्यते।

वस्तुतोऽयं निसर्गः संस्कृतकवीनां न मह्यं मनागप्यरोचत। तस्मादेव स्वोपज्ञकथासु नाट्येषु गलज्जलिकासु च पदे पदे मयाऽऽत्मविषयिणी सूचना दीयते। अनया सूचनया मत्परिचयः, मज्जीवनयात्रा, मत्सहचराः, मच्छिष्याः, मद्गुरवः, मत्प्रशंसकाः, मदकारणवैरिणः, किञ्च, मद्विषयकं सर्वमपि वृत्तं

स्फारीभवति। तेन च मद्युगीनकाव्यसमज्यायाः स्वरूपं सुष्ठु परिज्ञायते। वरिष्ठानां समवयस्कानां कनिष्ठानाञ्च सम्यक्परिचयोऽवाप्यते।

मन्मुखेनेदमाहेत्याख्यं चम्पूशैल्योपनिबद्धमात्मवृत्तं प्रातःस्मरणीयान् प्रगुरुचरणान् आचार्यबच्चूलालावस्थिमहाभागान् परिचाययति। एकचक्रनाम्नी कथानिकाऽधिराङ्गडं सङ्कलिता श्रीनिवासरथं प्रस्तौति दिवङ्गतभार्यम्। 'को विजयते नैव ज्ञातम्' इत्यस्मिन्नेकाङ्कनाट्ये निर्णायकरूपेण मदुपाध्याय आचार्यचण्डिकाप्रसादशुक्लः, डॉ. कमलेशदत्तत्रिपाठी च समुपस्थापितौ।

एवमेव पत्रसन्देशचम्पूर्वेल्जियमराष्ट्रस्य संस्कृतविद्वद्वौरेयं प्रो. शार्पेमहोदयम्, मातृशतकं मज्जन्मदात्रीं महीयसीमभिराजीदेवीम्, रामभद्रदण्डकं मद्दीक्षागुरुं तुलसीपीठाधीश्वरं चित्रकूटस्थं श्रीमद्रामभद्राचार्यचरणम्, राजीवश्रद्धाञ्जलिशतकं राष्ट्रनायकं राजीवगान्धिमहोदयम्, धर्मानन्दचरितं स्वामिधर्मानन्दचरणम्, कार्गिलशतकं कार्गिलरणवीरान्, वियोगव्याहारशतकं वियुक्तबन्धुद्वयं देवेन्द्रसुरेन्द्राभिधं जननीमभिराजीञ्च प्रगाढतमसंवेदनाभिः सम्बन्धाभिव्यक्तिभिः समुपन्यस्यति।

एतत्सर्वमपि मदुपज्ञं वाङ्मयं वेदपुराणार्षकाव्येतिहासाश्रितात् साहित्यात् सर्वथा व्यतिरिक्तमेव। वस्तुतः सर्वमिदं प्रत्यग्रं स्वयुगीनमात्मसंस्पर्शयुक्तं स्वपरिचयात्मकञ्च। यथा निर्यातयितव्यानि भवन्त्यस्माभिर्देवपितृगुरु-ऋणानि, तथैव लोक-ऋणमपि। यथा च व्रतोपवासतीर्थाटनादिधर्माचरणैर्देव-ऋणम्, वंशवृद्ध्या पितृ-ऋणम्, यावज्जीवमध्ययनाध्यापनाभ्यां गुरु-ऋणं निर्यातयितुं शक्यन्ते, तथैव लोकानुशंसया लोकानुकीर्तनेन लोकचित्रणेन वा लोकस्यापि ऋणं निर्यातयितुं शक्यत इत्यभिराजः। पूर्ववर्तिनो ये कवयः स्वयुगीनं समाजं न विज्ञापितवन्तस्तेऽद्यापि लोकाधमर्णा एव; परन्तु शूद्रकराजशेखरक्षेमेन्द्र-भोजदेवबिल्हणकल्हणादयो निश्चप्रचं लोकोत्तमर्णा ये स्वयुगीनं समाजं लोकं जनपदं राष्ट्रं वा सुष्ठु सूचितवन्तः।

'कस्मै देवाय हविषा विधेम' इत्याख्ये नाराशंसिकाव्यसङ्ग्रहे मया स्वयुगीनानाम् एकोनविंशतिमितानाम्, महात्मनां त्रिचत्वारिंशन्मितानां विपश्चिताम्, षोडशमितानां राजनेतृणाम् एकादशमितानां सत्पुरुषाणाम्, चतुर्विंशतिमितानां स्ववशंवदानाम्, चतुर्दशमितानाञ्च सिद्धदेवपीठानां प्रशस्तयो विरचय्य सङ्कलिताः। इमाः सर्वा अपि प्रशस्तयः प्रायेण मित्राणामनुरोधमङ्गीकृत्य विदुषामभिनन्दनधिया प्रणीताः। तत्रापि च मम धीः केन्द्रिताऽऽसीद् योगेश्वरश्रीकृष्णवचनेषु—

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्।। (श्रीमद्भग. १०.४१)

वस्तुतो मयाऽपि तेषु तेषु विपश्चित्तल्लजेषु महापुरुषेषु लोकनायकेषु सत्पुरुषेषु च विद्यमानाः परमेश्वरतेजोंऽशसम्भवा विभूतय एव प्रशंसिताः, न पुनस्तेषां दुर्गुणा दोषा वा। यदि तेषु मम कापि दोषबुद्धिरभविष्यदेव तर्हि प्रशस्तिप्रणयनमेव दुष्करमभविष्यत्। कविस्तु भवत्येव प्रकृत्या गुणबुद्धिः, गुणदृष्टिः, गुणप्रकृतिः। भृशमपकृतोऽप्यसावुपकारं न जहाति। स्निग्धोऽसौ, सहिष्णुरसौ। सृष्टिरक्षायै कपर्दीव सोऽपि कालकूटं निगिरति समाजरक्षायै।

तन्मयाऽपि परेषामात्मतोषाय मानवर्धनाय तदन्तःकरणविराजमान-जगन्नियन्तृविनोदाय यथावसरं तत्प्रशस्तयः प्रणीताः। ये पुनर्महात्मानो देवाश्च, ते तु वन्दनीया एव। तेषां वन्दनेन वाणी स्वीया मया धन्यतामानीता।

यथा मया प्रारम्भ एवोक्तं यत्संस्कृतजगति सामञ्जस्यस्थापनमेवाऽऽसीत् प्रथमं कविकर्मलक्ष्यम्। आ काश्मीरात्केरलं यावदा च पञ्चनदराजस्थानाद् गुवाहाटीं यावद् वितते सुरभारतीसमुपासकसमाजे सख्यं स्थापितं स्यात्, मिथः प्रत्यभिज्ञानं दृढतरं स्यात्, परस्परसम्भावनं लेखनमाध्यमेन नितरां वर्धेत— इत्येवासीन्मत्स्वप्नः। स्वप्नञ्च तं पूरयितुं मया संस्कृतपत्रिकाः काश्चन समाश्रिताः। तत्र पाण्डीचेरीतः प्रकाशितं लोकसंस्कृतम्, अहमदनगरात् प्रकाशितो गुञ्जारवः, श्रीरङ्गतः प्रकाशिता संस्कृतश्रीः, त्रिचूरतः प्रकाशिता भारतमुद्रा, जयपुरतः प्रकाशिता भारती, वाराणसीतः प्रकाशिता विश्वभाषा, तत एव प्रकाशितः सूर्योदयः, कानपुरतः प्रकाशितं पारिजातम्, हरिद्वारतः प्रकाशितो भारतोदयः, दिल्लीतः प्रकाशितमर्वाचीनसंस्कृतं महीयन्ते। प्रायेणैताः सर्वा एव प्रतिमासं प्रकाश्यन्ते। आसु सर्वास्वेव निरन्तरमहं लिखामि। द्विवर्षात्मके बालीप्रवासे, किञ्च त्रिवर्षात्मके सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय-कौलपत्यावधावपि पत्रिका इमा न मयोपेक्षिता लेखनदृष्ट्या। विगतचत्वारिंशद्वर्षेभ्य एतासु पत्रिकासु निरन्तरं लिखामि।

सहर्षञ्च विज्ञाप्यते यदिदानीं यावदेतासु पत्रिकासु मद्विरचितानि दशोत्तरचतुश्शताधिकसहस्रमितानि (१४१०) काव्यनाट्यकथागीतसंस्मरण-यात्रावृत्तादीनि प्राकाश्यमुपगतानि। तस्य च सत्फलमिदं यन्निखिलराष्ट्रे यः कोऽपि संस्कृतं जानाति, अध्येति, अध्यापयति वा, स मामभिराजराजेन्द्रमपि सुष्ठु जानाति। तस्यैव सारस्वतपरिचयस्य सत्फलमिदं यदहं विंशशताब्दी-संस्कृतकाव्यामृतं नाम काव्यसङ्कलनं प्रस्तोतुं क्षमोऽभवम्। कस्याञ्चिदप्यपरस्यां भारतीयभाषायामेतादृशं बृहत्तमं काव्यसङ्कलनं पञ्चत्रिंशदधिकशतमित-काव्यकारान्वितं प्रकाशयितुं नाशाकि केनचिदिदानीं यावत्। सङ्कलनेऽस्मिन् प्रायेण पञ्चाशन्मिताः कवयो दाक्षिणात्या एव, येषां नामाप्यौदीच्या न जानन्ति; परन्तु तैः सर्वैः सार्धं मदीयः परिचयो दाक्षिणात्यपत्रिकालेखनमाध्यमेनैव दृढीभूतः।

परमाचार्याणां काञ्चीकामकोटिपीठाधीश्वराणां श्रीमच्चन्द्रशेखरसरस्वती-पादानामप्याशिषो मया संस्कृतश्रीमाध्यमेनैव समवाप्ताः। स्वामिपादानामाज्ञया बालीद्वीपे भारतीया संस्कृतिरिति विषयमवलम्ब्य मया बालीत एव कश्चिद्दीर्घदीर्घतरो निबन्धो लिखितो यो हि वर्षद्वयं यावत्पत्रिकायामस्यां निरन्तरं प्रकाशितोऽभूत्। पश्चाच्चायमेव धारावाही दीर्घलेखो ग्रन्थरूपतां प्रपेदे।

सम्प्रति स्वोपज्ञसाहित्यसंरचनाया द्वितीयं लक्ष्यं व्याख्यातुं समीहे। तच्चासीद् युगापेक्षिसाहित्यप्रणयनम्। द्विविधाः साम्प्रतिकरचनाकाराः। एके तावत्पारम्परिकसंस्कृताध्ययननिष्णाताः शास्त्रकाव्योभयपारङ्गताः पण्डिताः, ये खलु संस्कृतेतरभाषाऽनभिज्ञाः। अपरे तावन्नव्यदृष्टयः संस्कृतेतरप्राच्यपाश्चात्त्य-भाषाविदश्चतुरस्रप्रसारा युगपदेवानेकभाषारचनाकाराः। ये खल्विमे द्वितीयसमवायसम्बद्धास्ते सुष्ठु जानन्ति यत्साम्प्रतिके संस्कृतरचनाकर्मणि किन्नाम सर्वाधिकमपेक्षितम्? यद्येकाङ्कनाट्यानि सर्वासु भारतीयभाषासु लोकप्रियतायाः शिखरमारूढानि तर्हि अर्वाचीनसंस्कृतेऽपि तेषां प्राचुर्यं स्यात्। यदि पारसीकगजलगीतिर्महीयते हिन्दीप्रभृतिभाषासु तर्हि संस्कृतकविभिरपि स्वसामर्थ्यं तद्विरचने प्रदर्शनीयम्। यद्युपन्यासाः पाठकान् प्रसह्य सम्मोहयन्ते तर्हि तादृशा उपन्यासाः संस्कृतरचनाकृद्भिरपि कल्पनीया एव। यदि मुक्तगीतानि रसिकानावर्जयन्ति तर्हि तत्रापि श्रमः करणीय एव।

लोकचित्रणशून्यं संस्कृतकाव्यमिति चेद् वदति कोऽपि स्थापितस्समीक्षकस्तर्हि कलङ्कोऽसौ प्रक्षालनीयोऽर्वाचीनैर्लोकचित्रणशबलितं साहित्यं विरच्य। पामरसङ्कथाविरहितं संस्कृतकाव्यं, शैशवचित्रणशून्यं संस्कृतकाव्यमिति वा यदि समीक्षते कोऽपि तर्हि तन्नैयून्यं सम्पूरयितुमस्माभिः प्रयतितव्यमेव।

इदमेवास्ति युगापेक्षिसाहित्यसर्जनम्। भारतेन्दुयुगे आंग्लभाषोपन्यासानां महती प्रतिष्ठाऽऽसीद् भारतवर्षे। अत एव, तद्युगीनेन कविमूर्द्धन्येन श्रीमदम्बिकादत्तव्यासेनापि प्राक्तनकथाऽऽख्यायिकापद्धतिं परित्यज्य संस्कृतेऽपि शिवराजविजयनामोपन्यासमेव प्रणीतम्। स्वगद्यकाव्यमीमांसायामसौ कृतिमि-मामुपन्यासमेव घोषितवान् संस्कृतोपन्यासस्य च सम्यक् स्वरूपं प्रास्तावीत्।

इदं लक्ष्यं प्रति ममाप्यासीद् दुर्वारमाकर्षणम्। मयाऽप्यनुभूतं यत् सहस्रद्वयवर्षव्यायते संस्कृतकाव्ये दृश्यश्रव्यात्मके शैशवचित्रणं परमार्थत एव नोपलभ्यते। शाकुन्तले रिपुदमनसन्दर्भः, मृच्छकटिके रोहसेनसन्दर्भः, उत्तररामचरिते च लवकुशसन्दर्भ इत्येवं द्वित्रा एव शैशवसन्दर्भाः समवाप्यन्ते; परन्तु शैशवस्य बृहच्चित्रणं सूक्ष्मातिसूक्ष्मं चित्रणं विविधघटनात्मकं यथार्थचित्रणं कृतेऽपि प्रयत्ने न सुखेन समवाप्यते।

इदं नैयून्यं दृष्ट्वैव मया जानकीजीवनमहाकाव्ये जानकीशैशवचित्रणं समग्रेणापि द्वितीयसर्गेण कृतम्। सीता कथं सखीभिर्वृता कालं नयति, कथं कृत्रिमपुत्रिकाभिः क्रीडति, कथं मृदाघरट्टकलीलयाऽऽत्मानमनुरञ्जयति, कथं जलसन्तरणलीलां सम्पादयति, वयस्सन्धिं स्पृशन्ती कथमसौ विलक्षणाऽनुभावि-यौवनमनुभवति, पितृभ्यां लज्जते, यौवनलक्षणं प्रत्यक्षमक्षिलक्ष्यीकुर्वाणा कथञ्च चाञ्चल्यं विहाय शान्तशान्ता जायत इति साभिनिवेशं मया सविस्तरं निरूपितम् इदम्प्रथमतया।

अनयैव दृष्ट्या मया लोकगीतान्यपि (Folk Songs) प्रयुक्तानि।

अनुभूतम्मया यदा ऋग्वेदात् पण्डितराजजगन्नाथं यावत्संस्कृतकाव्य-धारायां जातय एव प्रथन्ते। नाट्यशास्त्रकारस्तु महता विस्तरेण जातिं निरूपयति नाट्यशास्त्रे। कविकुलगुरुः कालिदासोऽपि स्वान्तःसुखाय ता जातीः प्रयुनक्ति स्वोपज्ञत्रोटके विक्रमोर्वशीयाभिधे। उर्वशीविरहोन्मत्तः पुरूरवाः करिणं मयूरं पर्वतं राजहंसञ्चाभिलक्ष्य यत् किञ्चिद् गायति तत्सर्वं लोकगीतमेव। वस्तुतो लोकसंवेदनाश्रितमेव गीतं भवति लोकगीतम्।

प्रबन्धकाव्याङ्गभूते वृत्ते शिष्टसंवेदना महीयन्ते, नाट्यधर्म्यः संवेदनाः प्रथन्ते; परन्तु जातिषु लोकसंवेदना एव प्राणत्वेनावतिष्ठन्ते।

एवं हि लोकगीतानां प्रसङ्गो नास्त्येव कोऽपि नवावतारः, नवोपक्रमः, नूतनप्रस्थानं वा। वस्तुत आनन्दवर्धनाभिमतं ध्वनितत्त्वमिव, लोकगीततत्त्वमपि वेदयुगीनमेव काव्यतत्त्वं प्रतिभाति; परन्तु विस्मृतिगर्भे निपतितमिदं काव्यतत्त्वं प्रवाहाद्बहिर्भूतम्।

अत एव साम्प्रतिकेऽभिनवसंस्कृतकाव्ये मया लोकगीतानि सयत्नमवतारितानि। किञ्च, प्रायेण समेषामेव लोकगीतानां शीर्षकाणि संस्कृतमयान्येव, यथा—पचरा=प्रचारः प्रचरणं वा, नकटा=नक्तकम्, सोहर=सूतगृहम्, बरुवा=वटुकम्, उठान=उत्थापनम्, कजरी=कजरी, चैता=चैत्रकम्, फाग/फगुवा=फाल्गुनिकम्, रसिया=रसिकम्, चौताल=चतुस्तालम्, लांगुरिया=लाङ्गलिकम्, कँहरवा=स्कन्धहारीयम्, उँटहारा=औष्ट्रहारिकम्, रोपनी=रोपणम्, बोवनी=वपनम्, निरवाही=निर्वहणम्, सरवन=श्रावणिकम् इत्येवमादि। वस्तुतो द्राघीयसीयं परम्परा लोकगीतानाम्। बञ्जारा-चनैनी-रागिणी-पण्डवानी-अभङ्ग-बाउल-प्रभृतीनि सर्वाण्यपि गीतानि लोकगीतान्येव, लोकवृत्तसमाश्रितत्वात् लोकाभिरुचिसम्पोषकत्वात् लोकसंवेदनाश्रयत्वाच्च।

तद्दृष्ट्यैव मयैतानि लोकगीतानि स्वोपज्ञेऽभिराजयशोभूषणे सलक्षणोदाहरणं काव्यशास्त्रीयप्रतिष्ठापदमधिरोपितानि। अर्वाचीनसंस्कृत-

कवितायामेतेषां लोकगीतानां प्रयोगेण जनाभिरुचिर्वर्धिष्यते, संस्कृतकवितां प्रति पाठकानामात्मीयभावोऽपि दृढतामुपैष्यति। काव्यं भवति दर्पणकल्पं यस्मिन् शिक्षिता अशिक्षिताः, पण्डिता अपण्डिताः, शिष्टाः पामराः सर्वेऽप्यात्मच्छविं पश्यन्ति; परन्तु यस्मिन् काव्यदर्पणे केवलं नागरसंस्कृतिरेव प्रतिबिम्बिता भवति, लोको न पश्यति स्वमुखच्छविं, म्रियते तत्काव्यम्।

अर्वाचीनसंस्कृतकाव्यं भवेत्सार्वजनिकं काव्यमिति कृत्वा लोकसंवेदनाश्रितत्वं तस्य महनीयं प्रतीयते।

यथैव मया लोकसंवेदनाश्रितानि श्रुतिमधुराणि गीतानि विरचितानि, तथैव एकाङ्कनाट्यानां लोकप्रियतामवेक्ष्य नवनवेतिवृत्तविलसितानि लघुनाट्यानि प्रणीतानि। प्रायेण सर्वेष्वेव लघुनाट्येषु कश्चिदभिनवः प्रयोगो मया प्रदर्शितः। क्वचित्कार्यालयसंस्कृतिः, क्वचिदनियन्त्रितपरिवारसमस्या, क्वचिदैन्द्रजालिक-वृत्तम्, क्वचित्कन्याविवाहसन्दर्भः, क्वचिदपराधवृत्तम्, क्वचिद्भिक्षाटनकौशलम्, क्वचिद्भ्रष्टराजनीतिः, क्वचित्प्रतिभावमानना, क्वचिद्वैदुष्यतिरस्कारः, क्वचिच्छिक्षा-दुर्दशा, क्वचिच्च न्यायालयविनिपात इति नैके साम्प्रतिकाः समाजोपहासकरा अपसंस्कृतिसाक्ष्यभूता भावा मया स्वोपज्ञेषु लघुरूपकेषु प्रदर्शिताः।

सर्वत्रापि वर्तत एव मदीयं किञ्चिदभिनवं योगदानम्—संवेदनाविषयकं शिल्पविषयकं वा। वस्तुतो मौलिकोत्प्रेक्षां विना, नूतनयोगदानं विना नाहं किञ्चिल्लिखामि। पिष्टपेषणादलेखनमेव वरमित्यहं मन्ये।

नूतनप्रस्थानपक्षधरोऽहम्। अनभ्यस्तमार्ग एव मह्यं रोचते। अत एव गीतेषु, लघुनाट्येषु, कथानिकासु, लघुकथासु च—सर्वत्रापि प्रतिपदं तन्नूतनत्वं परिलक्ष्यते। मत्तवारण्या गलज्जलिकाभ्यः सर्वथा व्यतिरिच्यन्ते शालभञ्जिकाया गीतयः। तां व्यतिरिक्ततां प्रत्यक्षं निर्वर्ण्यमानां सम्यग् रेखाङ्कयति मम सुहृद्वर्यो राधावल्लभः शालभञ्जिकाभूमिकायाम्। देवर्षिकलानाथशास्त्रिवर्योऽपि मत्तवारणीभूमिकायां न केवलं मत्तवारणीगजलगीतीनां वैशिष्ट्यमात्रं समीक्षतेऽपि तु पारसीकगजलसंविधानकातिशायित्वान्यपि कानिचित् सम्प्ररोचनं विशदयति।

सम्प्रति प्रकाश्यते हविर्धानी। अस्यां गलज्जलिकासङ्कलनायां परिणतवयोभावा निवृत्तिप्रधाना द्रष्टुं शक्यन्ते। वस्तुतस्तु यथोदीयमानः, समुदितः, माध्याह्निकः, आपराह्णिकोऽस्तोन्मुखश्च सूर्यः स्वयमेव परिवर्तते, क्रमेण च सुखावलोकनीयः, कष्टावलोकनीयः, दुर्निरीक्ष्यः, मन्दप्रभतया भूयोऽप्यधिसन्ध्यं सुखावलोकनीयो जायते, सर्वथा तथैव कविरपि शनैः शनैः स्वयमेव परिवर्तते।

हविर्धान्यामहमपि परिवर्तित एव लक्षिष्ये। तत्र प्रमाणभूताः काश्चन पङ्क्तयः—

प्रत्यहमनर्थशङ्का सततं विपन्नवीना
जीवनगतिर्नु जाता गौरिव समासमीना।
क्वासीन्ममावकाशोऽप्याराधनाय लक्ष्म्याः
क्षणमपि न शारदा मां तत्याज सम्मुखीना।।

स्वाश्रूणि मार्जयित्वा श्रोष्यामि दैन्यगाथाम्
मत्तोऽप्यहो दुरन्ता प्रतिभाति तावकीना।

यथा वा, बुद्बुदोऽहं नश्वरोऽहं भङ्गुरोऽहम्
यादृशोऽहं योऽप्यहं ननु भास्वरोऽहम्।।

प्रातिभं कविसर्जनं नाद्यापि शून्यम्
सिद्धपदबन्धोऽभिनवघटखर्परोऽहम्।
इदम्प्रथमतया प्रणीतं यत्प्रणीतम्
देवतानां वाचि नव्ययुगन्धरोऽहम्।।

अर्जितानि यशांसि चिरमध्यापितं भोः
शम्भुगिरिजाप्रोल्लसितहृन्मन्दिरोऽहम्।
सर्वविधतृष्णाविनिर्मुक्तोऽभिराजः
चिदानन्दनिमज्जितोऽशुभजित्वरोऽहम्।।

पूर्यते भूलोकवासावधिरिदानीम्
गन्तुमात्मकुटीरमेव कृतत्वरोऽहम्।।

प्रियतमां प्रति प्रियतमस्य वाचिकमिति गजलशब्दस्यार्थः। खुशरो-गालिब-मीरशाहमुबारक-यकरंग-वली-सौदा-जौक-दाग-हाली-मोमिन-प्रभृतिभिर्गजलकारैस्तस्मिन्नेव सन्दर्भे गजलगीतयः प्रणीताः; परन्तु परवर्तिनो गजलकारा अकबर-इकबाल-जिगर-फैज-जोश-साहिर-मजरूह-मजाज-कैफ-बशीरबद्रादयः पूर्णरूपेण परिवर्तिता जाताः। ते सर्वेऽपि शतमितानि जगत्सत्यानि गजलमाध्यमेनोपन्यस्तवन्तः। मयाऽपि संस्कृतगलज्जलिकानां क्षेत्रं विस्तीर्णं कृतम्। तत्र सहृदया एव प्रमाणम्।

प्रत्यक्षसंवाद एव गलज्जलिकाजीवातुतत्त्वम्। यथाऽऽह मौलाना हसरतमोहानीमहोदयः—

शेर दर अस्ल है वही हसरत।
दिल में, सुनते ही जो उतर जाये!!

तदेव ममापि[१] चिन्तनं स्वगलज्जलिकाविषये—

झटित्यवभासते बुद्धौ विशति हृदये रसज्ञानाम्।
मसृणमधुराभिराजीयां गलज्जलिकायतिं जाने।। (मधुपर्णी)

अन्ते च, सविनयं प्रस्तोतुं समीहे स्वकीयं सैद्धान्तिकं योगदानम्। उपन्यासैकाङ्किकथानिकालघुकथाहाइकूसानेटप्रभृतय: काव्यप्रकारा वैदेशिका:। यद्यपि तत्समकक्ष्या: काव्यप्रकारा: संस्कृताचार्यैरपि व्याख्याता:। आनन्दवर्धन-भोजहेमचन्द्रादय: कथा-परिकथा-खण्डकथा-सकलकथा-पर्यायबन्धादिकाव्य-प्रकारान् विशदयन्ति; परन्तु को नु जानाति तान्?

परन्तु ये काव्यप्रकारा: पाश्चात्यपरम्परात: संस्कृतरचनायामवतीर्णास्तेषां मूलस्वरूपन्तु संस्कृतरचनाकारैर्ज्ञातव्यमेव। हन्त, तदेव ते न कुर्वन्ति। लिखन्ति कामपि यथार्थघटनाम्; परन्तु तामेव 'कथानिकां' कथयन्ति। लघुकथाया लक्षणमपि न जानन्ति; परन्तु प्रकाशितं कथासङ्कलनं ते लघुकथासङ्कलनं घोषयन्ति। संस्था अपि काश्चन एतादृशं मौढ्यमाचरन्ति।

वस्तुत: सिद्धान्तविषयिणी भ्रान्ति: साहित्यकारमुत्पथं विधत्ते। लघुकथास्वरूपं सम्यक्तया विशदीकर्तुमेव मया चित्रपर्ण्या भूमिकायां सारवती सामग्री प्रदत्ता, लघुकथाश्च पञ्चषष्टिमिता: प्रणीता:। तथापि पश्यामि यज्जना: स्वच्छन्दबलीवर्दा इव स्वाभिरुचिमार्गेणैव हिण्डन्ते। अभिराजयशोभूषणे सर्वेऽपीमे सिद्धान्ता निर्मितितत्त्वोन्मेषे मया सङ्कलिता:। नव्यैस्तत्सर्वमधीत्यैव रचनाकर्मणि स्वात्मा नियोक्तव्य:।

स्थापितानामस्माकं सर्वोऽप्यध्यवसायो नव्यानां कृत एवेतिमात्रं विनिवेद्य सम्प्रति विरमामि।



१. श्रुतिं सज्जय सखे! शृणु सावधानेनैव मनसा
इयं गीतिर्गभीरार्था त्रिवेणीकविवराणाम्।। (शाल., पृ. २३६)
ध्रुवं वच्म्यहं मादृशा: सन्त्यनेके
परं नास्म्यहं कस्यचिद्वा सदृक्ष:।। (शाल., पृ. ११८)
सोऽहमस्मि त्रिवेणीकविर्नूतन:
मामवेहि प्रगीतिप्रसिद्धप्रथम्।। (शाल., पृ. ११०)

# प्रातिशाख्येषु ऋऌवर्णयोः स्वरूपविमर्शः*

**प्रो. श्रीकिशोरमिश्रः**

सदस्य-सचिवः

उज्जयिनीस्थ-महर्षिसान्दीपनिवेदविद्याप्रतिष्ठानस्य



पाणिनिनये स्वरवर्णेषु ऋकारऌकारौ स्वरत्वेन परिगण्येते। निरपेक्षस्य (आश्रयहीनस्य) ध्वनेर्हेतुत्वेन स्वराः 'स्वयं राजन्त इति स्वराः' इत्थं परिभाष्यन्ते। एतावपि ऋकारऌकारावुभौ स्वरत्वेनाश्रयनिरपेक्षध्वनिरूपौ स्वयं भवतः; परन्तु ध्वनावत्र क्रमशो रेफस्य लकारस्य च संश्लेषोऽस्तीति चतुरध्यायिकायां प्रतिपाद्यते। संश्लेषो नाम विभाज्यं सम्मिश्रणम्। अत्र ऋऌवर्णयोर्ध्वनौ रेफलकारयोर्मात्राया विचारो विधातुं युज्यते, क्रियते च; किन्तु तावतीं मात्रां पृथक्कृत्यावशिष्टेन तस्य स्वरध्वनेः स्फुटीकरणमशक्यम्। तथैव ऋऌवर्णयोः संश्लिष्टां मात्रामपाकृत्य रेफलकारयोरुच्चारणमपि कर्तुं न शक्यते। यतो हि रेफलकारयोः स्वतन्त्रतया व्यञ्जनत्वादर्धमात्राकाल उच्चारणार्थं स्वभावतोऽपेक्ष्यते; किन्तु ऋऌवर्णयोरवस्थितयो रेफलकारयोर्मात्रा अर्धमात्रातोऽपि न्यूना भवति।

तैत्तिरीयप्रातिशाख्ये (१३.१६) ऋवर्णः पृक्तस्वरतया सङ्केतितः। वाजसनेयप्रातिशाख्येऽपि ऋऌवर्णसम्बन्धिनी चर्चा विभिन्नेषु प्रकरणेषु दृश्यते[१]। तेषामनुशीलनेनायं सारः समुद्भवति—

१. ऋऌवर्णावुभावपि स्वरवर्णौ स्तः। प्रत्येकं च भेदत्रयं ह्रस्वदीर्घप्लुताख्यं भवति[२]।

२. उभयोः स्वरवर्णयोर्भेदत्रये सत्यपि वाजसनेयशाखायां प्लुतवर्णानां संख्या नियता परिगण्यते[३]। अतः प्लुतावृऌवर्णौ संहिताग्रन्थे न स्तः।

---

*. दिल्लीविश्वविद्यालये (Vadic Sanskrit : A Linguistic Approach' Seminar (18-19 feb. 2000) 18.02.2000 तमे दिनाङ्के पठितोऽयं निबन्धः।

१. संस्पृष्टरेफमृवर्णम् (च.अ. १.३७), सलकारं ऌवर्णम् (च.अ. १.३९)।

२. बा.प्रा. ८.३....ऋ इति ॠ इति ऋ३ इति ऌ इति ॡ इति ऌ३ इति।

३. वा.प्रा. २.५०-५३ या.शि.।

३. ऋवर्णस्य ह्रस्वदीर्घरूपे उभे अपि माध्यन्दिनीये संहिताग्रन्थे विद्येते[१]; किन्तु ऌकारस्य दीर्घरूपं माध्यन्दिनीयके नास्ति[२]। अतः केवलं ह्रस्व एव ऌवर्णो माध्यन्दिनीयसंहिताग्रन्थे समुपलभ्यते (मा.सं. १८.११)। ऌकारस्य दीर्घरूपानुपलम्भाद् ऋक्प्रातिशाख्येऽस्य चर्चापि न दृश्यते।

४. ऋग्वेदस्य वर्गद्वयोक्तायां वर्णमालायां ऌवर्णस्याङ्गीकारेऽपि स्वरसंज्ञायामस्य स्थानं सप्रतिबन्धमेव निर्दिश्यते[३]।

५. ऋक्प्रातिशाख्योक्तसूत्रस्य त्वेवं भावो मन्तव्यो यत् स्वरेषु ऌकारो वर्तते; किन्तु स कस्यचन पदस्य प्रथमाक्षररूपेणान्तिमाक्षररूपेण वा नोपलभ्यते; अपि तु पदमध्य एव प्राप्यते। कात्यायनाचार्यस्तु ऌकारस्य पदादित्वविषये मौनमवलम्बते; किन्तु पदान्तीयो ऌकारो न भवतीति प्रातिशाख्ये स्फुटं निर्दिशति[४]। एतस्माद्धेतोर्ऌवर्णस्य सन्धिप्रसङ्गाभावात् ऌकारस्य सन्धिविधानं प्रातिशाख्ये नास्ति। ऋक्प्रातिशाख्ये प्रथमपटले तु ऌवर्णः स्वरसंज्ञान्तर्गतोऽपि न गण्यते। (ऋ.प्रा. १.१-३)

६. ऌवर्णस्य दीर्घं रूपं माध्यन्दिनीयशाखायां वर्जितमेव[५]; किन्तु काण्वशाखायामपि ऌवर्णस्य दीर्घरूपं नास्ति। अवशिष्टानां वाजसनेयशाखानां विलुप्तत्वात्तद्विषये किमपि वक्तुमशक्यमेव।

**संश्लेषस्वरूपम् (मात्राविभजनम्)**

१. सर्वसम्मतशिक्षोल्लेखेनावगम्यते यदृकारस्य ह्रस्वदीर्घप्लुतात्मकं यदपि रूपं तस्य कालगते विभागचतुष्टये आद्यन्तावंशौ स्वरात्मकौ स्तः। मध्यवर्ति अंशद्वयं च रेफव्यञ्जनात्मकं भवति। तथा चोक्तम्—

ऋकारस्य स्वरूपं हि श्लिष्टं पादचतुष्टयम्।
पादेषु तेषु विज्ञेयावादावन्ते स्वरात्मकौ।।
अणू रेफस्य मध्ये तु विज्ञेयौ व्यञ्जनात्मकौ।। इति।

२. ऋग्वेदप्रातिशाख्यानुशीलनेन[६] ज्ञायते यदेकत्र मते ह्रस्वदीर्घऋवर्णयो रेफस्य मात्रा भिद्यते। दीर्घे ऋकारे रेफस्य मात्रा अधिका विद्यते, ह्रस्वे ऋकारे

---

१. मा.सं. १८.११, १३....क्रमशः।
२. वा.प्रा. ८.३९।
३. ऋ.प्रा. वर्गद्वये ९-पदाद्यन्तयोर्न ऌकारः स्वरेषु।
४. वा.प्रा. १.८७ स्वराश्च ऌकारवर्जम् (पदान्तीया भवन्तीति प्रकरणे)।
५. वा.प्रा. ८.३९ न सन्ति माध्यन्दिनीनां ऌकारो दीर्घः......।
६. ऋ.प्रा. १३.३४, मध्ये सः।

च ततो न्यूना वर्तते; परन्तूभयत्र मध्यस्थैव रेफस्य मात्रास्ति। अत्र न्यूनाधिकविधानमृवर्णस्य मात्राविभागेनावगन्तुं शक्यते। यदि सर्वसम्मतशिक्षोक्तं चतुर्विभजनमङ्गीक्रियते चेद्दीर्घे ऋकारे मध्यगतमंशद्वयं रेफस्यास्तीति मन्तव्यम्। ऋवर्णे ह्रस्वे तु मध्यगतोऽश एक एव रेफस्यास्तीति विभावनीयम्।

३. ऋवर्णस्य ह्रस्वस्य मध्यगतेंऽशद्वये कतरोंऽशो रेफस्य विद्यत इति निर्णेतुं न शक्यते सूक्ष्मत्वात्। उच्चारणेनापि मध्यगतयोरंशयो रेफांशस्य ज्ञानं कर्तुं कठिनम्। अतस्तत्रैव ऋक्प्रातिशाख्ये द्वितीयं मतमुपदिश्यते यद् ह्रस्वे ऋवर्णेऽपि दीर्घेण ऋवर्णेन सम एव रेफांश इति। तथा चोक्तम्—

'रेफोऽस्त्यृकारे च परस्य चार्धे
पूर्वे ह्रसीयांस्तु न वेतरस्मात्'॥ इति[1]।

ऋक्प्रातिशाख्ये सर्वसम्मतशिक्षायाञ्च रेफस्य मात्राविषयकः स्थानसम्बन्धी च यो हि सङ्केतः समुपलभ्यते तथाविधो वाजसनेयप्रातिशाख्ये[2] नास्ति; परन्तु ऋऌवर्णयो रेफनिर्देशकसूत्रस्योपरिष्टाद् यत् सूत्रमुक्तम्— 'मात्रार्धमात्राणुमात्रा वर्णापत्तीनाम्' (४.१४९) इति, तेनेदं स्पष्टं ज्ञायते यत् कस्यामपि मात्रायां रेफो लकारो वास्तीति सूत्रकृद्विश्वासः; किन्तु यथा ऋक्प्रातिशाख्यकारो मात्रानिर्णये पक्षद्वयमभिधाय स्वकीयं निर्णयं न प्रख्यापयति, तथैव कात्यायनाचार्योऽपि नात्र निर्णयप्रपञ्चे विस्तारमातनोति। केवलं सामान्यनियमं निर्दिश्य विषयमुपसंहरते।

सर्वैरपि प्रातिशाख्यकृद्भिः ऋऌवर्णयो रेफलकारसंश्लेषोऽङ्गीक्रियते। संश्लिष्टस्तु वर्ण एकारवद् द्विमात्रिको भवेत्। यदि मात्राविभजने द्विमात्रिकता नापि दृश्यते चेत् तथापि एकमात्राकालादधिकः कालस्तु स्वाभाविक एव प्रतीयते। एकमात्राकालादधिककालवृद्धौ तु तस्य दीर्घत्वमापतति; परन्त्वस्याः शङ्कायाः समाहितिस्तैत्तिरीयप्रातिशाख्ये स्वतन्त्रसूत्रमुपदिश्याचार्येण विहिता[3]। तत्र च ऋऌवर्णयोर्ह्रस्वत्वं व्यवस्थापितम्। सूत्रेऽत्र पदक्रमसदनव्याख्याने शङ्केयमुत्थापिता, ह्रस्वपक्षश्च ततः प्रसाधितः[4]।

---

१. ऋक्प्रातिशाख्योक्ते (१३.३४) वचनेऽत्र उव्वटाचार्येण 'परस्य दीर्घ-ऋकारस्य' अनेन सह 'पूर्वे'पदस्य सम्बन्धो निर्दिश्यते। परन्तु ह्रस्वस्य ऋकारस्य कृते 'पूर्वे'-पदस्य द्विरावृत्तिर्नोल्लिखिता; परन्तु 'इतरस्माद्' इति पदस्य सङ्गतिर्व्याख्या च द्विरावृत्तिं विना न स्फुटतया सम्भवति। द्विरावृत्तौ सत्यां तु उक्तस्य (ऋ.प्रा. १३.३४) अर्थः स्पष्टं प्राप्यते।

२. वा.प्रा. ४.१४८ ऋऌवर्णे रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ। अत्र मात्रांशो नोपदिश्यते।

३. तै.प्रा. १.३१, ऋकारऌकारौ ह्रस्वौ।

४. तै.प्रा. १.३३, ऋकार-ऌकारयो रेफलकारस्थानत्वात् कालव्यभिचारः स्यात्, तन्माभूदिति।

**स्थानकरणविचारः**

वाजसनेयप्रातिशाख्यानुसारं ऋकारस्य जिह्वामूलस्थानं[१] निर्ऋतिश्च देवता[२]। ऋक्प्रातिशाख्येऽपि ऋवर्णस्येदमेव स्थानं निर्दिश्यते[३]; किन्तु पाणिनीयानुशासनेन ऋवर्णस्य स्थानं मूर्धा प्रतिपाद्यते।

ऋकारे रेफस्यास्ति संश्लेषः। रेफस्य जिह्वाग्रकरणमस्ति[४] दन्तमूलञ्च स्थानम्[५]। रेफस्य रुद्रो देवता[६]। अत एव ऋवर्णस्योच्चारणे दन्तमूले जिह्वाग्रसङ्घर्षः सञ्जायते।

ऌकारो दन्तस्थानीयो[७] जिह्वाग्रकरणश्च[८]। अतस्तदुच्चारणेऽपि दन्ते जिह्वाग्रसङ्घर्षो भवति। यद्यप्ययं सङ्घर्षः लकार-ऌवर्णयोः सम एव भाति, तथापि ऌवर्णे लकारस्य संश्लेषमात्रतया तद्रूपत्वं नास्ति।

ऋऌकारयोः सावर्ण्यमुपदिश्यते। अतस्तदुच्चारणेऽपि सवर्णविधानत्वात् ऌवर्णे ऋकारवदेव चञ्चलसङ्घर्षः सम्भवति। अनयोरयमेव भेदो यदृकारस्य सङ्घर्षो दन्तमूले भवति, ऌकारस्य च दन्तमध्ये।

ऋवर्णऌवर्णयोरुभयोरपि भाविसञ्ज्ञा वाजसनेयप्रातिशाख्ये उपदिश्यते[९]। एतावुभावपि स्वयं स्वरौ स्तः। वर्णसमाम्नाये अनयोः स्वतन्त्रा सत्ता, स्वतन्त्रो लिपिसङ्केतः, स्वतन्त्रश्चोच्चारणं विद्यते। तथापीमौ ऋवर्णऌवर्णौ वाजसनेयिना-मुच्चारणे रेफलकाराभ्यां सम्बद्धौ भवतः। तथोक्तं प्रातिशाख्यकृता— 'रलावृऌवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र' इति (४.१७)। अयं भावो यद् रेफलकारौ यदि स्वरादसंयुक्तावपि ऊष्मवर्णात्पूर्ववर्तिनौ भवतस्तदा ऋऌवर्णात्मकस्वरसदृशध्वनिसंयुतीभूय सैकारमुच्चारणं प्राप्नुतः। प्रतिज्ञा-परिशिष्टेऽप्युक्तोऽयं नियमः स्वरभक्तिसंज्ञया सम्बोध्यते उच्चारणदशायामिति।

●

---

१. वा.प्रा. १.६५, ऋक्कौ जिह्वामूले।
२. वा.प्रा. ८.४२, नैर्ऋत्या जिह्वामूलीयाः।
३. ऋ.प्रा. १.४१ ऋकारल्कारावथ षष्ठ ऊष्मा जिह्वामूलीयाः।
४. वा.प्रा. १.७६-७७, दन्त्या जिह्वाग्रकरणा रश्च।
५. वा.प्रा. १.६८, रो दन्तमूले।
६. वा.प्रा. ८.४४, रौद्रा दन्त्याः।
७. वा.प्रा. १.६९, ऌलसता दन्ते।
८. वा.प्रा. १.७७।
९. वा.प्रा. १.४६ अकण्ठ्यो भावी।

# प्रातिशाख्यदृशा वर्णानां स्थानप्रयत्नयोः समीक्षणम्

**डॉ. चन्द्रकान्ताराय:**
उपाचार्या, संस्कृतस्य
आर्यमहिला-स्नातकोत्तरमहाविद्यालये
वाराणस्याम्



नि:शेषज्ञानविज्ञानकोषस्याऽऽकरोऽयं वेद:। इष्टप्राप्त्यनिष्टपरिहारयोरुपाय-निर्देशनात् सर्वदा सर्वथा चायं सार्वभौतिकमुपादेयत्वं बिभर्ति भूतले। आर्षपरम्परया गुरुमुखश्रवणसरण्या चाविकलत्वेनाधिगतोऽयं मन्त्रराशि: पुरा नियमितेन सविध्यभ्यसनेन च कण्ठाग्रमधितिष्ठन्नध्यवसायिनां तप:शीलानां स्वीयममलं वैशिष्ट्यं प्रकाशयति स्म। कालक्रमे पुनर्वैयक्तिक्य एषणा यदा प्रारोहत्वमवाप्नुवन्, भौतिकं विषयजातं बलीय आसञ्जकं सञ्जातम्, मानवस्य चिन्तनपक्षो विमर्शनियमोऽभ्यासश्च सङ्कोचतां गता:, वर्णाश्रमव्यवस्थाया नियमाश्च स्वैराचारै: प्रमादैर्वा विप्लवग्रस्ता अदृश्यन्त। सम्यक्प्रयोगस्यानवस्थामवलोक्य वेदविद्याया अनवद्यमन्यूनमैकान्तिकञ्च विधातुम् आचार्यैरुपायचिन्तनं प्रारब्धम्। अस्यैव सङ्कल्पस्य सिद्ध्यर्थं नानापाठविधयोऽन्यान्यवेदाङ्गप्रकल्पग्रन्थाश्च लिपिविग्रहत्वमवापु:। षड् वेदाङ्गानि प्रतिशाखं प्रतिचरणं वा प्रणीतानि प्रातिशाख्यानि चानेनैव क्रमेण प्रभवत्वं गतानि यत्र वर्णस्वरूप-पदप्रकृति-स्वरवैशिष्ट्य-सन्धिवैविध्य-मात्रा-बलादिविषया: सविस्तरं सूक्ष्मतया चाऽऽलोचिता: सन्ति।

विश्ववाङ्मये ऋग्वेद: प्राचीनतमो ग्रन्थ इति सर्वै: पाश्चात्त्यपौरस्त्यविद्वद्भिर्निर्विवादं समङ्गीक्रियते। तस्यैतस्य प्राचीनतमस्य शब्दराशेस्तादृगेव स्वरूपमद्यत्वेऽपि समुपलभ्यते यादृग् इदमनवद्यमासीत्। अयमेव विशेषो विदुषां कृते विस्मयावहो यद् विश्वस्मिन् बह्व्यो भाषा व्यवहारपथमायाता:, तत्तत्कालेषु प्रयुक्ता:, कालक्रमेण ध्वनिपरिवर्तनादिकारणै रूपान्तरिता विलुप्ता वा सञ्जाता:। ग्रीक-लैटिन इत्याद्या: साम्प्रतं सिद्धान्तत एव स्मर्यन्ते कथञ्चिच्चाऽध्याप्यमानास्तिष्ठन्ति। परं वैदिकसंस्कृतस्यायं विशेषो यत्स्वरवर्णाद्युच्चारणेऽत्र किमपि मनागपि वैभिन्न्यं वैपरीत्यमन्यथात्वमयथार्थत्वं वा नाऽऽपतितम्। सहस्राब्देभ्य एतस्य उच्चारणध्वनयो यथावत्साधुतया

निर्भ्रान्तरूपेण च समुच्चार्यन्त इति भाषावैज्ञानिकानां जगति परमप्रमोदास्पदं भवति। इदं वैशिष्ट्यं वर्णोच्चारणविषये आर्षशास्त्रेषूपदिष्टानां नियमानां सम्यक्प्रयोगतया संरक्षितमत एव पाश्चात्त्यैरपि स्वीक्रियते यद् ध्वनिविज्ञानस्याध्ययनं भारतेष्वेवेदम्प्रथमतया प्रादुर्भूतम्। एवमिदं विश्ववाङ्मये भारतानामनितरसाधारणमवदानमिति निर्विवादं वक्तुं शक्यते।

वेदमन्त्रेषु सर्वविधमभीष्टसाधकत्वं वरीवर्ति। अभीष्टसिद्ध्यर्थं तु शब्दब्रह्मणोऽस्य सम्यगुच्चारणस्याऽऽकाङ्क्षा भवति। शास्त्रकृत उदाहरन्ति—

'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति'[१]।

सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम्।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते॥[२]

महाभाष्यकारेण पतञ्जलिना उद्धृतमस्ति यदसुराः 'हे अरयोऽरयः' इत्यत्र "हेलयो हेलयः" इत्यशुद्धमुच्चार्य पराभवमवापुः[३]। एवमेव "स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्" इत्यस्यां वैदिक्यामाख्यायिकायामपि अशुद्धोच्चारणवशात् काङ्क्षितस्य हानिरनभीप्सितस्य चाऽऽपत्तिरुदाहृताऽस्ति।[४] यस्तु वाग्योगविद् व्यवहारकाले सम्यग्रूपेण साधु वर्णोच्चारणं करोति स परत्र अनन्तं फलं प्राप्नोति, अपरे तु अपशब्दोच्चारणदोषेण पराभवं दूषणं वाऽधिगच्छन्ति। पुनरत्र महाभाष्यादुदाह्रियाते—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः॥[५]

सम्यक्पाठद्वारा वेदविद्यायाः संरक्षणे प्रातिशाख्यानां महदुपादेयत्वं वरीवर्ति[६]। ध्वनिविज्ञानस्य प्रतिपादका आद्यग्रन्थाः प्रातिशाख्याः। तानि च

---

१. महाभाष्ये पस्पशाह्निके।
२. पाणिनीयशिक्षा-५१।
३. तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः॥ (महाभाष्ये पस्पशाह्निके)
४. मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ (पाणिनीयशिक्षा-५२)
५. महाभाष्ये पस्पशाह्निके।
६. जपादौ नाधिकारोऽस्ति सम्यक्पाठमजानतः।
प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये॥ (वाजसनेयप्रातिशाख्ये १/२६ भाष्ये उव्वटः)

प्रातिशाख्यानि प्रतिवेदं भिन्नानि ऋक्प्रातिशाख्यं वाजसनेयप्रातिशाख्यं तैत्तिरीयप्रातिशाख्यम् ऋक्तन्त्रमथर्वप्रातिशाख्यं पुष्पसूत्रं सामतन्त्रं प्रभृतीनि सुप्रथितानि भाषाशास्त्रक्षेत्रे। तत्रापि ऋक्प्रातिशाख्यं सर्वप्राचीनमिति आचार्यैर्मन्यते, अतश्च वर्णध्वनिसंरक्षणे एतस्य महत्त्वं सर्वातिशायि। ततः कात्यायनोक्तं वाजसनेयप्रातिशाख्यं प्रचारदृशा महत्त्वं बिभर्ति, यतो हि वाजसनेयचरणान्तर्गता काण्वमाध्यन्दिनशाखाद्वयी अध्ययनाध्यापने बहुप्रचारा विद्यते। माध्यन्दिनशाखायाः स्वरवर्णोच्चारणपद्धतिरद्यत्वेऽपि आसेतुहिमाचलमेकविधैव दृश्यत इत्यस्याः सनातनी ध्वनिविषयिणी प्रतिष्ठा प्रामाण्यं भजते। ऋग्वेदशुक्लयजुर्वेदयोरिदं ध्वनिविषयकं वैशिष्ट्यं समवधार्य वर्णोच्चारणविषये स्थानप्रयत्नयोर्वैशिष्ट्यमालोच्यते।

वर्णाः स्वरव्यञ्जनभेदाद् द्विविधा इति संस्कृतशास्त्रेषु समुपदिश्यते। तत्राप्युच्चारणे स्वराणां प्राधान्यमर्थाभिव्यक्तौ च व्यञ्जनानाम्। स्वृ-शब्दोपतापयोरिति धातोर्निष्पन्नः स्वयं राजन्त इति वा निर्वचनेन निष्पादितः स्वरः स्वयमेव ध्वनीनामुच्चारणे समर्थः। व्यञ्जनवर्णास्तु स्वरसाहाय्येनैव उच्चार्यन्त इति उच्चारणे तेषामक्षराश्रयत्वम्। तदुक्तम् ऋक्प्रातिशाख्ये प्रथमपटले—**ते अक्षराश्रया इति**। परमर्थाभिव्यक्तौ केवलं स्वरा न प्रभवन्तीति व्यञ्जनानां महत्त्वं भाषानिर्माणेऽपरिहार्यम्। स्वरव्यञ्जनात्मकोऽयं वर्णसमाम्नायस्तत्तदपेक्षितस्थानप्रयत्नैः समुच्चार्यमाणः प्राकाश्यं प्राप्नोति चेद् निर्दुष्टो ध्वनिः शास्त्रनियमितस्तस्य तस्य वर्णस्य सम्भवति। अतो यथार्थध्वनिनिरूपणार्थं स्थानप्रयत्नयोः परिज्ञानमावश्यकम्।

### वर्णोच्चारणस्थानानि

**कण्ठः**—ऋक्प्रातिशाख्यानुसारम् अकाराऽऽकारयोर्हकारस्य विसर्जनीयस्य च उच्चारणस्थानं कण्ठः।[1] वाजसनेयप्रातिशाख्येऽपि एते वर्णाः कण्ठ्याः प्रोक्ताः।[2] ह्रस्वदीर्घप्लुतस्वरूपस्यावर्णस्योच्चारणं कण्ठस्थानीयमित्यस्य प्रातिशाख्यस्याभिमतम्। तैत्तिरीयप्रातिशाख्ये[3] अवर्णस्योच्चारणप्रकारो भिन्नतया निर्दिष्टोऽस्ति। वैदिकाभरणनाम्नि भाष्ये गार्ग्यगोपालयज्वा ओष्ठहन्वोरुपश्लेषविश्लेषाभ्यां ह्रस्वदीर्घावर्णस्योच्चारणं निरूपयति।

---

१. कण्ठ्योऽकारः। प्रथमपञ्चमौ च द्वावूष्मणाम्। (ऋक्प्रातिशाख्यम्-१।३८-३९)
   (ह् श् ष् स् अः ᳵक ᳵप अं—एते ऊष्माणः)

२. अहविसर्जनीयाः कण्ठे। (वाजसनेयप्रातिशाख्यम्-१/७१)

३. तै.प्रा. २.१२।

**उरस्**—केषाञ्चिदाचार्याणां मतं प्रतिपादयद् ऋक्प्रातिशाख्यं[1] हकारस्य 'अः' इति विसर्गस्य चोरःस्थानं निर्दिशति। याज्ञवल्क्यशिक्षायां तैत्तिरीयप्रातिशाख्यस्य वैदिकाभरणभाष्ये च वर्गाणां पञ्चमवर्णैरन्तःस्थैर्वा सह संयुक्तो हकार उरःस्थानीयः प्रतिपादितः। एतैरसंयुक्तस्तु हकारः कण्ठस्थानादेव उच्चार्यत इति। एवम् उरस्यवर्णान् निर्दिष्यमाणा आचार्या एषामुच्चारणे स्वरयन्त्रस्यान्येषां वा उच्चारणावयवानां मुखस्य कुत्राप्युपयोगं नैव कल्पयन्ति। पाश्चात्यविदुषा ह्विट्नेमहोदयेनैतेषामाचार्याणां सूक्ष्मेक्षिकयाऽभिमतञ्च सम्यक् प्रशंसितमस्ति[2]।

**जिह्वामूलस्थानम्**—ऋक्प्रातिशाख्यकृता ऋ-ॠ, ऌ-ॡ, ᳵकवर्णानां कवर्गीयानाञ्च स्थानं जिह्वामूलमिति उपदिष्टमस्ति—'ऋकारल्कारावथ षष्ठ ऊष्मा जिह्वामूलीयाः प्रथमश्च वर्गः'[3]। जिह्वामूलीयं जिह्वामूलेन जन्यत्वादित्येवं वैदिकाभरणभाष्ये एषां वर्णानां स्वरूपं प्रकीर्तितम्। एषामुच्चारणे द्विधा प्रवृत्तिर्विविच्यते—जिह्वाया मूलमूर्ध्वं गत्वा हनुमूलं स्पृशति हनुमूलञ्चोर्ध्वमेत्य नासिकारन्ध्रमवरोधयति। जिह्वामूलीयवर्णानां निष्पत्तिविषये तु मतैक्यं नास्ति। तैत्तिरीयप्रातिशाख्ये हनुमूलमेषां स्थानं जिह्वामूलञ्च करणमुक्तम्। 'हनुमूले जिह्वामूलेन कवर्गे स्पर्शयति' अर्थात् कवर्गस्योच्चारणकाले जिह्वामूलेन हनुमूले स्पर्शः सम्पाद्यते। परं चतुरध्यायिकायां[4] "जिह्वामूलीयानां हनुमूलमिति" हनुमूलमेतेषां करणं जिह्वामूलञ्च स्थानमिति विश्लेषितम्। वाजसनेयप्रातिशाख्ये ऋकारस्य जिह्वामूलीयस्य कवर्गस्य च जिह्वामूलं स्थानं निगदितम्। ऌकारस्तत्र दन्तस्थानीय इति—

ऋᳵक्कौ जिह्वामूले।[5]

ऌलसिता दन्ते।[6]

तैत्तिरीयप्रातिशाख्यं[7] तु बर्स्वं ऌकारस्योच्चारणस्थानं निर्दिशति। अत्रोल्लेखनीयमस्ति यद् वैयाकरणेन पाणिनिना तु "अकुहविसर्जनीयानां कण्ठः" इति कवर्गस्य कण्ठस्थानमेवञ्च कखाभ्यां प्राग् यदर्धविसर्गसदृश एतस्य जिह्वामूलीयस्य जिह्वामूलं स्थानं स्वीकृतम्। एवमेव ऋटुरषाणां मूर्धेति ऋकारस्तत्र मूर्धन्यो ऌतुलसानां दन्ता इति ऌकारश्च दन्तस्थानीय इति।

---

१. ऋ.प्रा. १.४०;
२. चतुरध्यायिका-१।१९।
३. ऋक्प्रातिशाख्यम्-१।४१;
४. चतुरध्यायिका-१।२०।
५. वाजसनेयिप्रातिशाख्यम्-१।६५;
६. तदेव-१।६९।
७. तैत्तिरीयप्रातिशाख्यम्-२।१८।

**तालु**—इ-ईवर्णयोः ए-ऐवर्णयोर्यकारस्य शकारस्य चवर्गस्य च उच्चारणस्थानं तालु इति शौनकः। अस्मादेव कारणादेते वर्णास्तालव्या इति व्याहृताः। यथोक्तमृक्प्रातिशाख्ये—

तालव्यावेकारचकारवर्गाविकारेकारौ यकारः शकारः[१]।

एतेषामुच्चारणे जिह्वाया मध्यभागः कठोरतालु स्पृशति एवं जिह्वाया मध्यभाग एतेषां करणं कठोरतालु च स्थानम्। कात्यायनोऽपि वाजसनेयिप्रातिशाख्ये ह्रस्वदीर्घप्लुतरूपस्य इवर्णस्य चवर्गस्य यकारशकारयोश्च स्थानं ताल्वेव निर्दिशति। ऐकारस्य पृथगुच्चारणसङ्केतोऽनेन नैवाशंसितः। कात्यायनमते तालव्यवर्णानां सोमदेवता। अत एवैते सौम्या इति निगदिता वाजसनेयिप्रातिशाख्ये[२]। इचुयशानां तालु इति भट्टोजिदीक्षितस्य वृत्त्यनुरूपं पाणिनीयं मतं प्रायशः समानमेव विज्ञानं प्रकाशयति।

**मूर्धा**—षकारटवर्गौ मूर्धन्याविति शौनकाचार्यस्तथैव च कात्यायनः—

मूर्धन्यौ षकारटकारवर्गौ।[३]

वाजसनेयिप्रातिशाख्यानुसारं मूर्धन्यवर्णानां वायुर्देवता, अतस्त्वेता वायव्या इत्येवमभिहिताः[४]। सर्वेषु प्रातिशाख्येषु व्याकरणग्रन्थेषु चैतेषां वर्णानामुच्चारणस्थानं मूर्धेति व्याहृतम्। मुखविवरस्य शीर्षभाग ऊर्ध्वभागो वा एतत्स्थानं मूर्धेति प्रोक्तम्। द्वयोः स्वरयोर्मध्यवर्ती डकारस्तु ळकार इति पृथग्वैदिकवर्णरूपेण परिणमते। आचार्येण शौनकेनास्योच्चारणविषये केवलं वेदमित्रस्य मतमुद्धृत्य जिह्वामूलं तालु वाऽस्य स्थानं सङ्केतितम्—

जिह्वामूलं तालु चाचार्य आह।
स्थानं डकारस्य तु वेदमित्रः॥

**दन्तमूलम्**—तवर्गस्य रेफलकारसवर्णानामुच्चारणस्थानं दन्तमूलमिति शौनकमतम्। जिह्वाग्रेण दन्तमूलस्पर्शनादेषां निष्पत्तिर्जायते, अत एवैते दन्तमूलीयाः प्रोक्ताः—'दन्तमूलीयस्तु तकारवर्गः। सकाररेफलकाराश्च'[५]।

वाजसनेयिप्रातिशाख्ये ह्रस्वदीर्घप्लुतऌवर्णानां लकारसकारयोस्तवर्गस्य च स्थानं दन्त इति वर्णितम्। दन्त्या वर्णा रुद्रदेवताकाः, अत एव रौद्रा इति

---

१. ऋक्प्रातिशाख्यम्-१/४२।
२. सौम्यास्तालव्याः। (वाजसनेयिप्रातिशाख्यम्-८।३४)
३. ऋक्प्रातिशाख्यम्-१।४३।
४. वायव्या मूर्धन्याः। (वाजसनेयिप्रातिशाख्यम्-८।३७)
५. ऋक्प्रातिशाख्यम्-१/४४-४५।

व्याहृता:।[1] रेफस्य स्थानं कात्यायनो दन्तमूलं मनुते[2]। पाणिनीयास्तु ऌतुलसानां दन्ता इति वृत्तिमुद्गिरन्ति। ऌवर्णस्य दीर्घाभावस्तत्र सङ्केतितोऽस्ति।

**ओष्ठौ**—उ-ऊ-ऊ३ वर्णानाम् औकारवकारयो: पवर्गस्योपध्मानीयस्य चोच्चारणस्थानमोष्ठाविति कात्यायनो भणति[3]। अन्येष्वपि प्रातिशाख्येष्वेषामोष्ठावेव स्थानं कीर्तितम्। तैत्तिरीयप्रातिशाख्ये तु उत्तरोष्ठ इति किञ्चिद्वैशिष्ट्यं चिह्नितमस्ति।

**बर्स्वम्**—ऋक्प्रातिशाख्ये[4] आचार्यशौनकेन केषाञ्चिदन्येषामाचार्याणां मतमुद्धृत्य रेफस्य बर्स्वं स्थानमित्युल्लिखितम्—'रेफं बर्स्वमेके' इति। उव्वटभाष्ये तत्स्थानमेवं प्रदर्शितमस्ति—'बर्स्वशब्देन दन्तमूलादुपरिष्टादुच्छून: प्रदेश उच्यते'[5] इति। तैत्तिरीयप्रातिशाख्यस्य त्रिभाष्यरत्नेऽपि एवं लक्षणं प्रदत्तमस्ति—

'बर्स्वेष्विति दन्तपङ्क्तेरुपरिष्टाद् उच्चप्रदेशेष्वित्यर्थ:'[6]।

**नासिका**—ऋग्यजु:प्रातिशाख्ययोर्यमवर्णानां[7] नासिक्यानामनुस्वारस्य च नासिका स्थानमिति भणितम्।[8]

**प्रयत्न:**—वर्णोत्पत्तौ नि:श्वासरूपस्य प्राणवायो: प्राधान्यं भवति। शब्दस्य कारणं वायुराकाशाज्जायत इति वाजसनेयिप्रातिशाख्ये उक्तमथ च भाष्यकृता उव्वटेन विवेचितम्[9]। उच्चारणसाधनपरो हृत्स्थो वायुर्नियतकरणसंयोगाद् ध्वनिरूपतां गच्छति, यथोक्तं वाजसनेयिप्रातिशाख्यसूत्रे[10] उव्वटेन—

'सम्यक्करणैरुपहितो हृदि वायुर्वेणुशङ्खादिभि: शब्दीभवति'। यदि च वक्ता नि:श्वासकाले वर्णोत्पत्त्यर्थं प्रयतते, तदैवैषा वर्णोत्पत्ति: साध्या भवति।

---

१. रौद्रा दन्त्या:। (वाजसनेयिप्रातिशाख्यम्-८/३५)
२. तदेव-१।५८; ३. तदेव-१।७०।
४. ऋक्प्रातिशाख्यम्-१।४६।
५. ऋक्प्रातिशाख्यसूत्रे-१।४६ उव्वटभाष्यम्।
६. तैत्तिरीयप्रातिशाख्ये-२।१८ त्रिभाष्यरत्नम्।
७. अनुनासिके स्पर्शे परे अननुनासिका: स्पर्शा एव यमरूपतां गच्छन्ति।
(द्रष्टव्यम्—ऋक्प्रातिशाख्यम्-६।२९)
८. यमानुस्वारनासिक्यानां नासिके। (वाजसनेयिप्रातिशाख्यम्-१/७४) तथा—नासिक्यमनुस्वरान् इति। (ऋक्प्रातिशाख्यम्-१।४८)
९. (क) वायु: खात्। शब्दस्तत्। (वाजसनेयिप्रातिशाख्यम्-१।६-७)
(ख) शब्दस्तदात्मको वाय्वात्मक इत्यर्थ:। (वा.प्रा. १/७ उव्वट:)
१०. वाजसनेयिप्रातिशाख्यम्-१/८।

हृत्कण्ठशिरःस्थानेषु त्रिष्वेषु सङ्घातद्वारा ध्वन्यात्मको वायुर्वाग्रूपतां याति, स च सङ्घातः प्रयत्ननाम्ना व्यवहृतः। हृदयतो बहिर्निर्गतस्य वायोर्यदा मुखमासाद्य ताल्वादिस्थानेषु निक्षेपः सञ्जायते, तदा वर्णोत्पत्तिर्भवति। वाजसनेयिप्रातिशाख्ये तु प्रयत्नविषये सूत्रकारेण न किञ्चित्सङ्केतितम्, परं भाष्यकृदुव्वटः प्राग्वर्तिभिः शिक्षाशास्त्रिभिर्वैयाकरणैश्च प्रतिपादितमेवाऽऽस्यप्रयत्नविषयं विवृणोति।[1] वर्णोच्चारणे प्रयुज्यमानो मुखाद्यवयवानां स सङ्घातः प्रयत्नो वा द्विधा वर्णितोऽस्ति—बाह्य आभ्यन्तरश्च।

१. **बाह्यप्रयत्नः**—मुखाद् बहिः स्वरयन्त्रिकायां यः प्रयत्नो विधीयते, स बाह्यनामकः। एष प्रयत्नः प्रकृतिरनुप्रदानश्चेत्येवं नामद्वयमपरं बिभर्ति। वायुमनुप्रदीयत इत्यनुप्रदानमित्येवं भाष्यकृता उव्वटाचार्येणास्य लक्षणं प्रतिपादितमस्ति।[2] तैत्तिरीयप्रातिशाख्ये माहिषेयभाष्ये[3] तु—'अनुप्रदीयते उपादीयते जन्यत इत्यर्थः'। अर्थाद् वर्ण उत्पद्यते अनेनेति वर्णानां मूलं कारणमनुप्रदानमितीत्थं व्याख्यातमस्ति।

बाह्यप्रयत्नः स्वरतन्त्रीणां त्रिस्रोऽवस्था अवलम्ब्य प्रवर्तते। एताश्च विवृत-संवृत-मध्यस्थितिनामभिरुदाहृतास्सन्ति।

१. **विवृतनामबाह्यप्रयत्नः**—स्वरतन्त्र्यो यदा पृथक्पृथग्वर्तन्ते स्वरयन्त्रद्वारश्च (कण्ठद्वारः) पूर्णतयोद्घाटितो वर्तते, तदा हृदयत ऊर्ध्वं निर्गच्छन् वायुः स्वरतन्त्रीभिः सह घर्षणं नैव प्राप्नोति, अतस्तु वर्णोच्चारणे घर्षणं कम्पनं वा नैवोत्पद्यते। स्वरयन्त्रतो वायुर्निबद्धो बहिर्निर्गच्छति। एवं विवृतावस्थायां निर्गतो वायुरघोषवर्णानां मूलं कारणं तच्च 'श्वास'-संज्ञयाऽऽचक्ष्यते।

२. **संवृतनामबाह्यप्रयत्नः**—अस्यामवस्थायां स्वरतन्त्र्यो मिथः सन्निकृष्टा भवन्ति कण्ठद्वारस्त्ववरुद्धस्तिष्ठति। हृदयप्रदेशतो निर्गच्छन् वायुः स्वरतन्त्रीभिः सह घृष्यते, तत्र च कम्पनमाविर्भवति। बहिर्निर्गच्छन्नेष वायुर्नादसंज्ञयाऽभिधीयते।

३. **मध्यस्थितिर्बाह्यप्रयत्ने**—एषा मध्यमा स्थितिर्भवति बाह्यप्रयत्ने यदा स्वरतन्त्र्यो न त्वतिशयेन सन्निकृष्टा न चाऽऽधिक्येन पृथगेव वर्तन्ते तथा च स्वरयन्त्रद्वाराऽपि न तु पूर्णतयोद्घाटितो न चावरुद्धस्तिष्ठति। अस्मिन् क्रमे स्वरयन्त्रमुखेन निर्गतो वायुः श्वासनादसम्पृक्तस्सन्नुभयरूपतां याति।[4]

---

१. अयमास्यप्रयत्नः शिक्षाविद्भिरुक्त इह गृह्यते। (वाजसनेयि-प्रातिशाख्ये १/७२ उपरि उव्वटः)

२. ऋक्प्रातिशाख्ये १३/१ उव्वटः।

३. तैत्तिरीयप्रातिशाख्ये-२।८।

४. उभयं वान्तरोभौ। (ऋक्प्रातिशाख्यम्-१३/२)

एवं विवृतावस्थायां श्वासः संवृतायां नादो मध्यमायाञ्च श्वासनादाविति त्रिविधो बाह्यप्रयत्नः कारणं वा वर्णोच्चारणे प्रवर्तते।[१] तत्र श्वासोऽघोषाणां क-ख-च-छ-ट-ठ-त-थ-प-फ-श-ष-स-अः-ᳵक-ᳶप-अं इत्येषां कारणं भवति। नादेन तु अ-आ-ऋ-ॠ-इ-ई-उ-ऊ-ए-ओ-ऐ-औ-ई३-ऌ-ग-ङ-ज-ञ-ड-ण-न-म-य-र-ल-व इत्येते सघोषा वर्णा उत्पाद्यन्ते। श्वासनादसंयोगात्त्वेवं सघोषाणां सोष्मणां सघोषस्योष्मवर्णस्य च निष्पत्तिर्जायते। एते सन्ति—घ-झ-ढ-ध-भ-ह इति।[२] पाणिनीयशिक्षायां तु—

संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम्।
घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः।।
स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च।।[३]

इत्येवं प्रयोगदशायामेकमात्रिकः स्वरोऽकारः सर्वे घोषवर्णाश्च संवृत-प्रयत्नेनोत्पाद्यमाना एवञ्चाऽन्ये स्वरा अघोषा ऊष्मवर्णाश्च विवृतकरणेन निष्पाद्यमानाः प्रोक्ताः सन्ति। अत्र विवृतकरणस्यापि त्रयो भेदा विवृत-विवृततर-विवृततमनामभिर्विश्लेषिताः। तत्र ए-ओ (एङ्) इति स्वरद्वयं विवृततरप्रयत्नेन ऐ-औ (ऐच्) च विवृततमप्रयत्नेन साध्या वर्णिताः। पाणिनीयव्याकरणे तु बाह्यप्रयत्न एकादशविध उक्तः। तत्र "खरो विवाराः श्वासा अघोषाश्च हसो संवारा नादा घोषाश्च" इत्येवं व्यञ्जनवर्णानां बाह्यप्रयत्नमालोचितमस्ति। उदात्तानुदात्तस्वरितरूपं बाह्यप्रयत्नत्रयं तु वेदेषु स्वराणां वैशिष्ट्यं प्रकाशयति।

तैत्तिरीयप्रातिशाख्यस्य वैदिकाभरणभाष्ये[४] कण्ठसङ्कोचः संवारनामको बाह्यप्रयत्नः प्रोक्तः, यस्मान्नादनामा द्वितीयो भवति बाह्यप्रयत्नः। नादात्मिका

---

१. ता वर्णानां प्रकृतयो भवन्ति।
श्वासोऽघोषाणाम्। इतरेषां तु नादः।
सोष्मोष्मणां घोषिणां श्वासनादौ। (ऋक्प्रातिशाख्यम्-१३/३-६)

२ ऋक्प्रातिशाख्ये बाह्यप्रयत्नदृशा वर्णानां द्विधा विभाजनमेवमस्ति—
(क) अघोषाः—ष-श-ष-अः ᳵक-ᳶप-अं।
अन्त्याः सप्त तेषामघोषाः। (ऋक्प्रातिशाख्यम्-१.११)
क-ख-च-छ-ट-ठ-त-थ-प-फ।
वर्गे वर्गे च प्रथमावघोषौ। (ऋक्प्रातिशाख्यम्-२।१२)
(ख) सघोषाः—ग-घ-ङ-ज-झ-ञ-ड-ढ-ण-द-ध-न-ब-भ-म-य-र-ल-व-ह इति।

३. पाणिनीयशिक्षा-२०-२१।

४. तैत्तिरीयप्रातिशाख्ये-२।४ वैदिकाभरणभाष्यम्।

या ध्वनिस्तत्संघर्षणेन व्यञ्जनेषु घोषनामकस्तृतीयो बाह्यप्रयत्न उदेति। एते त्रयोऽप्येकस्मिन्वर्गे आयान्ति। एवमेव कण्ठस्य विस्तारस्तत्र[1] विवार उक्तस्ततश्च श्वाससंज्ञको द्वितीयः, श्वासध्वनिसंसर्गाच्च अघोषनामा तृतीयो बाह्यप्रयत्न उदेति। त्रितयमिदमपरस्मिन् वर्गे परिगण्यते।

२. **आभ्यन्तरप्रयत्नः**—मुखविवरस्यान्तो यः प्रयत्नो विधीयते वर्णोच्चारणे, स आभ्यन्तर इत्येवमुदाहृतः। ऋक्प्रातिशाख्ये स त्रिविधः प्रोक्तः—१. स्पृष्टः, २. अस्पृष्टः, ३. दुःस्पृष्टश्च।

१. **स्पृष्टः**—कादारभ्य मपर्यन्तानां सर्वेषां स्पर्शवर्णानामाभ्यन्तरप्रयत्नः स्पृष्टोऽस्ति। अस्मिन् प्रयत्ने द्वावुच्चारणावयवौ मिथः स्पृशतः पश्चाच्च शीघ्रमेव पृथग्भवन्ति। तत्र झटित्येव वायुर्बहिर्निर्गच्छति। स्पृष्टप्रयत्नोऽस्मिन् प्रातिशाख्ये "अस्थित"शब्देन प्रकाशितोऽस्ति। उवटाचार्योऽत्र व्याख्यापयति यदुच्चारणस्थानमाश्रित्य जिह्वामध्ये न सन्तिष्ठते तद् अस्थितमित्युच्यते।[2] वैयाकरणैरपि "तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्" इत्येवं स्पृष्टं प्रयत्नं विवेचितमस्ति।

२. **अस्पृष्टप्रयत्नः**—ऋक्प्रातिशाख्ये स्वराणामनुस्वारस्य ऊष्मवर्णानाञ्च अस्पृष्ट आभ्यन्तरप्रयत्नो निर्दिष्टः—

स्वरानुस्वारोष्मणामस्पृष्टं स्थितम्।[3]

अत्र स्थितपदेन अस्पृष्टप्रयत्नस्य वैशिष्ट्यमालोचितमस्ति। उव्वटाचार्योऽत्र अनुमोदयति यद् वर्णस्थानमाश्रित्य जिह्वाऽवतिष्ठते तत्स्थितमिति। अस्मिन् प्रयत्ने उच्चारणावयवानां स्पर्शो न भवति, वर्णाश्चैते दीर्घं यावदुच्चार्यमाणा विद्यन्ते। स्पर्शास्तु दीर्घं यावदविकलतया नैवोच्चारयितुं शक्यन्ते।

आचार्यशौनकेन यदत्र स्वराणामूष्मवर्णानाञ्चैक एव प्रयत्नो निर्दिष्टस्तदन्यैः शिक्षाशास्त्रिभिर्वैयाकरणैश्च नाङ्गीक्रियते। चतुरध्यायिकायाम्—'ऊष्मणां विवृतं च' [4]इत्यस्मिन् सूत्रे चकारद्वारा ईषत्पदस्यानुवर्तनं कृतमस्ति। एवं स्वराणामाभ्यन्तरप्रयत्नो विवृतमूष्मणाञ्चेषद्विवृतमित्येव निश्चीयते तत्र। पाणिनीयसूत्रे[5] भाष्यं कृतवता महर्षिणा पतञ्जलिनाऽपि "विवृतमूष्मणाम्। ईषदित्येवानुवर्तते" इत्येवं मतं प्रकाशितम्। तदनुसारं लघुसिद्धान्तकौमुद्यां संस्कृतवृत्तौ "ईषद्विवृतमूष्मणाम्। विवृतं स्वराणामि"त्येवमर्थः प्रकाशितः।

---

१. तैत्तिरीयप्रातिशाख्ये-२/५ वैदिकाभरणभाष्यम्।
२. ऋक्प्रातिशाख्ये-१३/९ उव्वटः।
३. ऋक्प्रातिशाख्यम्-१३/११;
४. चतुरध्यायिका-१/३१
५. अष्टाध्यायी-१/१/९।

पाणिनीयशिक्षायां तु स्वराणामस्पृष्टोऽन्तःस्थानामीषत्स्पृष्टः श-ष-स-हवर्णानां नेमस्पृष्टोऽवशिष्टानाञ्च व्यञ्जनवर्णानां स्पृष्ट इत्याभ्यन्तरप्रयत्नोऽभिहितः—

अचोऽस्पृष्टा यणस्त्वेषन्नेमस्पृष्टाः शलः स्मृताः।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः[१]॥

नेमस्पृष्टा अर्द्धस्पृष्टा ईषद्विवृतप्रयत्नवन्त इत्येवं राजलक्ष्मीव्याख्यायां नेमस्पृष्टपदस्य व्याख्या कृताऽस्ति।

वाजसनेयिप्रातिशाख्ये[२] तु आभ्यन्तरप्रयत्नविषयेऽपि विशिष्टं किञ्चिन्नैव व्याख्यापितम्। आचार्य उव्वटः संवृत-विवृत-अस्पृष्ट-स्पृष्ट-ईषत्स्पृष्ट-अर्धस्पृष्ट इत्येवं षण्णामाभ्यन्तरप्रयत्नानामुल्लेखं विदधाति। भाष्यकृताऽनन्तेन संवृत-विवृत-स्पृष्ट-ईषत्स्पृष्ट इत्येवं चत्वार आस्यप्रयत्ना अभिहिताः। चतुरध्यायिकायां संवृत-विवृत-विवृततम-अतिशयविवृततम-स्पृष्ट-ईषत्स्पृष्ट एवं षडास्यप्रयत्नानां सङ्केतः प्राप्यते।

३. **दुःस्पृष्टप्रयत्नः**—य-र-ल-व-वर्णानामाभ्यन्तरप्रयत्नं दुःस्पृष्टसंज्ञया व्याहृतमस्ति ऋक्प्रातिशाख्ये—

दुःस्पृष्टं तु प्राग्घकाराच्चतुर्णाम्।[३]

अस्यामवस्थायामुच्चारणावयवौ न तु परस्परं पूर्णरूपेण स्पृशतो न च पृथगेव सर्वथा सन्तिष्ठतः। अनयोः ईषत्स्पर्शः सञ्जायते। अत एव चतुरध्यायिकायां पाणिनीये व्याकरणे चापि प्रयत्नमिदमीषत्स्पृष्टनाम्ना ख्यातमस्ति।[४]

एवं शब्दब्रह्मणः साधने निरतैस्तपोनिष्ठैर्मनीषिप्रवरैः प्रातिशाख्यकृद्भिर्ध्वनेरुत्पत्तिविज्ञानं सयुक्तिकं सम्यगुद्घाटितमस्ति। यत्र यत्र चैतेषां वैज्ञानिकानामन्विष्टविषये किञ्चित् किञ्चिन्मतवैभिन्न्यं प्रतीयते, तत्राप्येकैकस्य विशिष्टा पद्धतिः परिष्कृता च मतिरेव प्रमाणमित्येवं तत्तद्-वैभिन्न्यमपि सविशेषं सावधानञ्चान्वेषणीयमाधुनिकैरिति।



---

१. पाणिनीयशिक्षा-३८।
२. वा.प्रा. १/७२।
३. ऋ.प्रा. १३/१०।
४. ईषत्स्पृष्टमन्तःस्थानाम्। (संस्कृतवृत्तिः, लघुसिद्धान्तकौमुदी-१/१/९)

# मातृका : वर्णध्वनीनां माता

**कु. श्रुतिराय**
शोधच्छात्रा
नवदेहलीस्थ-जवाहरलालनेहरूविश्वविद्यालयस्य



भारतीयज्ञानपरम्परा रोचिकानां व्यापिकानां सूक्ष्माणाञ्च धारणानां कोषः। अत एव विद्वांसो भारतीयपरम्परामवबोद्धुं प्रवेष्टुमन्तश्च समीहन्ते। वाचो धारणापि भारतीयपरम्परायाः सूक्ष्माणां रुचिकराणां व्यापकानाञ्च अनुशासनानामन्यतमा। आगमः (तन्त्रपरम्परा) वाचमधिकव्यापकतया विचारयति। तत्रापि विशेषतः काश्मीरशैवदर्शने बहुमुखीप्रतिभासम्पन्नः काश्मीरशैवदार्शनिकोऽभिनवगुप्तः स्वीयेऽग्रगामिग्रन्थे भाषाया विविधान् आयामान् विविधप्रकार्यैर्विविधैश्च नामभिः सार्धं गवेषयति। तेषु चैको वर्तते मातृकासिद्धान्तो योऽस्ति वर्णध्वनीनां मातृभूतः।

मातृका आनुभविकब्रह्माण्डस्य सर्जनाभिप्रायेण उद्‌गमकाले पञ्चाशद्वर्णध्वनीनां विकासं करोति। यदा वर्णध्वनीनाम् उद्‌गमश्चैतन्यस्यैकेनैव कार्येण निर्मीयते तदायं भैरवः (वर्णराशिः), तदनन्तरचरणे यदायं वर्णराशिश्चैतन्यावमर्शच्छायया स्पृष्टो भवति तदायं वर्णध्वनीनामुत्थानरूपेण मातृकेति[१] परिणमते। सृष्टेर्भौतिककारणत्वेन निर्देष्टुं शक्या वर्णास्तेषामुच्चारणस्थानभेदेन पाणिनीयमाहेश्वरसूत्राणामुपरि आधृता विविधैर्नामभिर्लक्षिताः। वर्णानां सर्वप्रथमः प्राथमिको विभागो द्विविधोऽस्ति— १. स्वराः, २. व्यञ्जनानि। स्वराणामुपविभागाश्च दीयन्ते—

## १. मौलिको वर्णः

अयम् अकारः। अयं मौलिको वर्णः स्वरो वा कथ्यते, यतो हि सर्वेषामन्येषामयं पूर्वत्वेन आयाति। अयं च स्वतःस्फूर्तध्वनिस्तरे वर्तते। यश्च

---

१. एकामर्शस्वभावत्वे शब्दराशिः स भैरवः।
आमृश्यच्छायया योगात् सैव शक्तिश्च मातृका।। (तन्त्रालोके-३.१९८)

विनैव केनचनाघातेन प्रहाररूपेण उच्चारणकरणैः श्वासप्रश्वासवायोः सम्पर्करूपेण वा उत्पाद्यते। इकार उकारश्च मौलिकस्वरौ कथ्येते। आकार ईकार ऊकारश्च एषां स्वराणां विस्ताराः सन्ति।

**२. नपुंसकाः**

ऋकारः ॠकारः ऌकारः ॡकारश्च षण्ढा वर्णा उच्यन्ते, यतो ह्येते अन्येषां वर्णानां सर्जने सामर्थ्यं न दधति।

**३. संयुक्ताक्षराः**

ए, ऐ, ओ, औ, एते वर्णाः संयुक्ताक्षरा निगद्यन्ते, यतो ह्येते अकारादारभ्य ऊकारपर्यन्तेभ्यः षड्भ्यो वर्णेभ्य उत्पाद्यन्ते।

**४. बिन्दुः**

नायं स्वरः। अयमनुस्वार इति कथ्यते। अयमनुनासिकध्वनिं, पश्चाद्भाविध्वनिं स्वरमनु युतमनुनासिकम् उच्चारणं द्योतयति।

**५. विसर्गः**

विसर्गशब्दो विसर्जनं द्योतयति। अयं च शब्दान्ते स्वरस्यानन्तरं श्वासस्य निर्गमः, रकास्य सकारस्य च स्थाने। उच्चारणस्थानानुसारिणो व्यञ्जनानां विभागाः सन्ति—

१. **कण्ठ्यः**—पञ्च कण्ठ्याः ककारात् ङकारपर्यन्ता व्यञ्जनवर्णा अध्वनेर्घनीभवनादुद्भूता मन्यन्ते। अकारस्तु स्वयमपि कण्ठ्यः।

२. **तालव्याः**—तालव्या व्यञ्जनवर्णाश्चकारात् ञकारपर्यन्तास्तालव्यादिकाराद् आयान्ति।

३. **मूर्धन्या दन्त्याश्च**—टकारात् णकारान्ताः, तकाराच्च नकारान्ता अपि क्रमशः ऋकारऌकाराभ्यां सम्बद्धाः सन्ति।

४. **ओष्ठ्याः**—पकारात् मकारान्ता उध्वनेः प्रभवन्ति।

५. **अर्धस्वराः**—यरलवा व्यञ्जनसदृशा इकारात् ऋकारात् ऌकारात् उकाराच्च अकारेण तेषां सन्धिमाध्यमेन उच्चार्यन्ते। ते च अन्तःस्था इति कथ्यन्ते, मध्ये स्थिता इति, अर्धस्वरानधिकृत्य निर्दिष्टाः संस्कृतव्याकरणे तैरधिष्ठितान् स्थानान् वर्णमालायां विरामाणां सङ्घर्षिणाञ्च मध्ये स्थितिं तेषां

प्रकृतिं वा निर्दिशन्तस्तिष्ठन्ति, या च प्रकृतिः स्वरव्यञ्जनयोरन्तःस्था इति प्रत्येतुं शक्यते।

**६. ऊष्माणः**—शषसाः।

**७. महाप्राणः**—हकारः।

**८. संयुक्तः**—पञ्चाशत्तमो ध्वनिः क्षकारः संयुक्तो ध्वनिः, यश्च स्वरैर्नोत्पद्यते, अपि तु कषयोर्द्वयोर्व्यञ्जनयोः संयोजनाद् उत्पद्यते।

इदानीं सर्वेषां ध्वनीनां स्वरव्यञ्जनसहितानां विस्तरशो विवरणमधो दीयते—

**अ**—अकारः प्रथमो वर्णः प्रथमो ध्वनिश्च यो भाषायामस्या उच्चतमे स्तरे प्रभवति[1]। अकारो मौलिको वर्णः। सर्वे वर्णा अत एव आयान्ति, अस्मिन्नेव च प्रतिगच्छन्ति। अयं च ध्वनेः सर्वोच्चप्रस्तारोऽस्ति[2]।

**आ**—आकारो द्वितीयो वर्णो दीर्घस्वरो यश्च द्वयोर्विभक्तुं शक्यते—अ+अ इति।

**इ**—इकारोऽस्ति तृतीयस्वर इच्छाशक्तिः[3]। कार्यानुसारेण इच्छाशक्तिः स्वात्मानं द्वयो रूपयोस्तनुते—१. इच्छारूपम्, २. ईशनरूपम्।

**ई**—ईकार ईशनमस्ति। ईशनं स्वामित्वशक्तिरस्ति नियन्त्रणशक्तिः शासनशक्तिर्वा। सम्प्रभुरित्यप्युच्यते।

**उ**—पञ्चमबीजेन उकारेण ज्ञानशक्तिः सङ्केत्यते।

**ऊ**—ईशनवद् ऊनता उन्मेषे विश्राम्यति। यदा उन्मेषो बलवत्तरो भवति, ज्ञानशक्तेर्विषयभूतः पक्षः (ज्ञेयांशः) महान्तं क्षोभं धारयति, तदा ऊनता शुद्धचैतन्ये भासते[4]।

---

१. सा हि बिन्दुमयी शक्तिः स्वेच्छया नामतां गता।
अवर्णोऽप्येकधा पूर्वम् अनुत्तरमयात्मना॥४॥

२. चित्स्वभावतामात्रनान्तरीयकः परनादगर्भः। (तन्त्रसारः, ३, पृ. १२)

३. तन्त्रालोकः, ३.७१-७२।

४. ज्ञेयांशः प्रोन्मिषन् क्षोभं यदैति बलवत्त्वतः।
ऊनताभासनं संविन्मात्रत्वे जायते तदा॥ (तन्त्रालोकः, ३.७५-७६)

**ऋ, ॠ, ऌ, ॡ**—ते च अर्धस्वरा व्यञ्जनैः सह गण्यन्ते। अतो न शिवस्तरे अपि तु उद्गमस्य तत्त्वानाम् अग्रिमश्रेण्याः स्तरे (वर्तन्ते)। एते वर्णा वस्तुतो बीजभूता न सन्ति।

**ए, ऐ, ओ, औ**—अतश्चतुर्भिर्नपुंसकवर्णैः सह विरामप्रकारकादवस्थानादनन्तरं सर्जनं प्रति गतिस्तदनन्तरभाविभिश्चतुर्भिर्वर्णैः सह सततं भविष्यति। एते संयुक्ताक्षराः ए,ऐ,औ,औ इत्यकाराद् ऊकारान्तैः प्रथमषड्वर्णैः सह मिथः संयोजनविधया मिश्रणविधया च उत्पाद्यन्ते[1]। षण्णां स्वराणां संयुक्तावस्था विविधानि रूपाणि धत्ते। वैविध्यं च चतुर्भिः संयुक्ताक्षरैः प्रतीयते[2]।

समानरूपेण आकारेण अकारेण च अकारस्य उकारस्य च संयोजनेन औवर्ण ओवर्णश्च परिणमति[3]।

**म (बिन्दुः/अनुस्वारः)**—अनुस्वारध्वनिः स्वरो नास्ति। अनुस्वारं नाम अनुनासिकध्वनिमनन्तरध्वनिं स्वरेण योजितं च अनुनासिकोच्चारणं द्योतयति। ध्वनिरयं बिन्दुरित्यपि ज्ञायते। अयञ्च चैतन्यस्य अपृथग्भूताया एकतायाः केवलमेकः प्रतीकोऽस्ति।

**विसर्गः**—शिवस्यान्त ऊर्जाया गतिर्बिन्दुना सह प्रभाविता सती अग्रे एकं पदमधिरोहति। विसर्गस्तु न तथा, मूलं सिद्धान्ते निवसन् एव स्वयमभिव्यक्तेर्विकिरणं वर्तते। अयं विकिरणशक्तिरस्ति।

**कवर्गः**—पञ्च कण्ठ्या व्यञ्जनवर्णाः ककारात् ङकारान्ताः पूर्णस्य अवर्णस्य वा घनीभवनाद् उद्भूता इति मन्यते[4]। स्वरव्यञ्जनयोरस्य सम्बन्धस्य कारणं पारम्परिके व्याकरणे अधिकयुक्त्या दीयते येन अकारः आकारश्च कण्ठ्यौ स्तः। परात्रिंशिकाविवरणेऽभिनवगुप्तो मनुते यद् अवर्णस्य घनीभवनात् ककारादारभ्य व्यञ्जनानि परिणमन्ति, यतो हि एतानि व्यञ्जनानि कण्ठ्यसदृशगुणान् धारयन्ति[5]।

---

१. परात्रिंशिकालघुवृत्तिः, ५-९अ. उपरि टीका।

२. इत्थं प्रागुदितं यत्तत् पञ्चकं तत् परस्परम्।
उच्छलद् विविधाकारम् अन्योन्यव्यतिमिश्रणात्॥
योऽनुत्तरः परो यश्चानन्दः समुच्छलन्।
ताविच्छोन्मेषसङ्घट्टाद् गच्छतोऽतिविचित्रताम्॥ (तन्त्रालोकः, ३.९२-९४)

३. परात्रिंशिकालघुवृत्तिः, ५-९अ. उपरि टीका।

४. परात्रिंशिकाविवरणम्, पृ. १८२।

५. तदेव, पृ. १८२, अकारस्य घनता कवर्गः कण्ठ्यत्वात्।

**चवर्गः**—चकारात् ञकारान्तानि व्यञ्जनानि इच्छाशक्तेः इकारस्य प्रथमस्थितेरुद्गच्छन्ति[१]। अस्मादेव एते पञ्च वर्णास्तालव्याः सन्ति।

**तवर्गः टवर्गश्च**—टकारात् णकारान्ता मूर्धन्यास्तकाराच्च नकारान्ता दन्त्या व्यञ्जनवर्णा अपि इच्छाशक्तेस्तत्तद्भूमिभिः सम्बद्धाः सन्ति। इच्छाशक्तिः ऋवर्णे ऌवर्णे च प्रवर्तते। यद्यपि (इच्छाशक्तिः) स्वात्मन्येव विश्राम्यति, तथापि सहसा प्रकाशनेन सम्बद्धा सती रकारं जनयति विपर्ययेण स्थैर्येण सम्बद्धा सती लकारं जनयति।

**पवर्गः**—ओष्ठ्याः पकारात् मकारान्ता वर्णा जागरणशक्ते-रुन्मेषशक्तेरुद्घाटनेन वा उद्गच्छन्ति। उन्मेषशक्तिश्च उवर्णात् प्रभवति।

**यरलवाः**—चत्वारोऽर्धस्वरा व्यञ्जनसदृशाः सन्ति अकारेण सह इकारऋकारऌकारोकाराणां संयोगेन तेभ्य उद्भूताः। तालव्येषु यकारः परिगण्यते इकारेण साकम्। रकारः ऋकारेण सह मूर्धन्येषु, लकारश्च ऌकारेण सह दन्त्येषु गण्यते। वकारो दन्त्योष्ठ्य इति स्वीक्रियते। ततश्च उ इति ओष्ठ्यस्वरेण सह स्थाप्यते। अभिनवगुप्तः परात्रिंशिकाविवरणे एवं विवृणुते—यकारः शकारश्च चवर्गेण सम्बद्धौ, रकारः षकारश्च टवर्गेण सह, सकारो लकारश्च तवर्गेण सह, वकारश्च तवर्गपवर्गाभ्यां सम्बद्धाः सन्ति।[२]।

**शषसाः**—त्रय ऊष्माण इच्छाशक्तेस्त्रिभिरंशैः सम्बद्धाः सन्ति। एते इकारेण ऋकारेण ऌकारेण च साम्यं भजन्ते। यदा इच्छाशक्तिः शुद्धा अविकसिता च तदा इकाररूपेण तिष्ठति। एषैव प्रायेण तेन स्थिरेण आदर्शेण विषयेण रूषिता सती यस्योपरि शक्तिः प्रेर्यते, ऊष्मरूपेण विकसिता भवति। एष ऊष्मा बहिरुच्छ्वासो यो हि तालव्यमूष्माणं शवर्णं जनयति। तदनु यदा इच्छाशक्तिम् अस्य विषयतीव्रतया अधिकरोति ऋवर्णेन सह तदा जनित ऊष्मा मूर्धन्य ऊष्मा षकारो भविता। अन्ते यदा सैव ऊर्जा अत्यन्तं जागरिता तेनैव विषयेण नियन्त्रिता परं स्थिरतया नियततया वा ऌकारे परिणता भवति[३], तदा दन्त्योष्मा सकार उत्पद्यते।

---

१. परात्रिंशिकाविवरणम्, ३.१५०।

२. परात्रिंशिकाविवरणम्, पृ. १८२, यशौ चवर्गस्यान्तः रषौ टवर्गस्य, लसौ तवर्गस्य वकारोऽपि तपवर्गयोः।

३. इच्छा या कर्मणा हीना या चैष्टव्येन रूषिता।
शीघ्रस्थैर्यप्रभिन्नेन त्रिधा भावमुपागता॥

ह—महाप्राणो हकारः पूर्णस्य निकटमत्वेन मन्यते। पूर्णेन सह साक्षात्सम्बन्धस्थापनाय अयमवर्णस्य उच्चारणस्थानेन सदृशमुच्चारणस्थानं भजते। हकारस्तु शक्तिः। एवं सर्वे वर्णा मातृकासिद्धान्तान्तर्गताः। एते वर्णा मध्यमास्तरे पृथग्भावमापन्ना मध्यमास्तरात् प्राक् पश्यन्तीस्तरे च पृथग्भावमनापद्य एव तिष्ठन्ति। वर्णा आदर्शाः सन्ति। भर्तृहरेरादर्शदर्शनस्य विकसितं रूपं विद्यते (अयं) मातृकासिद्धान्तः।



---

अनुन्मिषितमुन्मीलत्रोन्मीलितमिति स्थितम्।
इष्यमाणं त्रिधैतस्यां ताद्रूप्यस्यापरिच्युतेः॥
तदेव स्वोष्मणा स्वात्मस्वातन्त्र्यप्रेरणात्मना।
बहिर्भाव्यस्फुटं क्षिप्तं शषसत्रितयं स्थितम्॥ (तन्त्रालोकः, ३.१६२-१६४)

# योगतन्त्रे अवधूतवैशिष्ट्यप्रतिपादनम्

**डॉ. ए. लक्ष्मणरावशास्त्री**
द्वारा–प्रो. रामजीमालवीय:
सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:
वाराणसी



वाङ्मात्रेणेत्यादिनोक्तं यन्माहात्म्यं तु सद्गुरो:।
स चावधूत एवास्ति नान्य इत्युच्यते स्फुटम्।।

य: सर्वान् प्रकृतिविकारानवधुनोतीत्यवधूतो योगी, योगोऽस्यास्तीति योगी। तत्र धूञ्-कम्पने इति धातु: कम्पनार्थे प्रवर्तते। कम्पनम् = चालनम्। देहदैहिकप्रपञ्चादिषु विषयेषु सङ्गतं मन: परिगृह्य तेभ्य: प्रत्याहृत्य स्वधाममहिम्नि परिलीनचेता: प्रपञ्चशून्य आदिमध्यान्तनिधनभेदवर्जित:। तदेतद्युक्तमुच्यते—

क्लेशपाशतरङ्गाणां कृन्तनेन विमुण्डनम्।
सर्वावस्थाविनिर्मुक्त: सोऽवधूतोऽभिधीयते।।

निजस्मरविभूतिर्यो योगी स्वाङ्गे विभूषित:।
आधारो यस्य वा रूढि: सोऽवधूतोऽभिधीयते।।

लोकमध्ये स्थिरासीन: समस्तकलनोज्झित:।
कौपीनं खर्परोऽदैन्यं सोऽवधूतोऽभिधीयते।।

शं सुखं खं परं ब्रह्म शङ्खं सङ्घट्टनाद् भवेत्।
सिद्धान्तो धारितो येन सोऽवधूतोऽभिधीयते।।

स्वपिण्डममरीकर्तुमनन्ताममरीं च य:।
स्वयमेव पिबेदेतां सोऽवधूतोऽभिधीयते।।

अचिन्त्या वज्रवद् गाढा वासनामलसङ्कुला।
सा वज्री भक्षिता येन सोऽवधूतोऽभिधीयते॥

आवर्तयति यः सम्यक् स्वस्य मध्ये स्वयं सदा।
समत्वेन जगद्वेत्ति सोऽवधूतोऽभिधीयते॥

स्वात्मानमवगच्छेद्यः स्वात्मन्येवावतिष्ठते।
अनुत्थानमयः सम्यक् सोऽवधूतोऽभिधीयते॥

अनुत्थाधारसम्पन्नः परविश्रान्तिपारगः।
धृतचिन्मयतत्त्वज्ञः सोऽवधूतोऽभिधीयते॥

अव्यक्तं व्यक्तमाधत्ते व्यक्तं सर्वं ग्रसत्यलम्।
स्वसत्यस्यान्तरे मग्नः सोऽवधूतोऽभिधीयते॥

अवभासात्मको भासः स्वप्रकाशे सुखं स्थितः।
लीलया रमते लोके सोऽवधूतोऽभिधीयते[१]॥

सिद्धान्तो नाम न वादिप्रतिवादिभिर्निर्णीतोऽर्थः सिद्धान्तः, अपि त्वत्र सिद्धान्तः सिद्धस्य तात्पर्यार्थ एव सिद्धान्तपदेन व्यवहारपथमानेतव्यः।

क्वचिद्भोगी क्वचित्त्यागी क्वचिन्नग्नः पिशाचवत्।
क्वचिद्राजा क्व चाचारी सोऽवधूतोऽभिधीयते[२]॥

एवं सर्वमयः सर्वेभ्यो विलक्षणः पृथगिति बहुधा सिद्धसिद्धान्तपद्धत्यादियोगग्रन्थेषु प्रपञ्चितः। तद्विशेषं जिज्ञासुभिर्द्रष्टव्यं विस्तरभयान्नात्र लिख्यते। एवञ्च सर्वसाधनशिरोमणियोगमूर्तिभूता अवधूता एव परमपुरुषार्थविचक्षणाः सर्वशिरोमणयो जायन्ते।

सन्मार्गसाधका वर्णाश्रमाचारानपेक्षकाः।
योगिनो ह्यवधूता ये ते संक्षेपान्निरूपिताः॥

परमः पुरुषार्थस्तु मुक्तिरुक्ता ह्यतस्तु सा।
निरूप्यतेऽवधूतानां योगसाधनजं फलम्[३]॥

---

१. सि.प.ना.व्या. २/९; २. सि.प. ६/१९।
३. ना.नि. व्याख्या ५।

परमपुरुषार्थस्तु मुक्तिरित्युक्तम्। सा च नाथस्वरूपेणावस्थानम्। तत्स्वरूपं तु गोरक्षोपनिषदि—'अद्वैतोपरि सदानन्ददेवता'।।३।।

'स्वयममनस्कमश्रोत्रपाणिपादं ज्योतिर्विदितं तत्र लोका न लोकाः, वेदा न वेदाः, देवा न देवाः, यज्ञा न यज्ञाः, माता न माता, पिता न पिता, स्नुषा न स्नुषा, चाण्डालो न चाण्डालः, पौष्कसो न पौष्कसः, श्रमणो न श्रमणः, पशवो न पशवः, तापसो न तापस इत्येकमेव परमिति'।

ब्रह्मबिन्दौ च—

'नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च'। इत्यादि।।६।।

सर्वोपनिषत्सारे—

'कथं बन्धः कथं मोक्षः' इत्यादिप्रश्ने 'अनात्मनो देहादीनात्मत्वेनाभिमन्यते सोऽभिमानः, आत्मनो बन्धस्तन्निवृत्तिर्मोक्षः' इत्यनेन स्वरूपेणावस्थानमिति सिद्धम्।

अमनस्के—

भावाभावविनिर्मुक्तं नाशोत्पत्तिविवर्जितम्।
सर्वसङ्कल्पनातीतं परं ब्रह्म तदुच्यते।। (१.१२)

अवधूतगीतायां च—

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे।
समं तत्त्वं न विन्दन्ति द्वैताद्वैतविलक्षणम्।। (१.३६)

तेषामवधूतानां मुख्यचिह्नं किमित्यपेक्षायां मुद्रा-नाद-विभूति-आदेशधारणं मुख्यमिति तत्प्रशंसामाह सिद्धसिद्धान्तपद्धतौ—

मुदमोदे तु रादाने जीवात्मपरमात्मनोः।
उभयोरैक्यसम्भूतिर्मुद्रेति परिकीर्तिता।।

मोदन्ते देवसङ्घाश्च द्रवन्ते सुरराशयः।
मुद्रेति कथिता साक्षात्सदा भद्रार्थदायिनी[1]।।

तद्धारणं कर्णयोर्विना क्षुरिकां न सम्भवतीति क्षुरिकाप्रशंसामाह क्षुरिकोपनिषदि—

१. सि.प. ६।

क्षुरिकां सम्प्रवक्ष्यामि धारणां योगसिद्धये।
सम्प्राप्य न पुनर्जन्म योगयुक्तस्य जायते॥१॥

बृहदारण्यके—अथात आदेशो नेति नेतीति।

छान्दोग्ये च—उत तमादेशमित्यादि।

तेषामन्योऽन्यमन्यत्रापि च यो वाग्व्यवहारस्तमाह सिद्धसिद्धान्तपद्धतौ—

आत्मेति परमात्मेति जीवात्मेति विचारणे।
त्रयाणामैक्यसम्भूतिरादेश इति कीर्तितः॥
आदेश इति सद्वाणीं सर्वद्वन्द्वक्षयावहाम्।
यो योगिनं प्रतिवदेत्स वेत्त्यात्मानमीश्वरम्॥ इति॥६/२५॥

(नादधारणमाह गोरक्षोपनिषदि—अनाहतशृङ्गीति।)

तेषां भस्मोद्धूलनमपि तत्त्रिपुण्ड्रमपि च तैर्धार्यमिति तद्धारणप्रकारप्रशंसे प्राह कालाग्निरुद्रोपनिषदि—

'कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि भगवँस्त्रिपुण्ड्रं सविधि सतत्त्वं किं द्रव्यमित्यादि-प्रश्ने तं होवाच भगवान्—यद्द्रव्यं तदाग्नेयं भस्मसाद्यदिदं ब्राह्मणैः परिगृह्य 'अग्निरिति भस्म' इत्यभिमन्त्र्य' इत्यादि 'प्रकुर्वीत व्रतमेव तच्छाम्भवं समाचरेन्मुमुक्षुर्न भवाय यथा सनत्कुमार' इत्यन्तं 'समस्तपातकोपपातकेभ्यः पूतो भवति, तेन सर्वे देवा ध्याता भवन्ति, स सर्वैर्देवैर्ज्ञातो भवति, स सर्वतीर्थेषु स्नातो भवति, देहं त्यक्त्वा शिवसायुज्यतामेति, न स पुनरावर्त्तते, न स पुनरावर्त्तते, इत्याह कालाग्निरुद्र इति'। (सं.सा.)

तेषामनियत एव व्यवहार इत्याह सिद्धसिद्धान्तपद्धतौ—

यदि सर्वगतो देवः स्थिरः पूर्णो निरन्तरः।
अहो माया महामोहो द्वैताद्वैतविकल्पना॥ (१.६१)

श्रीनित्यनाथकृतसिद्धसिद्धान्तपद्धतौ—

न ब्रह्मा विष्णुरुद्रौ न सुरपतिसुरा नैव पृथ्वी न चारो
नैवाग्निर्नापि वायुर्न च गगनतलं नो दिशो नैव कालः।
नो वेदा नैव यज्ञा न च रविशशिनौ नो विधिर्नैव कल्पाः
स्वं ज्योतिः सत्यमेकं जयति तव पदं सच्चिदानन्दमूर्ते॥ (१.३)

सा मूर्तिः का? तथाह श्रीनित्यनाथकृतसिद्धसिद्धान्तपद्धतौ—

आदिनाथं महासिद्धं शक्तियुक्तं जगद्गुरुम्।
तं वन्दे नित्यतो वक्ष्ये सिद्धान्तं स्वानुभावतः॥

पुनरत्रैव प्रवृत्तौ आदिदेवमेतत्पदेनावस्थानं मुक्तिरिति। नाथस्य लक्षणं तु राजगुह्ये—

नाकारो नादरूपं च थकारः स्थाप्यते सदा।
भुवनत्रयमेवैकः श्रीगोरक्ष नमोऽस्तु ते॥

शक्तिसङ्गमतन्त्रे—

श्रीमोक्षदानदक्षत्वान्नाथ(द)ब्रह्मानुबोधनात्।
स्थगिताज्ञानविभवाच्छ्रीनाथ इति गीयते॥

इत्यादीनि वाक्यानि प्रमाणानि। तस्य निदर्शनं शास्त्राणि सूर्यस्य दीपा इव कथं करिष्यन्ति। तत्तु पदं तादृग्योगिनामेवापरोक्षमिति सिद्धान्तः। अन्ये तु मतवादिनस्तत्पदमनालम्बमानाः स्वाभिप्रायानुसारि तत्पदं विधाय विवाद-भाराक्रान्तमतयः क्लिश्यन्ति, न तु शाम्यन्तीत्याह सिद्धसिद्धान्तपद्धतौ—

वेदान्ती बहुतर्ककर्कशमतिर्ग्रस्तः परं मायया
भाट्टाः कर्मफलाकुला हतधियो द्वैतेन वैशेषिकाः।
अन्ये भेदरता विवादविकलास्ते तत्त्वतो वञ्चिता-
स्तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत्॥ (६.७३)

अस्यार्थः—वेदान्ती वेदोत्तरभागशास्त्रवादी अद्वैतवस्तुन्यध्यारोपाप-वादाभ्यां द्वैतकल्पनां कुर्वन् बहुभिस्तर्कैः कर्कशा कठोरा मतिर्यस्य सोऽत एव परं केवलं ग्रस्तो यतो निर्मायिकं वस्तु वदन् मायादूषणं च तत्र ददाति। पुनश्च भाट्टा मीमांसका अनीश्वरवादमारोपयन्तः कर्मफलेष्वेवाकुलिताः सन्तो गतधियो भवन्ति। तथा द्वैतेन द्वैतवादेन वैशेषिका अपि गतधिय एव। तदन्येऽपि ये भेदवादरतास्तेऽपि विवादविकला एव भवन्ति। यत एते तत्त्वतो वञ्चिता भवन्ति, न तु तत्त्वमालम्बन्त इत्यर्थः। तस्मान्महासिद्धानां स्वाभाविकं सहजावस्थामयं मतं धीरः पुमान् संश्रयेत्। तदेव श्रेयस्करमिति मान्यम्।

साङ्ख्या वैष्णववैदिका विधिपराः संन्यासिनस्तापसाः
सौराश्चीरपराः प्रपञ्चनिरता बौद्धा जिनाः श्रावकाः।
एते कष्टरता वृथापथगतास्ते तत्त्वतो वञ्चिता-
स्तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत्॥

(सि.प. ६.७४)

अस्यार्थः—साङ्ख्याः प्रकृतिकारणवादिनः कपिलमतानुयायिन इति यावत्, वैष्णवाः पाञ्चरात्राः, वैदिका वेदानुवर्त्तिनस्ते च विधिपरा वाक्यकोविदा इत्यर्थः। स्पष्टमन्यत्।

आचार्या बहुदीक्षिताहुतिरता नग्नव्रतास्तापसा
नानातीर्थनिषेवका जिनपरा मौने स्थिता नित्यशः।
एते ते खलु दुःखभारनिरतास्ते तत्त्वतो वञ्चिता-
स्तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत्॥

(सिद्धसिद्धान्तपद्धतौ-६.७५)

अस्यार्थः—आचार्या मन्त्रव्याख्यातारो बहुदीक्षिता अग्निहोत्रादिकर्त्तारः, त एवाहुतिपरा न तत्त्वपराः, अजिनपरा वल्कलवाससस्ते तीर्थनिषेवका यद्वा जपपराः, शेषं स्पष्टम्। इत्यादि। हठप्रदीपिकायां च—

केचिदागमजालेन केचिन्निगमसङ्कुलाः।
केचित्तर्केण मुह्यन्ति नैव जानन्ति शाङ्करीम्॥ (४.४०)

अस्यार्थः—केचिद्वैखानसाद्यागमोक्ततत्त्वभ्रमास्तत्र तत्त्वाभिमानिनो देहात्मवादिनश्चार्वाकसधर्माणस्ते मनुष्यास्तत्त्वचक्राद्वञ्चिता जीवन्तोऽपि मृतकमिव शरीरं सत्कर्मानर्हं कुर्वाणा देवनिन्दका इति। केचिच्च ऋग्यजुरादिवेदासक्ताः कर्मज्ञानरताः कर्मणैवायुः पूर्णं कुर्वन्ति, अथ च तत्त्ववञ्चिताः साधनेऽशक्तास्ते हि कातर्य्येण प्रारब्धशरणं भूत्वा शरीरसुखार्थमहं ब्रह्मेति वदन्तस्तिष्ठन्ति, तदेवात्मानं चेद्विजानीयादित्यादावुक्तम्। एवं निगमसङ्कुला इति। केचिच्चातर्क्यैश्वर्ये परमपदे वस्तुनि शुष्कतर्कानाश्रित्य पण्डितम्मन्या भवन्तीति कृत्वा शाङ्करीं न जानन्तीति।

सा शाङ्करी स्तूयते हठप्रदीपिकायाम्—

वेदशास्त्रपुराणानि सामान्यगणिका इव।
मा पुनः शाङ्करी मुद्रा प्राप्ता कुलवधूरिव।। (४/३५)

ऋग्यजुरादयो वेदा धर्मार्थकाममोक्षोपदेष्टारो ब्रह्मचर्यगृहस्थवान-प्रस्थभिक्षुकाश्रमोपदेष्टारश्च भवन्ति। ते च मुख्ये वस्तुनि गौणत्वमापादयन्त्यमुख्ये च मुख्यत्वमतो यत्र तादृशा अधिकारिणो बहवो लग्नास्ते चोत्तमपुरुषसेवनीया द्रव्यस्पृहः प्रवृत्तावेवासक्ता भवन्ति। शास्त्राणि च वैशेषिकादीनि। तैर्भ्रममूलकैः कदापि विश्रान्तिर्नास्ति। पुराणानि च नराणामत्मसाधनेष्वशक्तत्वं प्राय आपादयन्ति। यतो बालकानामिव रुचिरतरासु कथासु लोकानां चित्तवृत्तिं गमयन्ति। तेऽपि सर्वे सामान्यगणिका इव भवन्ति। तद्यथा—गणिकागृहे शृङ्गारप्रधाना एव वार्ता मुख्याः स्युरैश्वरी वार्त्ता तु गौणी, ताश्च गणिका बह्व्यो बहूनां धूर्तानां लम्पटानामुपरि चासक्ता भवन्त्यः सत्यवादिनामकामिनां प्रियेश्वरकथानामुपरि नासक्तिं कुर्वन्तीति।

किञ्च इह खलु संसारे योगो भोगश्च द्वौ पदार्थौ स्तः। एतद्द्वयं विना किमपि न स्यात्, सर्वस्याप्येतयोरन्तर्भूतत्वादिति। तयोर्मध्ये योगे लग्ना महासिद्धाः, भोगे तु सर्वे संसारिणः। योगस्य फलं मुक्तिर्भोगस्य तु बन्ध इति। यद्यपि भोगाद्बन्धस्तथापि नानाविलासैर्विषयानन्दं विलुण्ठयति। यदि दुःखमपि भवेत्तर्हि भवतु नामेति। योगिनां तु पुनः प्रथमतः किञ्चिच्छ्रमो भवेत्, 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' (उ.सि.स.) इत्याद्युक्तत्वादिति, पश्चात्तु महानन्दः। तत्र बहवः कथयन्ति—किञ्चिदिति कथम्, योगे तु क्लेशोऽधिकतर इत्युक्तम्। तदुपरि मया तु कथ्यते—भो पुरुषाः! गुरुहीनानां तेषां कष्टं भवेत्, यदा तादृशः पूर्वोक्तः पूर्णो गुरुर्लभ्येत तदा महदपि कष्टं स्वल्पं भवेत्। तत्र दृष्टान्तो यथा महाभारयुक्ता या शिला भवेत् तस्या उत्थापने सहस्राणामपि पुरुषाणां कष्टं भवेत्, सा च बुद्धिमता पुरुषेण कृतकाष्ठादि-यत्नेनाप्रयासेनैवोत्थाप्यते, तथा दारुमय्या कुञ्चिकया स्वल्पेनापि कष्टेन सहजसिद्धिर्भवति, यदि च महत्कष्टमपि भवेत्, तदा कष्टोत्तरं तु महानानन्दो भवत्येव, यस्त्वखण्डैकनाथरूपो भवति। ब्रह्मविष्ण्वाद्यधीश्वरो भवति। नानारूपो भवति। ब्रह्मादयः सर्वे तस्य पूजां कुर्वन्ति। योगारूढो नानाभोगान् भुनक्ति, न तु तैर्लिप्यते। योगं विना भोगी रोग्येव स्यात्, भोग्यपि योगी संसारीव दृश्यते, न तु संसारी च बन्धनं प्राप्नोति।

ननु केचिच्छास्त्रिणः कर्माद्युपासनं साधनं कथयन्ति, तदा मया कथ्यते तेषां कथनं मया न निवार्यते, तदेव कुर्वन्तु नाम; परन्तु तत्करणे फलं किमिति कथं कर्मणामवधिर्मीमांसकमते तु पठनपाठनोत्तरं पठनपाठनदोषनिवृत्त्यर्थ-मिष्टस्मरणं कुर्वन्ति। यस्य शास्त्रस्य पठने पाठने चापि दोषस्तस्य सेवनेन किं भविष्यतीति। पुनः यं स्वामिनं भजेत् स स्वतन्त्रो भवेत्, यश्च प्रसन्नः स्वयमेव यदिच्छति तद्ददाति मन्त्रिभ्यः। अन्यस्य तु पुरुषस्य न कस्याप्यपेक्षां करोति। अयं देहः कर्मरचितः, कर्माणि च सर्वाणि त्रिगुणानां सन्ति, गुणाश्च मायायाः। एवञ्च यद्यनेन प्राणिनां प्रारब्धं कर्माभिमतं तदा मायाऽभिमता, तदभिमाने च तत्रैव समये ब्रह्मतत्त्वात् पृथग्भूतः। ततश्च पूर्वं पश्चादपि गुणलेशो विद्यत एव, स च बाधक एव, तस्मात्प्रारब्धकर्मनिर्मूलकरणमवधूतानामेव कर्म।

वेदान्ती चित्तशुद्ध्यर्थं कर्माभिमत्य तदनन्तरं ज्ञानं साधनमित्युपदिशति, अतः सोऽपि सापेक्ष एव। मीमांसको मन्त्रीव राजसापेक्षः; परन्तु सापेक्षता तूभयोरेवास्ति, स च कस्याप्यपेक्षामकुर्वन् योग आवश्यकः, सर्वेषां कर्त्तव्यो यः सर्वदा स्वतन्त्रोऽस्ति।

मीमांसको द्वैतमभिमन्यते, वेदान्ती त्वद्वैतमभिमन्यते, तदुपरि च वदामः—एतदुभयमपि प्रकृतिविकारः। प्रकृतिविकारश्च सदा चञ्चलो, नास्ति कदापि स्थिरः। ब्रह्म तु सर्वदा स्थिरमेवास्ति। तत्र द्वैतवादिनो निश्चलं नास्तीति वदन्ति, तथैवाद्वैतमभिमन्यतां निश्चलं नास्तीति कथम्?

यदि ब्रह्माद्वैतमस्ति तर्हि द्वैतं कुत आगतम्? तदा मायाकल्पितमिति ते वदेयुस्तर्हि तान्वदतो वयमवाचोऽक्रियाश्च कुर्मः, तत्किमिति चेदुच्यते—अद्वैतं तु निष्क्रियादि त्याज्यमस्ति। यतः कस्यापि वस्तुनो भोगोऽपि युष्माभिर्न कर्त्तव्य इत्याद्यनेकविधिभिरद्वैतखण्डनं करिष्यामः। महासिद्धैरुक्तं यद् द्वैताद्वैतविवर्जितं पदं निश्चलं दृश्यते तदेव सत्यमित्यभ्युपगमिष्यामः, तत्तु उग्रभैरवनामक-कापालिकरूपतः श्रीभैरवेण शङ्कराचार्योपरि कृतम्।

कथम्? चतुर्भिः शिष्यैः संयुक्तः शङ्कराचार्यो नदीतीरे स्थितः, तस्मिन्स्थले कापालिकः समुपागत्योक्तवान्—भो! त्वं तु संन्यासी, मित्रारिपक्षे तुल्यः, सुखदुःखादिद्वन्द्वपदार्थरहितोऽस्यस्माकं चायमभिप्रायो वर्त्तते—यत् तव शिर उच्छिद्य पश्चात् श्रीभैरवार्पणं करिष्यामि तदा मम प्रतिज्ञा पूर्णा भविष्यति,

अतो भवान् शिरो ददात्विति। तदा शङ्कराचार्येणालोचितं नैवं करिष्यते तदा त्वद्वैतहानिः शत्रुमित्रपक्षे तुल्यत्वं न स्यात्, कृते च पराजयो भवेत्। एतद्विचारेऽपि पराजय एवेति मत्वा न किमपि तेनोक्तम्। शैथिल्यं जातम्। तदा पद्मपादाचार्येण नृसिंहस्मरणं कृतम्। उग्रभैरवोपरि नृसिंहेण प्रहारः कृतो यस्तु महासिद्धस्तच्छरीरं त्यक्त्वा तादृशमेव च शरीरं गृहीत्वा सम्मुखे संस्थितो भूत्वा प्रसन्नवदनो मेघगम्भीरया गिरोवाच—भो! अद्वैतपराजयोऽद्वैतपराजय इति। शत्रुमित्रपक्षे तुल्यत्वं यदवदस्तत्कुत्र गतम्।

मदीयं तु यथा मल्लो नियुद्धे स्वयमेव निपत्यान्यस्य पातनं करोति तथा स्वशरीरं त्यक्त्वा परसिद्धान्तहानिः कृतैवेति चरितं पुनः साम्प्रतं त्वदीयहानिरतः परमपि क्रियते। उत्तिष्ठोत्तिष्ठ युद्धं कुर्वित्याह, तदा प्रारब्धकर्माचरणं वर्त्तते न्यासिनां मते यतः क्रियाकरणमिति सिद्धान्तो नास्तीति कृत्वा युद्धेऽशक्तो जातः। कापालिकोपदेशेनाक्रियैव स्वसिद्धान्तेऽद्वैत-स्थितिवत्स्थितः। तदा कापालिकेन योगमाया निर्मिता, तया च चतुःशिष्यसंयुक्तस्याचार्यस्य मस्तकं छिन्नम्, पश्चाच्च सञ्जीवितः कृतस्तर्हि विरागो जातः। पश्चिमायां दिशि गतः शक्तिस्मरणं कृतवान्[1]।

पूर्ववार्त्ता। शङ्कराचार्यस्योत्पत्तिर्दक्षिणस्यां दिशि। तत्र तु कर्मसेवनमेव कृतं विष्णूपासनादि। यदा चित्तशान्तिर्न जाता, तदा पृथ्वीपरिक्रमाकरणार्थं प्रयाणं कृतम्। पूर्वस्यां दिशि चागत्य वैद्यनाथाख्यस्थलं गत्वा पूजां चकार। तदेश्वरेण नाङ्गीकृता पूजा। किमर्थं त्वया विष्णुभक्तिः कृता। अहं तु साक्षादीश्वरः, स तु त्वया विस्मृत इति। तदा शङ्करेणापराधक्षान्तयेऽपराधक्षमापननामकं स्तोत्रं कृतम्, पुनरपि शिवभक्तिर्विशेषेण कृता, तथापि चित्तशान्तिर्न जाता। पश्चाच्च पश्चिमां दिशं गतस्तत्र शक्तिरहितो जातः, शक्तेर्वृत्तान्तं दृष्टवान्। तदा शक्त्योक्तं शिव एव सर्वं करिष्यतीति। तेन भयाकुलो जातः। सौन्दर्यलहरीनामकं स्तोत्रं कृत्वा शाक्तो जातस्तथापि पूर्णा शान्तिर्न जाता। तत उत्तरां दिशं गतः। सा तु महासिद्धसमुदायेन सर्वाऽपि दिग्व्याप्ता। यत्र यत्र गतस्तत्र तत्र सर्वैरुपहासः कृतस्तत्र श्रीतारानाथेनोक्तम्—तीर्थाटनमेव करिष्यते किमप्यात्मसाधनमपि करिष्यते? तदा शङ्करेणोक्तम्—भवद्भिर्यत्कथ्यते तन्मया करिष्यते। तदा महासिद्धेन योगोपदेशः कृतस्तेन सर्वबाधानिवृत्तात्मा च प्रसन्नो जातस्तदा वज्रचूनिकोपनिषत् कृता। सा तु सर्वाऽपि नाथमार्गानुसारिण्येव। तत्र

१. सिद्धान्तसंग्रहे, पृ.सं. १३।

श्रीसिद्धसिद्धान्तपद्धतिप्रमाणं दत्तं 'वेदान्ती बहुतर्ककर्कशमतिः' इत्यादि 'तस्मात्सिद्धमतं स्वभावसमयं धीरः परं संश्रयेत्' इत्यन्तानि पद्यानीति, यथा मण्डनमिश्रः सुरेश्वराचार्यो जातस्तथाऽयमपि सिद्धो भूत्वा सिद्धान्तबिन्दुप्रभृति-ग्रन्थाँश्चकार[१]।

सिद्धान्तस्तु सिद्धस्य तात्पर्यार्थ एव सिद्धान्तो न तु वादिप्रतिवादिभिर्निर्णीतोऽर्थः सिद्धान्तः। तन्मध्ये न चैकं तदन्यद्द्वितीयं कुतः स्यात्तत्तु द्वैताद्वैतविलक्षणत्वेनैव सिद्धान्तो जातः। न्यासिनां त्वद्वैतमेव सिद्धान्तो भवतीत्येषा रीतिर्ज्ञेया।

अन्यैः सिद्धान्तः कथ्यते। तेषां मुख्ये सिद्धान्तशब्दप्रवृत्तिर्महासिद्धानां मुखादागतोऽन्यमुखे सिद्धान्तः केवलं रूढित एव। सिद्धानां मते रूढिर्यौगिकश्च द्वयमपि वर्तते। तर्हि सिद्धान्तः सिद्धयत्येव तात्पर्यम्। एतत्कारणात् सिद्धस्यैव सिद्धान्तो न त्वन्यस्यात एव शङ्करेण सिद्धान्तबिन्दुः कृतः।

प्रथमं तु दक्षिणदेशे कर्मसेवनं विष्णूपासना कृता, पश्चात्पूर्वदेशे शिवदर्शने संन्यासो गृहीतः, पश्चिमे च शक्तिदर्शने शाक्तो जातस्तन्त्रविषयकं प्रपञ्चसारादिग्रन्थं कृतवान्, पश्चादुत्तरदेशे सिद्धोपदेशेनावधूतावस्था गृहीता। तेन सर्वं श्रेयो जातमिति।

ननु कापालिकप्रसङ्गकथनादेतेषां कापालिकमतमिति कैश्चिज्ज्ञायत इति, तत्तु नास्त्येवास्माकं मतं त्ववधूतमेव; परन्तु कापालिकमपि मतं नाथेनैव प्रकटीकृतमेतन्मार्गस्य प्रकटनकर्त्ता नाथ एव। तदुक्तं शाबरतन्त्रे—

आदिनाथो ह्यनादिश्च कालश्चैवातिकालकः।
करालो विकरालश्च महाकालश्च सप्तमः।।
कालभैरवनाथश्च बटुकस्तदनन्तरम्।
भूतनाथो वीरनाथः श्रीकण्ठो द्वादशो मतः।।

एते कापालिकाः प्रोक्ता वीरतुम्बीमहाफलैः।
शिष्याणां सूर्यसङ्ख्या च तानहो वच्मि संशृणु।।
नागार्जुनो जडभरतो हरिश्चन्द्रस्तृतीयकः।
सत्यनाथो भीमनाथो गोरक्षश्चर्पटस्तथा।।

---

१. सिद्धान्तसङ्ग्रहे, पृ. १३।

अवद्यश्चैव वैराग्यः कन्थाधारी जलन्धरः।
मार्गप्रवर्तका ह्येते तद्वच्च मलयार्जुनः॥

पुनः शैवः शाक्तोऽपि मार्गस्तन्त्रानुसारी। तस्याप्युपदेष्टा नाथ एव। नाथेनैव रचितानि तन्त्राणि। तदुक्तं षोडशनित्यातन्त्रे—

कादिसंज्ञा भवद्रूपा सा शक्तिः सर्वसिद्धये।
तन्त्रं मदुक्तं भुवने नवनाथैरकल्पयत्॥
तया तैर्भुवने तन्त्रं कल्पे कल्पे विजृम्भितम्।
अवसाने तु कल्पानां सा तैः सार्द्धं व्रजेच्च माम्॥
नामपर्यायतो व्याप्तं कालावाप्तमिदं द्वयम्।
प्रसिद्धं बाह्यतो यच्च त्रीणि नामानि साधके॥
नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह॥
नवाय नवरूपाय परमार्थैकरूपिणे।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते॥
स्वतन्त्राय दयाशक्तिविग्रहाय रसात्मने।
परतन्त्राय शाक्तानां भव्याय भव्यरूपिणे॥

पुनः योगस्तु कस्यापि सापेक्षो नास्ति; परन्तु तान्त्रिकाणामयमेव सिद्धान्तो वर्त्तते यत्रोत्तरावस्थाऽवधूत एव। तदुक्तं षट्शाम्भवरहस्ये—

अथान्यत्सम्प्रवक्ष्यामि सम्प्रदायस्वरूपकम्।
आदितो वैदिकः प्रोक्तस्ततो हि वैष्णवः परः॥
ततो गाणपतः प्रोक्तः क्रमेण हि मया तव।
गाणपत्यं च द्विविधं ततः सौरं प्रकीर्तितम्॥
सौराच्छ्रेष्ठं शैवशास्त्रं शैवाच्छाक्तं महेश्वरि।
शाक्ताद्वामं महादेवि श्रेष्ठं ते परिकीर्तितम्॥

वामात्तु दक्षिणं श्रेष्ठं दक्षिणाद्वीर एव तु।
अथ वीराच्चावधूतः कौलः पूर्वं प्रकीर्तितः।।
अवधूताद्दिव्यमार्गो दिव्याच्छ्रेष्ठो न विद्यते[१]।। इति।

तान्त्रिकानुष्ठानस्य फलमपि योग एव। योगिनां पूर्वावस्थायामपि योगित्वमुत्तरावस्थायामपि योगित्वमेव न त्ववस्थाभेदाद् गौणमुख्यभावौ। तन्त्रादि तस्य कस्यापि सापेक्षम्; परन्तु तान्त्रिकाणां पूर्वावस्था तन्त्रानुष्ठानं बहिरङ्गमुपासनं, योगिनां त्वन्तरङ्गमुपासनम्। इयं रीतिस्तान्त्रिकाणाम्—तान्त्रिकः प्रथमतो बहिरङ्गपूजनं स्थूलशक्तेः करोति, पश्चादवधूतपदे प्राप्तेऽन्तरङ्गपूजनं सूक्ष्मशक्तेः कुण्डलिन्याः करोति। अतः कारणात्तान्त्रिकाणामपि तात्पर्यमवधूतपद एवेति।



१. षट्. १.१४०-१४४।

# ग्रहणयोः सामान्यपरिचयः

**श्रीजितेन्द्रकुमारदुबे**
अनुसन्धाता, ज्योतिष-विभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणस्याम्



ज्योतिषशास्त्रे सूर्यग्रहणचन्द्रग्रहणयोर्विवेचनं एवमस्ति। तत्र ग्रहणं नाम ग्राहकेण ग्राह्यं गृह्यते स्वाभिमुखमाकृष्यत इति। तद् द्विविधम्—सूर्यश्चन्द्रश्चेति। सूर्यस्य ग्रहणं सूर्यग्रहणं चन्द्रस्य ग्रहणं चन्द्रग्रहणम्। ग्रहणकाले यदा पृथिव्याः छाया चन्द्रमाच्छादयति, तदा चन्द्रग्रहणं भवति। यदा चन्द्रः सूर्यमाच्छादयति, तदा सूर्यग्रहणं भवति। यथोक्तमस्ति आर्षग्रन्थे सूर्यसिद्धान्तेऽपि—

'छादको भास्करस्येन्दुरधःस्थो धनवद्भवेत्।
भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ[1]'॥

अर्थाद् अधोवासी चन्द्रो मेघ इव सूर्यमाच्छादयति, अनेनैव सूर्यग्रहणमवलोक्यते। कूर्मपुराणेऽपि पूर्वार्द्धस्य ४१ तमेऽध्याये स्पष्टं लिखितमस्ति यत्—

'उद्धृत्य पृथ्वीच्छायां निर्मितो मण्डलाकृतिः।
स्वभानोस्तु बृहत् स्थानं तृतीयं यत्तमोमयम्[2]'॥

चन्द्रग्रहणाधिकारे आर्षग्रन्थे उल्लिखितमस्ति—

'भानोर्भार्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा।
शशाङ्कपाते ग्रहणं कियद् भागाधिकोनके[3]'॥

पृथिव्याः छाया सूर्यतः षड्राशेरन्तरे भ्रमणं करोति तथा च पौर्णमास्यां चन्द्रमसः सूर्यतः षड्राशेरन्तरेण भ्रमणं करोति। अमावास्याया द्वितीयं नाम

१. सूर्यसिद्धान्तः, चन्द्रग्रहणाधिकारः, श्लो. सं. ९।
२. कूर्मपुराणम्, ४१ अ., श्लो. सं. २४।
३. सूर्यसिद्धान्तः, चन्द्रग्रहणाधिकारः, श्लो. सं. ६।

सूर्येन्दुसङ्गमोऽस्ति। अर्थात् सूर्याचन्द्रमसौ द्वावपि स्व-स्वकक्षायां परिभ्रमतावपि अमावास्यायामेकस्मिन् राशौ भवतः। एतादृशः सङ्गमः प्रत्येकस्मिन् अमावास्यायां भवति। 'अमावास्या' इति शब्देनापि द्वयोः सङ्गमो दृढो भवति।

भगवद्भास्कराचार्येण स्वरचितग्रन्थे सिद्धान्तशिरोमणेः पर्वसम्भवाधिकारे ग्रहणस्य कालनिर्णयः, ग्राससम्भवम्, छाद्यच्छादकबिम्बविवेचनम्, ग्राह्यग्राहकयोर्निधारणम् अनेन प्रकारेण कृतम्—

सपातसूर्योऽस्य भुजांशका यदा मनू१४नंकाः स्याद्ग्रहणस्य सम्भवः।
ग्रहार्ध-०/१५ युक्तस्य सपातभास्वतो भुजांशकान् गोलदिशोऽवगम्य च।।
ज्ञेयोऽर्को रविसङ्क्रमाद्गतदिनैर्दर्शान्तनाडीनता-
द्वेदां४शेन ग्रहादिनोनसहितः प्राक् पश्चिमेऽस्यापमः[१]।

सूर्यग्रहणसम्भवः—सपातसूर्यस्य भुजांशके यदा नागाल्पो जायते, तदा सूर्यग्रहणं भवति। चन्द्रबिम्बेन यदा आच्छाद्यते तदा रविग्रहणं भवति।

चन्द्रग्रहणसम्भवः—सपातसूर्यस्य भुजांशा यदा इन्द्रांशाल्पाः स्युः, तदा चन्द्रग्रहणं भवति।

वलयग्रहणसम्भवः—सूच्यां बहिःस्थिते मध्यसूत्रे यदि दृक्स्थानं भवति, तदा दृश्यचन्द्रबिम्बाद् रविबिम्बकलामानेऽधिके सति वलयग्रहणम्।

खग्रासग्रहणसम्भवः—सूच्यां मध्ये यदा दृष्टिस्थानं भवति, तदा दृश्यचन्द्रकलाभ्यो रविबिम्बकलामानमल्पत्वात् खग्राससम्भवं जायते।

परञ्च लोकमते पौर्णिमायां चन्द्रस्य धवलस्वरूपे मालिन्यम्, कृष्णिमा, पाटलादिवर्णपरिवर्तनस्यैव नामग्रहणमिति ज्ञायते। अथवा एकग्रहोपर्यन्य-ग्रहजन्यदृष्टिगोचरविकारस्य नामैव ग्रहणं भवति।

सिद्धान्ततत्त्वविवेकस्य चन्द्रग्रहणाधिकारे छाद्यच्छादकयोर्ग्रासः, खग्रासयोः स्पर्शः, स्थितिः, सर्वग्रहणचन्द्रसरः, स्पर्शिकास्थितिदलम्, मौक्षिकं स्थितिदलम्, सम्मीलनोन्मीलनमोक्षः, चन्द्रवलयग्रहणं मर्द इत्यादिविषयाणां विवेचनं विस्तृतरूपेण कमलाकरभट्टेन कृतमस्ति।

'अर्कग्रहेऽपि चन्द्रस्य छायासंस्थो न पश्यति।
विधानात्सूर्यबिम्बं च स्वच्छांयान्तर्गतेन्दुना।।

१. सिद्धान्तशिरोमणिः, पर्वसम्भवाधिकारः, श्लो. सं. ३, पृ.२२६-२२७।

स एव च्छादको युक्तो योऽस्ति दृष्ट्यवरोधकृत्।
नेन्दुपातस्तथा किन्तु तत्सान्निध्याद् ग्रहस्तु सः[1]॥

छादकः—छाद्यतेऽनेनेति छादकः। छादयतीति छादकः।

छाद्यः—छादयितुं योग्यः छाद्यः।

ग्रासः—छाद्यबिम्बे यावान् प्रदेशः छादकेनाच्छादितस्तावान् ग्रासशब्देन बोध्यते।

सर्वग्रहणम्—छाद्यबिम्बतुल्ये ग्रासे सर्वग्रहणमिति।

खग्रासः—छाद्यबिम्बाधिके ग्रासे च ग्रासो जायते, खशब्देनाकाशो बोध्यः।

स्पर्शः—यदा भूभा चन्द्रबिम्बं स्पृशति तदा चन्द्रंग्रहणस्य स्पर्शो भवति।

चन्द्रसरः—चन्द्रबिम्बकेन्द्रात्क्रान्तिवृत्तावधि लम्बरूपान्तरस्य चन्द्रसरसंज्ञा दीयते।

स्थितिः—ग्रहणस्पर्शकालादेव ग्रहणमोक्षावधिकालो ग्रहणस्थितिकालो भवति।

स्पर्शिकास्थितिदलम्—ग्रहणस्पर्शकालाद् ग्रहणमध्यकालावधिसमयः स्पर्शिकास्थितिदलमिति ज्ञेयम्।

मौक्षिकं स्थितिदलम्—ग्रहणमध्यकालान्मोक्षावधिसमयो मौक्षिकं स्थिति-दलमिति कथ्यते।

स्पर्शः—ग्रहणारम्भकालः स्पर्शकालो भवति छादकछाद्यबिम्बयोर्यदा प्राग् बहिः स्पर्शस्तदा ग्रहणेन स्पर्शो भवति।

मोक्षः—छादकछाद्यबिम्बयोर्यदा पश्चाद् बहिः स्पर्शस्तदा ग्रहणस्य मोक्षो भवति।

सम्मीलनम्—ग्रहणे स्पर्शानन्तरं यदा शनैः शनैः चन्द्रस्थसमस्तबिम्बं भूभाबिम्बान्तः प्रविष्टं तदा ग्रहणस्य सम्मीलनं जायते।

उन्मीलनम्—यदा मध्यग्रहणात्परं बिम्बस्पर्शस्तदा ग्रहणोन्मीलनं भवति।

---

१. सिद्धान्ततत्त्वविवेके, चन्द्रग्रहणाधिकारः, श्लो. सं. १५-१६।

चन्द्रवलयग्रहणम्—चन्द्रबिम्बस्य सदैव भूभाबिम्बाल्पत्वान्न कदापि चन्द्रस्य वलयग्रहणं भवति।

मर्दः—ग्रहणे सम्मीलनकालारम्भत उन्मीलनकालं यावत् 'मर्द'-कला उच्यते। यथोक्तं कमलाकरभट्टेन—

यथात्र भाद्यावयवेन तुल्यौ यत्कालिकौ सूर्यविधू स्फुटौ स्तः।
अमान्तसंज्ञोऽस्ति स एव विज्ञैरर्कग्रहार्थं प्रथमं प्रसाध्यः।।
ज्ञानं तस्यार्केन्दुजन्यं निरुक्तं तौ तु ज्ञेयौ तस्य विज्ञानतोऽतः।
दर्शान्तोऽसौ चासकृत् सूक्ष्मरीत्या सिद्धो ज्ञेयो बुद्धिमद्भिर्ग्रहज्ञैः[१]।।

अथ अमावास्यायां रविविधुं राहुञ्च संसाध्य ततोऽर्केन्दुं देशान्तरादिस्पष्टीकरणैर्विधाय तिथिं च स्पष्टीकृत्वा यथोक्तं नतिकर्म च विधाय तदनन्तरं तौ सूर्यचन्द्रौ तिथ्यन्तकालिकौ कार्यौ राहुश्चापि, एवं चन्द्रग्रहणं भवति पौर्णमास्याम्।

यथा अमया सह वसति चन्द्रोऽस्यामिति अमावास्या[२]। यस्याममावास्यायां द्वयोरंशयोः कलाविकला समानौ भवेताम्, तदा एव सूर्यग्रहणं भवति।

वाल्मीकिरामायणे त्रिजटाया उक्तिरस्ति—'छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम्', अर्थात् सीताया दुःखस्योपस्थितिं छायावैगुण्यमात्रम्, अर्थाद् ग्रहणकाले चन्द्रमायाः छायावैगुण्यमात्रमस्ति, अनेन पृथिव्याः छायाया अनुमोदनं भवति।

वैदिककाले इदमवबुध्यते स्म यद् ग्रहणस्य कारणं सूर्यचन्द्रमसस्तमसाच्छादनमेवेदं तमश्च राहुनामकोऽसुरो निक्षिपति तेन अनयोः प्रकाशो विनाशमुपयाति, तदा तौ संसाराय प्रकाशसमर्पणात्मकं स्वकार्यं विधातुं क्षमौ स्याताम्। सायणभाष्यानुसारिव्याख्यानेनानुप्राणितोऽयमर्थः। अस्य अन्यत्र वैज्ञानिकोऽर्थो द्रष्टव्यः। एतौ ग्रहावस्मादुपप्लवाद् मोचयितुं इन्द्रस्तस्यासुरस्य अन्धकारात्मिकां मायां समुत्सादयति। वेदमन्त्रैः सम्प्रार्थनमप्यस्मिन् कृत्ये साहाय्यमाचरति। अत्राष्टमन्त्र इदमपि विज्ञापितं यद् अतिसोमलताः कुट्टयितुम् अस्मिन् ग्रहणकाले पाषाणान् समचिनोत्। अनेन सोमरसेन इन्द्रस्य बलं

---

१. सि.वि. सूर्यग्रहणाधिकारे, श्लो. सं. ५-६।
२. सि.वि. सूर्यग्रहणाधिकारे, पृ. ६।

लभ्यते। यथा—'इन्द्रऽआसान्नेता बृहस्पतिर्द्दक्षिणायज्ञः पुरऽएतु सोमः। देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम्[१]'।

यतो हि देवाः सोमरसं पीत्वा निरतिशयं कार्यक्षमा भवन्ति। ग्रहणसमये होम-जप-दान-स्नानादीनां यन्महत्त्वं प्रतिपादितं तस्य सर्वस्य मूलभूता वैदिक-युगस्येयमवधारणैव भारतवर्षे ग्रहणस्य वास्तविकं कारणं वर्षाणां सहस्रेभ्यः प्रागेव सम्यग्ज्ञातमासीत्। अतः पुरातनज्योतिषसिद्धान्तग्रन्था एव प्रमाणम्। यथा—

'सूर्यग्रहे तु नाश्नीयात्पूर्वयामचतुष्टयम्।
चन्द्रग्रहे तु यामाँस्त्रीन् बालवृद्धातुरैर्विना।।

स्पर्शे स्नानं मध्ये होमजपादिकं मुच्यमाने पुनः स्नानम्, उपरागे मूर्तिस्पर्शो न कर्तव्यः[२]'।

किन्तु वैदिककालिकग्रहणकारेण भतो राहुस्तेषु ग्रन्थेषु महत्कौशलेन ग्रहस्योपकरणेष्वेव लब्धप्रतिष्ठः कृतः। यथा—

तात्कालिकस्पष्टतरौ रवीन्दू शशाङ्कपातस्त्रिभहीनलग्नम्।
त्रिप्रश्नरीत्याऽस्य नतोन्नतांशौ ज्ञेयौ तु दृङ्मण्डलगौ तु यौ स्तः।।

दृक्क्षेप-तद्दृग्गतिसंज्ञकौ च तथा रवीन्द्वोः किल योजनाद्यौ।
नतोन्नतांशाविह पूर्वरीत्या ततश्च दृक्सूत्रमिति कुपृष्ठात्[३]।।

ग्रहणस्य प्रयोजनं त्रिधा कर्तुं शक्यते—प्रथमं धार्मिकं द्वितीयं लोकेषु चमत्कृतिस्तृतीयञ्च रविचन्द्रबिम्बयौतिकरासायनिकं गवेषणम्। पूर्ववद् एव ज्योतिर्विद्भिर्निर्दिष्टसमयानुसारेण ग्रहणस्य स्वरूपस्थित्योः सम्पन्नत्वं लोकेषु चमत्काराधायकं भवत्येव, इदमेव द्वितीयं प्रयोजनम्। सूर्यस्य पूर्णग्रहणकाल एव वैज्ञानिकैः सूर्यप्रभूतानां ज्वालानां रश्मीनाञ्च रक्तपित्तादिसप्तवर्णमण्डलस्य तत्रभवद्रव्यस्य च निष्कृतिर्विहिता तृतीयं प्रयोजनं चैतदेव। यथा—

तथा स्फुटाख्यश्रवणौ प्रसाध्यावित्यादि सर्वं प्रथमं विदित्वा।
विलम्बनद्वारकमर्कपर्वसंसाधनं सद्गणकेन कार्यम्[४]।।

---

१. शुक्लयजुर्वेदः, रुद्राष्टाध्यायी, अ. ३, मन्त्र-सं. ८।
२. हृषीकेषपञ्चाङ्गम्, पृ. २, सम्वत् २०६५।
३. सिद्धान्ततत्त्वविवेकः, श्लो. सं. ७-८, सूर्यग्रहणाधिकारः।
४. सिद्धान्ततत्त्वविवेकः, श्लो. सं. ९, लम्बनप्रकरणम्।

सूर्यग्रहणे चन्द्रः सूर्यं गृह्णाति अथवा स्वपिण्डेन रविं तिरोधापयति। अनेनैव हेतुना घटनेयं ग्रहणपदवाच्या भवति। ग्रहणमुपराग उपप्लव इमे पर्यायवाचिनः शब्दाः। ग्रहणाभिधाकाशीया घटना भूचन्द्ररविभिरेव सम्बद्धा विद्यते। उपनिषद्ग्रन्थेषु दार्शनिकरूपेण यौगिकप्रक्रियायां वर्णितमस्ति। योगशास्त्रे सूर्यचन्द्रयोः इडापिङ्गलायाश्च कुण्डलिनीरूपः शक्तिरूपेण वर्णितोऽस्ति। जाबालोपनिषदि योगिनां कृते शरीरस्थचन्द्रसूर्यग्रहणयोः विवेचनं शरीर एव कृतमस्ति। यदा इडानाडीतः प्राणः कुण्डलीस्थानं प्रति प्राप्नोति तदा चन्द्रग्रहणं भवति। यदा पिङ्गलातः प्राणः कुण्डलीस्थानं प्रति प्राप्नोति तदा सूर्यग्रहणं भवति।

सूर्यग्रहणस्य कारणम्—निजकक्षायां भ्रमतश्चन्द्रस्य तमोमयी सूच्याकारा छाया सूर्यप्रतिकूलदिशायां सदैव पतति। यदि कदाचिद् भूचन्द्रमायामापतति तर्हि चन्द्रो भूपृष्ठस्य दर्शकसूर्यमध्ये व्यवधानरूपेण तिष्ठति। सूर्यश्च तदा न दृश्यते। व्यवधानाभावादेव यथा मेघावृतः सूर्यो न दृश्यते। ईदृशमदर्शनं सूर्यस्य सूर्यग्रहणमुच्यते। यतः सूर्यग्रहणावसरे चन्द्रो भू-सूर्य-मध्ये तिष्ठति। ईदृशी च स्थितिरमावास्यायां भवति। अत एवामायामेव सूर्यग्रहणं भवति। परन्तु प्रत्यमावास्यायां ग्रहणं न दृश्यते। सूर्यग्रहणे चन्द्रबिम्बामाच्छादकं सूर्यबिम्बं चाच्छाद्यम्। साधारणोऽनुभवो जनानां यदाच्छादनमाच्छादकबिम्ब-व्यासमाच्छाद्यबिम्बव्यासञ्च अपेक्षते। यथा—

तात्कालिकेन्दुविक्षेपं छाद्यच्छादकमानयोः।
योगार्धात्प्रोज्झ्य यच्छेषं तावच्छन्नं तदुच्यते[1]॥

पूर्णग्रहणम्—आच्छादकस्य आच्छाद्यादधिकत्वे (आच्छाद्यसमत्वेऽपि) एकसूत्रवर्तित्वे च पूर्णाच्छादनं भवति। आच्छादकस्य आच्छाद्यादल्पत्वे एकसूत्रवर्तित्वे च आच्छाद्यबिम्बमाध्यमं तु आच्छाद्यते; परन्तु बिम्बमध्याप्रकाशितो बहिर्भागः प्रकाशते वलयाकाररूपेण। यथा—

'यद्ग्राह्यमधिके तस्मिन्सकलं न्यूनमन्यथा।
योगार्धादधिके न स्याद्विक्षेपे ग्राससम्भवः[2]'॥

वलयाकारग्रहणम्—वलयाकारग्रहणे विपुलसूर्यबिम्बमध्ये श्यामवृत्ताकारं चन्द्रबिम्बं दृश्यते। सर्वेषां पूर्णग्रहणानां वलयाकारग्रहणानाञ्च प्रारम्भान्ताश्च

१. सूर्यसिद्धान्तः, चन्द्रग्रहणाधिकारः, श्लो. सं. १०।
२. सूर्यसिद्धान्तः, चन्द्रग्रहणाधिकारः, श्लो. सं. ११।

खण्डरूपेणैव भवन्ति[१]। यदि सूर्यचन्द्रलग्नरेखातो भूपृष्ठसूर्यलग्नरेखा पर्याप्तं भिन्ना, तर्हि सूर्यग्रहणं न भवति। यथा—

स्वच्छत्वाद्द्वादशांशोऽपि ग्रस्तश्चन्द्रस्य दृश्यते।
लिप्तात्रयमपि ग्रस्तं तीक्ष्णत्वान्न विवस्वतः[२]॥

अथ भूभा तु रविगत्या रवितः षड्भान्तरे चन्द्रकक्षायां भ्रमति। तदधिकगत्या तु चन्द्रः। तेन भूभां तत्पश्चिमभागादेव चन्द्रः स्पृशति, अतो विलोमेन चन्द्रस्य प्राग्भाग एव स्पर्शो जायते। ततः शनैः शनैः कुभान्तः प्रविष्टस्य तस्य प्रथमं भूभातः प्राग्भागो निःसरति, पश्चात् पश्चाद्भागस्तेन पश्चिमतो मोक्षः। यथा—

पश्चाद्भागाज्जलवदधः संस्थितोऽभ्येत्य चन्द्रो
भानोर्बिम्बं स्फुरदसितया छादयत्यात्ममूर्त्या।
पश्चात् स्पर्शो हरिदिशि ततो मुक्तिरस्यात एव
क्वापि च्छन्नः क्वचिदपिहितो नैष कक्षान्तरत्वात्[३]॥

पूर्णसूर्यग्रहणस्य ज्योतिर्विद्यतिमहत्त्वं विद्यते। विज्ञानविदो दूरदेशेभ्यस्तत्र सम्मिलिता भवन्ति यत्र पूर्णग्रहणं दृश्यमानं भवति। तत्र क्षणिकान्धकारे सूर्यवर्णमण्डलस्य सूर्यप्रभामण्डलस्य च वैज्ञानिकपरीक्षणानि क्रियन्ते।

यदि सूर्यचन्द्रलग्नरेखातो भूपृष्ठसूर्यलग्नरेखा पर्याप्तं भिन्ना, तर्हि सूर्यग्रहणं न भवति।

**पुराणेषु ग्रहणपरिचयः**

पुराणेषु मुख्यरूपेण श्रीमद्भागवतस्य ग्रहणोपाख्याने व्यासेन प्रोक्तं यद् भगवान् विष्णुर्यदा मोहिनीरूपं धृत्वा देवेभ्योऽमृतं पाययन्नासीत् तदा तस्यां देवानां पङ्क्तौ राहुनामको राक्षसो देवरूपं धृत्वा उपविष्टः, तथा च अमृतपानं अकरोत्, तस्मिन्नेव काले सूर्यचन्द्रौ उभावपि दृष्ट्वा भगवन्तं विष्णुं सूचितवन्तौ विष्णुना सुदर्शनचक्रेण शिरोच्छेदः कृतः, शरीरोर्ध्वभागस्य नाम राहुः, शरीरस्य अधस्तनभागस्य नाम केतुरिति जातम्। तेनैव कारणेन ग्रहोऽयं अमायां सूर्यं पूर्णिमायाञ्च चन्द्रं ग्रसतीतीयं पौराणिकी परिकल्पना। यथोक्तं व्यासेन—

---

१. सिद्धान्ततत्त्वविवेकः, सूर्यग्रहणाधिकारः परिभाषा, श्लो. सं. ५।
२. सूर्यसिद्धान्तः, छेद्यकाधिकारः, श्लो. सं. १३।
३. ग्रहणवासनाधिकारः, सिद्धान्तशिरोमणिः, श्लो. सं.१।

देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि
प्रविष्टः सोममपिबच्चन्द्रार्काभ्यां च सूचितः।
चक्रेण बक्षुरधारेण जहार पिबतः शिरः
हरिस्तस्य कबन्धस्तु सुधयाप्लावितोऽपतत्॥

शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपद्
यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः।
पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः
पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे हरिः॥

एवं सुरासुरगणाः समदेशकाल-
हेत्वर्थकर्ममतयोऽपि फले विकल्पाः।
तत्रामृतं सुरगणाः फलमञ्जसाऽऽ-
पुर्यत्पादपङ्कजरजःश्रयणान्न दैत्याः॥

यद् युज्यतेऽसुवसुकर्ममनोवचोभि-
र्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात्।
तैरेव सद् भवति यत् क्रियतेऽपृथक्त्वात्
सर्वस्य तद् भवति मूलनिषेचनं यत्[१]॥

एवमेव धर्मशास्त्रे पुराणादिषु चोक्तमस्ति यद् ग्रहणकाले जपहवन-दानादिकस्य विशेषफलं भवति। अस्मिन् समये यत् किमपि जपादिकं कुरुते, तत् सर्वं सिद्धं भवति। यथा—'सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति'[२]। एवमेव तन्त्रशास्त्रे काव्यग्रन्थेष्वपि ग्रहणस्य विवेचनं सम्यक्त्या दरीदृश्यते।

●

१. श्रीमद्भागवते, अष्टमस्कन्धे, अ. १०, श्लो. सं.२४-२९।
२. नित्यकर्मपूजाप्रकाशः, पृ. २८५।

# शुद्धाद्वैतवेदान्तस्याविकृतपरिणामवादः

**डॉ. सुधाकरमिश्रः**
उपाचार्यो वल्लभवेदान्तस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्



तत्र शुद्धाद्वैतवेदान्तस्य वल्लभवेदान्तेत्यपरनामधेयस्य सन्ति अनेके प्रसिद्धा वादाः। यथा—

१. ब्रह्मवादः
२. विरुद्धधर्माश्रयतावादः
३. सत्कारणवादः
४. सत्कार्यवादः
५. आविर्भावतिरोभाववादः
६. अविकृतपरिणामवादः
७. कार्यकारणतादात्म्यवादश्च।

यद् दर्शनं प्रपञ्चस्य जगतो वा अभिन्ननिमित्तोपादानं ब्रह्मेत्यङ्गीकुरुते, तद् ब्रह्मवाददर्शनमिति व्यवस्था। ब्रह्मैव जगतः परिणामि उपादानं कर्तृ चेति वाल्लभमतम्। न्यायश्चेतनमीश्वरं कर्त्तारं जडान् परमाणून् मनुते, तत्र निमित्तोपादानयोरभेदो नास्ति।

सांख्यं जडप्रकृतिमात्रकारणवादि, प्रकृतेश्चैतन्यावेशाय केवलं चेतनसन्निधानमुपयोजयति।

विशिष्टाद्वैती अपि वैशिष्ट्येन शरीरशरीरिभावेन च व्यामोहयत्येव न चेतनस्य ब्रह्मण उपादानतामङ्गीकरोति। शुद्धाद् ब्रह्मणोऽजायमानो जगज्जडवर्गोऽचिता विशेषणेन प्रकृत्या विशिष्टाद् ब्रह्मणो जायत इति उपपादनमेव जडायाः प्रकृतेर्जडवर्गस्य जायमानतां व्यनक्ति। प्रकृत्युपादानत्व एव पर्यवस्यति इत्यभिप्रैति।

ईश्वर उपादानं निमित्तश्चेति शाङ्करवेदान्तिनोऽभिन्ननिमित्तोपादानतामीश्वरस्योपपादयन्ति। परं मायासहाय ईश्वरः शुद्धं ब्रह्म तु अकिञ्चित्करं सांख्यस्येव, तेन सहायभूतायां मायायां वर्तमानं परिणाम्युपादानत्वं परमेश्वरे परिकल्पयन्ति। विवर्तस्तु न काचित् प्रक्रिया उपादानस्य, न कुत्राप्युपयुज्यते, उपादेयानां पदार्थानां मिथ्यात्वापादकश्चेति अनुपादेय एव आस्तिकानामिति।

शुद्धाद्वैतं विना न किमपि दर्शनं चेतनस्य परिणामं मनुते। मन्ये चेतनपरिणामवादित्वमेवाविकृतपरिणामवाद इति।

सृष्टेः प्रागपि सूक्ष्मप्रपञ्चो ब्रह्मैव, ब्रह्मणोऽद्वितीयत्वश्रुत्या प्रपञ्चस्य ब्रह्मभिन्नत्वासम्भवात्। ब्रह्मभिन्नं न किञ्चिदिति श्रुतिसम्मतम्। एकाकि अरममाणं ब्रह्मैव स्थूलप्रपञ्चं ससर्ज, स्थूलरूपं प्रादुरभूत्। अत्रैव श्रुतेस्तात्पर्यम्।

शुद्धाद्वैतस्य सर्वशक्तिसम्पन्नं सगुणमनेकधर्माणां धर्मि सूक्ष्मरूपेण कारणरूपेण वा सर्वप्रपञ्चनिधानं सच्चिदानन्दाकारं ब्रह्म। जीवादृष्टसहायोऽपि स्वतन्त्रः अक्षरे परस्मिन् धाम्नि विराजमानः पुरुषोत्तमः श्रीकृष्णो भगवान्।

**'न वियदश्रुतेः'** (ब्र.सू. २।३।१) इति भिक्षुसूत्रस्य भाष्ये अणुभाष्ये महाप्रभुणा विवृतं यत्—'द्विविधा हि वेदान्ते सृष्टिः। भूतभौतिकं सर्वं ब्रह्मण एव विस्फुल्लिङ्गन्यायेनैका, अपरा वियदादिक्रमेण। सा चानामरूपात्मना नामरूपत्ववत्त्वेनाभिव्यक्तिः। सजडस्यैव कार्यत्वात् तस्य जीवस्य त्वंशत्वेनैव न नामरूपसम्बन्धः।

'अनित्ये जननं नित्ये परिच्छिन्ने समागमः।
नित्या परिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा'।। इति।

आचार्येण डॉ. श्रीरामकिशोरत्रिपाठिमहोदयेन स्वलघुग्रन्थे 'शुद्धाद्वैत-शब्दाद्वैतयोः कार्यकारणविमर्शः' इति नामके 'अविकृतपरिणामवादः' इति प्रकरणेऽस्य विषयस्य सम्यक्तया प्रतिपादनं विहितम्। तद्यथा—

'शुद्धब्रह्मवादे न प्रपञ्चो ब्रह्मभिन्नः, सर्वस्य सर्वरूपत्वात् सर्वस्य सर्वत्र विद्यमानत्वाच्च' (प्रस्थानरत्नाकरे)। ब्रह्मण आविर्भूतानि सर्वाण्यपि वस्तूनि ब्रह्ममयानि। 'स आत्मानं स्वयमकुरुत' (तै.उप. २/६), 'स ह एतावान् आस' (बृ.उ. १।४।३), 'स वै सर्वमिदं जगत्' (महानारा.उ. ३।३।१), 'इदं सर्वं यदयमात्मा' (बृ.उ. ४।५।७), 'आत्मैवेदं सर्वम्' (छा.उ. ७।२५।२), 'पुरुष

एवेदं सर्वम्' (ऋ.संहि.१०।९०।२) इत्यादिश्रुतयः प्रपञ्चस्य ब्रह्मणोऽभिन्नत्वे प्रमाणानि।

उपादानञ्च द्विविधं परिणाम्युपादानं विवर्तोपादानञ्च। तत्राद्यं स्वसमानसत्ताककार्याकारेणाविर्भवति। परिणामस्योपादानसमसत्ताकत्वेनान्यथात्वभावस्वीकारात्। विषमसत्ताककार्यापत्तिश्च विवर्तः।

परिणामो द्विधा—अविकृतपरिणामरूपः, विकृतपरिणामरूपश्च।

तत्र कार्यात्मना परिणतमुपादानं यदि स्वस्वरूपताधिगमेऽक्षमं भवति, तर्हि विकृतपरिणामपदेनाभिधीयते। यथा दधिरूपेण परिणतं पयः प्रयत्नेनापि न स्वस्वरूपं लब्धुं क्षमते।

यच्चोपादानं कार्यरूपतापन्नमपि कार्यस्वरूपे व्यपगते पुनः स्वस्वरूपतामधिगच्छति, तदविकृतपरिणामीति। यथा सुवर्णं कटककुण्डलादिरूपेण परिणमदपि व्यपगते कार्ये पुनः स्वर्णरूपतां भजते। ब्रह्मणोऽविकृतपरिणामोऽयं प्रपञ्चः। उत्पन्ने प्रपञ्चे ब्रह्मणि न काचिद् विकृतिरवगम्यते। अत एवोक्तं श्रीमद्भागवते महापुराणे—

यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत्।। इति।

**'आत्मकृतेः परिणामात्'** (ब्र.सू. १।४।२६) इति सूत्रेऽपि भाष्ये श्रीमद्वल्लभाचार्येण व्यवस्थापितं यत्—'तदात्मानं स्वयमकुरुत' इति स्वस्यैव कर्मकर्तृभावात्। सुकृतत्ववचनाच्चालौकिकत्वम्। तथापि ज्ञानार्थमुपपत्तिमाह—'परिणामात्, परिणमते कार्याकारेणेति। अविकृतमेव परिणमते सुवर्णम्। पूर्वावस्थाऽन्यथाभावस्तु कार्यश्रुत्यनुरोधादङ्गीकर्त्तव्यः। तस्माद् ब्रह्म परिणामलक्षणं कार्यमिति जगत्, समवायिकारणत्वं ब्रह्मण एवेति सिद्धम्'।

तत्र शुद्धाद्वैतसिद्धान्तावबोधरहिता विद्वांस आक्षिपन्ति यद् एते समवायिकारणमामनन्ति समवायं च न स्वीकुर्वन्तीति तेषां भ्रममात्रमेव। यतो हि प्रबन्धरत्नाकरे प्रमाकरणस्वरूपनिरूपके प्रकरणे श्रीपुरुषोत्तमस्वामिचरणेन व्यवस्थापितं यत्—'तच्च कारणं द्विविधम्—(१) समवायि, (२) निमित्तभेदात्। तत्र तादात्म्यसम्बन्धेन यदाश्रयं कार्यं भवति तत् समवायिकारणम्, समवायश्च तादात्म्यस्यैव नामान्तरम्'। (पृ. ३९ प्रबन्धरत्नाकरे)। इत्येवंरूपेण शुद्धाद्वैतवेदान्तनये

'सदेव सोम्येदमग्र आसीत्', 'यदिदं किञ्च तत्सत्यमित्याचक्षते', 'विश्वं सत्यं मघोना' इत्यादिश्रुतिभिर्जगतो ब्रह्माभिन्नत्वेन सत्यत्वं प्रसाध्यते। जगद्रूपं कार्यं ब्रह्मरूपकारणाभिन्नत्वान्नित्यम्। 'स आत्मानं स्वयमकुरुत' (तैत्ति.उ. २/६), 'स ह एतावानास' (ना.ता. उ. ३/८), 'इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा' (बृ.उ. ४।५।७), 'अथात आत्मादेश एव आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति' (छा.उ. ७/२५/२), 'पुरुष एवेदं सर्वम्' (पु.सू. २), इत्यादिश्रुतयो जगतो ब्रह्मरूपत्वे प्रमाणभूतानि सन्ति। परमात्मनि या नित्या शक्तिरस्ति सैव सर्वं प्रपञ्चं सृजति।

सा च शक्तिर्द्विधा—अविद्या माया चेति। मायाशक्त्या विनिर्मितो भगवदभिन्नकार्यभूतः प्रपञ्चो नित्यः। उक्तञ्चाचार्येण तत्त्वदीपनिबन्धे—'प्रपञ्चो भगवत्कार्यस्तद्रूपो माययाऽभवत्' (१/२३)। मायाशक्तेर्भगवद्रूपत्वात्तत्कार्यस्यापि भगवद्रूपत्वं नित्यत्वञ्च सिद्ध्यतः।

व्यामोहशक्तेरविद्यायाः कार्यरूपः संसारः स्वकारणमिवानित्यः। श्रीमद्भागवतमहापुराणस्य व्याख्यायां सुबोधिन्यां भगवता श्रीवल्लभाचार्येण व्यवस्थापितं यत्—'व्यामोहव्यतिरेकेण केवलशक्त्यभावेनार्थसम्बन्धो निरूपयितुमशक्यः' (सुबो. २।९।१)। अपि च सुबोधिन्यामिदमपि व्यवस्थापितं यत्—'अविद्या चात्र व्यामोहिका मायेत्युच्यते, तस्याः कार्यं न भगवद्रूपमतस्तदनित्यम्। जगद्भावादयः सर्वे व्यामोहिकमायाकार्यरूपाः, तेन भगवत्कार्याः'। (सुबो. २/१०/२५)

एवञ्च मायाकार्यं जगद् भगवत्स्वरूपत्वेन चैतन्यं नित्यञ्चास्ति। अविद्याकार्यभूतः संसारस्तु जडात्मिकाविद्याजन्यतया जडस्वभावोऽनित्यश्चास्ति। जडमोहात्मके जगत्यपि भिन्नत्वेन प्रतीयमानं यज्जडरूपत्वं तदसत्। मुक्तौ संसारस्य लयो भवति न जगतः। अत एव तत्त्वदीपनिबन्ध उल्लिखितं यत्—'संसारस्य लयो मुक्तौ न प्रपञ्चस्य कर्हिचित्' (त.दी.नि. १/२३)। अद्वैतमते तु जगदिदं ब्रह्मणि कल्पितं वर्तते। मायापि ब्रह्मणि कल्पितैव; किन्तु सानादिः, न हि केनचिद्दोषेण निमित्तभूते केनचिदुपादानकारणेन च जनिता। तस्या अध्यस्तत्वग्रहश्च बाधितत्वाद् वेदितव्यः, बाध्यत्वमध्यस्तत्वमिति लक्षणात्। बाध्यत्वञ्च मायायाः—

'ज्ञात्वा देवं मुच्यते सर्वपाशैः'।
'विद्वान् नामरूपाद्विमुक्तः'।
'इह चेदवेदीदथ सत्यमस्ति
नो चेदवेदीन्महती विनष्टिः'। (केनो. २/२/५)

'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति, स कृपणोऽथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः'। (बृ.उ. ३/८/१०)

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः'। (गी.५.१६)
'उपमर्दश्च'। (ब्र.सू. ३/४/१६)

'तदधिगम उत्तरपूर्वार्धयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र.सू. ४/१/१४) इत्यादिश्रुतिस्मृतिसूत्रैरवसीयते। अद्वैतराद्धान्तानुसारेणानादिसादिभेदेनाध्यासस्य द्वैविध्यं प्रतिपाद्यते विस्तरभिया नेह प्रतन्यते।

शुद्धाद्वैतदर्शने 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या ब्रह्मण एव जगदाविर्भावादिकं स्वीक्रियते, अतो जगतः सत्यत्वमस्ति। अभेदप्रतिपादकश्रुतिभिरपि जगतः सत्यत्वं सिद्ध्यति। एवंरूपेण निर्गुणमविकृतं ब्रह्मैव जगदुपादानं निमित्तञ्च कारणमस्ति। अस्मिन् नये जगद् भिन्नं संसारश्च भिन्न इति स्वीक्रियते। कस्मिन्नपि मत एतादृशो जगत्संसारयोर्भेदो न प्रतिपाद्यते। ईश्वरेच्छया चिदानन्दांशतिरोभावेन सदंशात् प्रादुर्भावितं यत् तज्जगदिति। पञ्चपर्वात्मिकयाऽविद्यया जीवेन कल्पितोऽहन्ताममतात्मकः संसारः। तत्र तमो मोहो महामोहतामिस्रोऽन्धतामिस्रश्चाविद्यायाः पञ्चपर्वाणि भवन्ति। तत्र संसारस्याविद्याकल्पितत्वाज्ज्ञानेन नाशः, जगतस्तु ब्रह्मरूपत्वान्न नाशः। द्वैतं नाविद्याजन्यम्, अपि तु—अहं भिन्नोऽस्मादिदं भिन्नमिति द्वैतज्ञानमविद्याजन्यम्, अतस्तदेव ज्ञानेन नश्यति। अहन्ताममतात्मकः संसारोऽविद्याकार्यत्वाज्ज्ञानेन नश्यति।

कारणभेदादपि जगत्संसारयोर्भेदः। जगदुपादानकारणं ब्रह्म, निमित्तकारणञ्च ब्रह्मशक्तिरस्ति। अथवा शक्तिशक्तिमतोरभेदादुभयविधमपि ब्रह्मैव कारणम्। संसारस्य तु कल्पितत्वादुपादानकारणं नास्ति, अस्य निमित्तकारणमविद्या वर्तते। संसारनाशे जगतो न कापि क्षतिः, ज्ञानोत्पत्तिपर्य्यन्तं संसारोऽवतिष्ठते। मुक्तौ संसारस्य लयः, जगतस्तु लयः परमात्मेच्छानुसारं तिरोधानदशायां भवति।

संसार एव सुखदु:खात्मको न जगत्। अत एव जीवन्मुक्तौ जगत: सत्यत्वेऽपि न सुखदु:खानुभवो भवति। एवंरूपेण निन्दाबोधिन्य: श्रुतय: संसारनिन्दिका:, न जगन्निन्दिका:।

जगत उत्पत्तिस्थितिलयेषु श्रीकृष्णेच्छैव हेतु:। सा चैकाऽपि कालभेदमाश्रित्य भिद्यते। तदधीनैव जगत्स्थिति:। 'सर्वं पुरुष एवेदम्' इति सुबोधिनीवचनात् सम्पूर्णमपि प्रपञ्चजातं पुरुष एवेत्युक्तम्। अयं प्रपञ्चो न प्राकृत:, न परमाणुजन्य:, नापि विवर्त:, न चादृष्टजन्य:, नाप्यसत: सत्तारूप:, अपि तु भगवत्कार्य:। उक्तञ्च तत्त्वार्थदीपनिबन्धे—

प्रपञ्चो भगवत्कार्यस्तद्रूपो माययाऽभवत्।
तच्छक्त्याऽविद्यया त्वस्य जीवसंसार उच्यते।।

(तत्त्वार्थदीप. २३)

शक्तिरियमिन्द्रजालविद्येव मायिनं परित्यज्य दर्शकगणानिव जीवान् विमोहयति। ईश्वरानुकम्पामन्तरा न विमोहात्ययो भवति। अतो बन्धविच्छेदाय श्रीकृष्ण आराध्य:। लीलावशीभूत: कृष्णो जगत् सृजति पालयति नाशयति च। असौ भगवतो लीला तत्कारणमापन्ना माया लक्ष्मीर्विद्येत्यभिधीयते, कार्यकारणमाश्रित्य भेदे प्रतीयमानाऽपि भगवदभिन्नैकरूपा चास्ति। अत एव नृसिंहोत्तरतापनीयोपनिषदि विवृतं यत्—'सैषा वटबीजसामान्यवदनेकवट-शक्तिरेकैव तद्यथा वटबीजसामान्यमेकमनेकान् स्वाव्यतिरिक्तान् वटान् स्वबीजानुत्पाद्य तत्र तत्र पूर्णं सन्तिष्ठति, एवमेव एषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशौ आभासेन करोति माया चाविद्या च स्वयमेव भवति'। (नृ.उ. ९)

सर्वेषां ज्ञानानां विषयो भगवान् कृष्ण:। विषयता मायाजन्या स्वशक्त्या माययेशो नैकविधप्रपञ्चरूपतामासादयति। अविषयेऽपि भगवति माया विषयतां प्रतिपादयति। मायायामेव विषयतारूपं भगवत: स्वरूपं प्रकटितं भवति। यतश्चेयमविद्यमानं बोधयन्ती विद्यमानमाच्छादयति, अतो मायेत्यभिधीयते। उक्तञ्च श्रीमद्भागवते—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो माया यथाऽऽभासो यथा तम:।।

(श्रीमद्भा. २।९।३३)

इयं विषयता विषयस्वरूपाद् भगवतो न भिन्ना तद्धर्मभूतत्वात्। अत एव सुबोधिन्यां प्रतिपादितं यत्—

'न च विषयातिरिक्ता विषयता क्वचिदुपलब्धा। यथाऽन्धकारः पदार्थस्तेजोऽभावे जन्यते। यत्रैव तेजोऽभावस्तत्रैवान्धकारं जनयति माया' (सुबो. २/९/३३)। माया हि भगवतः श्रीकृष्णस्य लीलैवास्ति। लीलालीलावतोश्चाभेदाच्छुद्धाद्वैतमेवावसीयते।

सच्चिदानन्दाद् ब्रह्मणोऽग्नेर्विस्फुलिङ्गवदंशात्मकजीवोत्पत्तिः, स च जीवो नित्यः। कर्मभोगासक्ताश्चिदंशा अग्नेः स्फुलिङ्गा इव जीवाः शुद्धब्रह्मण आविर्भूतास्तद्रूपा एव न भिन्नाः। यतो हि—आविर्भूतं कार्यं द्विविधं जडात्मकं चिदात्मकञ्चेति। क्रियाशून्यमानन्दांशहीनं मृदादिरूपं सर्वं वस्तुजातं जडस्वभावम्। तच्च कार्यं न कारणाद् भिद्यते लीलाशक्त्याश्रितत्वात् चिद्रूपत्वाच्च। भगवच्छक्तिर्हि कृष्णलीला परमात्माभिन्नाऽस्ति। प्रतिशरीरं भिन्नो हृदयस्थो विषयानन्दपरो जीवोऽन्तःस्थितत्वात् साक्षी। शरीरभेदादेव दानवमनुष्यादियोनिप्राप्तिः। स च देवदानवमनुष्यादिभेदः परमात्मनो लीलाकृतः काल्पनिको न वास्तविकः, 'जीवो ब्रह्मैव नापरः' (बृ.उ. ३/४), 'तत्त्वमसि श्वेतकेतो' (छा.उ. ६/८/७) इत्यादिश्रुतेः। स्मृतयोऽप्यत्र प्रमाणभूताः सन्ति, तद्यथा—'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' (गीता. ७/७), 'ममैवांशो जीवलोके जीवभूतः सनातनः' (गी. १५/७) इति। अव्यक्तो नित्यः कूटस्थश्च परमात्मा स्वलीलानिरतस्तत्तत्कर्मप्रतिबद्ध इव देवतिर्यग्योनिमाधत्ते।

**'अक्षराम्बरान्तधृतेः'** (ब्र.सू. १/३/१०) इति ब्रह्मसूत्रस्य व्याख्यानेऽणुभाष्ये 'अक्षरं परमात्मैव' इति व्यवस्थापितम्। अक्षरपदेन शब्दस्यापि ग्रहणं भवति, कथमत्राक्षरपदेन परमात्मनः श्रीकृष्णस्य ग्रहणमिति? अतस्तत्र व्याख्यातम्—'अक्षरं परमात्मैव, कुतः? अम्बरान्तधृतेः, श्रुतिं व्याख्याय सिद्धं हेतुमाह, अत्रैक एव प्रश्न उत्तरश्चैकम्, आकाशस्यावान्तरत्वमेव, तेनाम्बरान्तानां पृथिव्यादीनां विधारकः परमात्मैव, द्युभ्वाद्यायतनसिद्धो धर्मोऽत्र हेतुः, 'न तदश्नोति कश्चने'ति मुख्यतया परिगृहीतो भवति, अन्यथा मूर्ध्नो विपतनञ्च भवेत्, न ह्यन्यः सर्वाधारो भवितुमर्हति, परोक्षेण ब्रह्मकथनार्थमक्षरपदम्, अन्यनिराकरणार्थं तद्धर्मोपदेशश्च, तस्मादक्षरं परमात्मैव' (ब्र.सू. अणुभा. १/३/१०)। तस्मादक्षरपदं श्रीकृष्णस्यैव बोधकम्। उक्तञ्च प्रमेयरत्नार्णवे—'निखिलप्रपञ्चकारणभूतस्वरूपमक्षरब्रह्मापि

श्रीकृष्णस्यैव रूपान्तरम्'। तस्यैवेच्छया सकलकारणं कार्यात्मना रूपान्तरं सदाविर्भवति 'एकोऽहं बहु स्यां प्रजायेय' (तै.उ. २/६) इति श्रुतेः। तस्मिन्नेव रूपे भगवद्धर्मात्मकसत्त्वेनानन्दांशतिरोधानम्।

अक्षरब्रह्मणोऽधिकारिभेदेन द्विधा स्फुरणम्। तत्र (१) भगवद्भक्तिभास्यमक्षरब्रह्मणः प्रथमं स्वरूपम्। उक्तञ्च श्रीमद्भागवते—

'ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च।
उभयायितमात्मानं चक्रे विश्वकृदीश्वरः'।।

(श्रीमद्भा. १०/१३/१८)

तथा च सकलशास्त्रसारभूतायां श्रीमद्भगवद्गीतायामपि—

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम।।

(गी. ८/२१) इति।

(२) ब्रह्मज्ञानभास्यमक्षरब्रह्मणोऽपरं स्वरूपम्। ज्ञानिनां कृते तदक्षरब्रह्म सच्चिदानन्दत्वदेशकालापरिच्छिन्नत्वस्वयंप्रकाशत्वगुणातीतत्वादिरूपेण भासते। न क्षीयते क्षरति वाऽक्षरमिति व्युत्पत्तेः स्वस्वभावेन प्रकाश्यमानेऽक्षरब्रह्मणि सर्वभावानां तिरोधानम्। तदक्षरब्रह्माविर्भावात्मिकया शक्त्या कार्यात्मनानेकरूपापन्नमपि तिरोधानात्मिकया शक्त्या तिरोहिते निखिले प्रपञ्चे निर्विकल्पमेव परितिष्ठति। वेदोक्तकर्तृत्वादिधर्माणां तिरोभाव एव भवति न तु 'अभावः'। तथा चोक्तमाचार्येण प्रस्थानरत्नाकरे—'अभावास्त्वस्मन्मते तिरोभावातिरिक्ता न भवन्ति' इति।

एवञ्च कनकमृत्साकामधेनुकल्पवृक्षचिन्तामण्यादय इव स्वयमविकृतं सन्निर्गुणं सच्चिदानन्दं ब्रह्मैव जगद्रूपेण विपरिणमते। ब्रह्मण आविर्भावतिरोभावौ शक्ती। निर्गुणमविकृतं नित्यशक्तिमद् ब्रह्माविर्भावतिरोभावाभ्यामक्षरजीवजगद्रूपैः स्वेच्छावशात् क्रीडति लीलां वा करोति। ततो जगतो नित्यत्वम्। उक्तञ्च विष्णुपुराणे—

तद्ध्येतदक्षयं नित्यं जगन्मुनिवराखिलम्।
आविर्भावतिरोभावजन्मनाशविकल्पवत्।। इति।

'जनी प्रादुर्भावे' इति पाणिन्यनुशासनाज्जन्मशब्दगत-'जन्'-धातोः प्रादुर्भाववाचकत्वमस्ति। तथैव 'णश् अदर्शने' इत्यनुशासनात् 'नाश'-शब्दगत-'णश्'धातोरदर्शनवाचकत्वेन तिरोभावपर्यायकत्वम्।

शाङ्करमतवज्जगतो मायामयत्वं नात्र वाल्लभाः स्वीकुर्वन्ति। ब्रह्मण आधिभौतिकं स्वरूपं जगद् वर्तते। शुद्धाद्वैतनये ब्रह्मणः स्वरूपत्रयं स्वीक्रियते। तत्रैकम् (१) आध्यात्मिकं ब्रह्म—अक्षरं ब्रह्मेति, द्वितीयम् (२) आधिदैविकं ब्रह्मेति—परब्रह्मेति, तृतीयम् (३) आधिभौतिकं ब्रह्म जगदिति। तेन ब्रह्मजगती अभिन्ने। कार्यकारणयोरभेदात् कार्यरूपे जगति कारणरूपे च ब्रह्मणि न कश्चन भेदः। **'तदनन्यत्वमारम्भणशब्दादिभ्यः'** (ब्र.सू. २/१/१४) इति भिक्षुसूत्रप्रामाण्यादपि जगतो ब्रह्मणश्चाभेदः। परमात्मनि तिरोहितं जगदाविर्भावात्मिकया शक्त्या व्यवहारयोग्यतामापद्यते। आविर्भूतञ्च जगद् ब्रह्मरूपमेव। भगवदिच्छया कारणरूपायां मृदि विद्यमानो भगवद्रूप एव घट आविर्भवति नान्यः कश्चित्। प्रतिपादितं च तत्त्वमिदं प्रमेयरत्नार्णवे। तद्यथा—'यस्मिन् भगवद्रूपे रूपान्तरस्याविर्भावस्तत्कारणम्, यथा मृदु, यस्य रूपस्य प्राकट्यं तत् कार्यं यथा घटः' इति। तथा च तत्त्वदीपनिबन्धे—'मृदादि भगवद्रूपं घटाद्याकारसंयुतम्' (त.नि. २/१४२)। श्रुतिरपि तथा 'सर्वं खल्विदं ब्रह्म' (बृ.उ. ३/१४/१) इत्यादिनाऽमुमेवार्थमुद्घोषयति। व्यासस्य समाधिभाषायां श्रीमद्भागवतमहापुराण इदमेव तत्त्वं परिपोषितमस्ति—

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः।
अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा।। इति।

(श्रीमद्भा. ११/१३/२४)

कार्यात्मना कारणात्मना च सर्वत्र ब्रह्मणः स्वीकारान्न तस्य शुद्धत्वहानि-र्विक्रियत्वापत्तिश्च। **'उभयव्यपदेशात्त्वहिकुण्डलवत्'** (ब्र.सू. ३/२/७) इति सूत्रस्य व्याख्यानावसरेऽणुभाष्ये भगवता वल्लभाचार्येण निगदितं यत्—'यथा सर्प ऋजुरनेकाकारः कुण्डलश्च भवति तथा ब्रह्मस्वरूपं सर्वप्रकारं, भक्तेच्छया तथा स्फुरति, कल्पनाशास्त्रे हीदं बाधकम्, अनेककल्पनागौरवञ्चेति, न तु केवलं श्रुत्यैकसमधिगम्ये, न वा शास्त्रवैफल्यम्, एवं साधनार्थत्वात्, अत्रैव हि सूरिव्यामोहादन्यशास्त्रोत्पत्तिः, अतः सर्वविरुद्धधर्माणामाश्रयो भगवान्। न हि प्रमाणश्रुतदृष्टेऽनुपपत्तिरस्ति यदर्थं युक्त्यपेक्षा। लोकेऽपि शरीरान्तःकरणादीनि परस्परविरुद्धदयामारकत्वादीनि विषयभेदेनैकस्मिन्नपि क्षणं प्रतीयन्ते, तस्मात्

सकलविरुद्धधर्मा भगवत्येव वर्तन्त इति न कापि श्रुतिरुपचरितार्थेति सिद्धम्' (अणुभा. ३/२/२७)।

यद्यपि सर्पः कालभेदेन स्वेच्छया तथा तथा भवति, ब्रह्म त्वेकस्मिन्नेव काले संराधकभक्तेच्छयेति वैषम्यम्, तथापि संराधकस्य तादृशेच्छयोत्पत्तौ तादृशतादृशफलदित्सैव प्रयोजिका न वैषम्यलेशोऽपि। तच्च ब्रह्म लीलापुरुषोत्तमः श्रीकृष्ण एव। स चानेकरूपतापन्नोऽप्येकः स्वतन्त्रः सन्नपि भक्ताधीनोऽस्ति। सकलमपि विश्वं लीलापुरुषोत्तमस्य श्रीकृष्णस्य सुललितलीलानां विलासमात्रं विकासमात्रं वा।

एवमस्मिन्नु राद्धान्ते शुद्धाद्वैते वल्लभवेदान्तेत्यपरनामके आप्तकाममपि ब्रह्म जगद्रूपेण विपरिणम्य तदनन्यतया विविधलीलां करोतीति।



# अन्यथाख्यातिवादः

**डॉ.का.इ. धरणीधरः**
उपाचार्यः, संस्कृतविभागस्य
पाण्डिच्चेरीविश्वविद्यालये



भ्रमात्मकज्ञानस्य ख्यातिरिति व्यपदेशः शास्त्रग्रन्थेषु वर्तते। तत्र विषये वादिनो बहुधा विप्रतिपद्यन्ते। लोके यस्य यस्य यद्यज्ज्ञानं भवति, तत्सर्वं प्रमेति वक्तुं न शक्यते। तथा सति प्रतिवादिनो ज्ञानमपि प्रमा स्यात्। तथात्वे प्रतिवादिनोऽपि विजयेरन्। तथा सर्वं ज्ञानमप्रमा इत्यपि वक्तुं न पार्यते। तथा सति वादिनो यज्ज्ञानं तदप्यप्रमा स्यात्। तथा च वादी पराजितो भवेत्। तथा चैवमभ्यधायि तत्त्वमुक्ताकलापे—

'सर्वं ज्ञानं न मानं परमतविजयात्, नाप्रमाणं स्वबाधात्।
मानामानव्यवस्था तदियमनुमता लौकिकैर्यौक्तिकैश्च'[1]॥ इति।

तस्मात् किञ्चिज्ज्ञानं प्रमा किञ्चिदज्ञानमप्रमेति विभागोऽवश्यं सर्वैरभ्युपगन्तव्यः। तत्र अप्रमात्मके ज्ञानेऽन्यस्यान्यथाभानात्मिकामन्यथाख्यातिं नैयायिका जैना भाट्टाश्चोररीकुर्वन्ति। अन्यथाख्यातेर्या सामग्री भेदाज्ञानरूपा अख्यातिः, तयैव व्यवहारोपपत्तेरख्यातिपक्ष एव युक्त इति प्राभाकरा आशेरते। क्षणिकविज्ञानरूप आत्मैव बाह्यवस्त्वाकारेण प्रतीयत इत्यात्मख्यातिमङ्गीकुर्वन्ति माध्यमिकेतरा बौद्धाः। भ्रमे सदसदनिर्वचनीयं वस्तूत्पद्य प्रतीयत इत्येवमनिर्वचनीयख्यातिमुररीकुर्वन्त्यद्वैतिनः। एतत्ख्याति-पञ्चकं मण्डनमिश्रपर्यन्तं प्रसिद्धमासीत्। तथा च मण्डनमिश्रः—

'आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम्'[2]॥ इति।

---

१. तत्त्वमुक्ताकलापः-४-९।
२. विभ्रमविवेकः।

## नैयायिकाभिमता अन्यथाख्यातिः

### अन्यथाख्यातेः स्वरूपम्

इदमस्याः स्वरूपम्—अस्ति तावद् रजतार्थिनः पुरोवर्तिनि द्रव्ये प्रवृत्तिः। सा च भेदाग्रहसहितग्रहणस्मरणात्मकज्ञानद्वयमात्राद् भवितुं नार्हति। न हि रजतप्रातिपदिकार्थमात्रस्मरणं प्रवृत्तावुपयुज्यते। रजतार्थी खलु इदंकारास्पदाभिमुखी प्रवर्तते। अत इदंकारास्पदविषयकेच्छामन्तरा सा प्रवृत्तिर्नोपपद्यते। इदंकारास्पदे रजतत्वज्ञाने सत्येव सा इच्छा भवितुमर्हति। अत इदंकारास्पदविशेष्यकरजतत्वप्रकारकज्ञानरूपाद् अन्यथाख्यातिशब्दिताद् विशिष्टज्ञानादेव भ्रमस्थले प्रवृत्तिर्जाघटीतीति नान्यथेत्यन्यथाख्यातिरवर्जनीया।

### न्यायसूत्रभाष्यादिसम्मता अन्यथाख्यातिः

इयं चान्यथाख्यातिर्न्यायसूत्रकारादीनामपि सम्मता। तथा हि—'प्रथमसूत्रेण तत्त्वज्ञान्निःश्रेयसप्राप्तिमभिधाय 'दुःखजन्म' इत्यादिना द्वितीयसूत्रेण मिथ्याज्ञानं परम्परया संसारहेतुरिति प्रत्यपादि। तत्र 'मिथ्याज्ञानमनेकप्रकारकं वर्तते। आत्मनि तावन्नास्तीति अनात्मन्यात्मेति दुःखे सुखमिति' इत्यादि भाषमाणो भाष्यकारः 'अतस्मिन् तदिति ज्ञानं मिथ्याज्ञानमि'त्यभिप्रैति। प्रत्यक्षलक्षणपरम् 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' इति सूत्रम्। 'अव्यभिचारिपदेन मृगतृष्णिकायां जलज्ञानं व्यावर्त्यते। यद् अतस्मिन् तदिति ज्ञानं तद् व्यभिचारि' इति विवृण्वानो भाष्यकारोऽन्यस्मिन्नन्यतादात्म्यज्ञानं भ्रम इति स्पष्टं स्वाशयं ज्ञापयति।

### वार्तिकारूढा अन्यथाख्यातिः

वार्तिककारोऽपि 'कः पुनरयं विपर्ययः? अतस्मिन् तदिति प्रत्ययः' इति कथयति। अस्यैव विपर्ययस्य अन्यथाख्यातिरिति व्यपदेशस्तु पश्चात्कालिकग्रन्थेषूपलभ्यते।

### तात्पर्यटीकोक्ता अन्यथाख्यातिः

पूर्वोक्तवार्तिकव्याख्यानावसरे 'सम्प्रति सन्दिहानो विपर्ययस्वरूपं पृच्छति कः पुनरयं विपर्यय इति? परीक्षकाणां विप्रतिपत्तेः संशयः। केचित् स्वाकारबाह्यत्वविषयं ज्ञानं विपर्यय इत्याचक्षते। अन्ये असद्विषयं ज्ञानम्। अन्ये त्वनिर्वचनीयमेव ज्ञानम्। अपरे तु अग्रहणमेव। अन्यथाख्यातिं तु वृद्धाः'[1] इति

---

१. तात्पर्यटीका-१६०।

तात्पर्यटीकायां कथनाद् अन्यथाख्यातिपक्षो नैयायिकानामिति ज्ञायते। एवं तात्पर्यटीकाकारोऽन्यथाख्यातिस्वरूपं व्यवारीत्—'सोऽयमुभयतो भेदाभेद-ग्रहसारूप्यात् प्रवृत्तिनिवृत्तिभ्यां युगपदाकृष्यमाणः प्रतिपत्ता कष्टां दशामावेशितः प्रज्ञाशालिभिरतिव्याख्यया'[१] इति। तथा च पुरोवर्तिनि रजतभेदाग्रहा् इदं रजतमिति रजतत्वारोपात्मकं ज्ञानं भवति। ततो रजतजातीयस्य इष्टसाधनतां स्मृत्वा इदंकारास्पदे रजतेऽपि इष्टसाधनत्वमनुमाय ततस्तत्र प्रवर्तत इति क्रमः।

न खलु अख्यातिवादे इदंकारास्पदे रजतत्वज्ञानं विना इष्टसाधनताज्ञानं भवितुमर्हति। तत्र चैकमनुमानं तात्पर्यटीकायां प्रायोजि 'विवादाध्यासितं रजतादिविज्ञानं पुरोवर्तिनि वस्तुविषयम्, रजतार्थिनस्तत्र प्रवर्तकत्वात्' इति ग्रन्थादिना। अत्रायं प्रयोगः—विवादाध्यासितं रजतज्ञानं पुरोवर्तिवस्तु-विशेष्यकम्, रजतार्थिनस्तत्र नियमेन प्रवर्तकत्वात्, यद् यदर्थिनं नियमेन यत्र प्रवर्तयति तज्ज्ञानं तद्विशेष्यकम्, यथोभयवादिसिद्धसत्यरजतज्ञानम्, तथा चेदम्, तस्मात्तथा इति।

**परिशुद्धावभिहिता अन्यथाख्यातिः**

परिशुद्धौ 'एवं सिद्धं कृत्वा विपर्ययम्' इत्यादितात्पर्यटीकाग्रन्थस्य व्याख्यानावसरे 'अन्यथाख्यातिरूपमिति शेषः' इत्युक्तम्।

**न्यायमञ्जर्यां निरूपिता अन्यथाख्यातिः**

अत्र जयन्तभट्टः—यथा दुष्टानि शालिबीजानि यवाङ्कुरजननासमर्थानि, तथैव इन्द्रियदुष्टं संस्कारदुष्टं वा कारणं न विपरीतप्रत्ययजनकं भवतीति गुरुमतानुसारं पूर्वपक्षं प्रापय्य तत्रैवं समाहितम्—

'सुवते शालयो दुष्टा न यद्यपि यवाङ्कुरम्।
शालिकार्यं त्वपूपादि जनयन्त्येव कल्मषम्'॥

इत्यादिना। वातपित्तादिदोषकलुषितादिन्द्रियात् पुरोऽवस्थितशुक्तिगत-त्रिकोणत्वादिविशेषावमर्शकौशलशून्यात् सामान्यधर्मसहचरितपदार्थान्तरगत-विशेषस्मरणोपकृताच्च विपरीतप्रत्ययो जायते। न च काचादिदुष्टं चक्षुर्न स्वकार्यक्षमं दृष्टम्, तत्कथं दुष्टमिन्द्रियं हेतुरिति वाच्यम्, दोषवैचित्र्यादिति ब्रूमः। एवं विपर्ययज्ञानं सस्वरूपं प्रदर्शितम्। अनेन तु तज्ज्ञानं विपरीतख्यातिपदेन व्यवाहारि—यथा 'शुक्तिकायां रजतप्रतीतिर्विपरीतख्यातिरिति'[२] इति। क्वचिद् विपर्ययशब्दस्यापि तज्ज्ञानपर्यायत्वेन प्रयोगो लभ्यत इति।

---

१. तात्पर्यटीका-१६०; २. न्यायमञ्जरी, पृ. ४६९।

**वैशेषिकदर्शने विवृता अन्यथाख्यातिः**

कणादमहर्षिस्त्वेवमाह—अविद्याशब्देन भ्रमात्मकं ज्ञानं स्वीकृतम्। सा च वातपित्तादीन्द्रियदोषाद् विशेषादर्शनरूपसंस्कारदोषाच्च जायते। तथा च सूत्रम्—'इन्द्रियदोषात् संस्कारदोषाच्चाविद्या'[१] इति। इयमेव च मिथ्याज्ञानमिति यावत्। अविद्यापरपर्यायं मिथ्याज्ञानं दोषजन्यं ज्ञानमिति तल्लक्षणमपि प्रादर्शयत् 'तद्दुष्टज्ञानम्'[२] इति सूत्रेण। दुष्टज्ञानं व्यभिचारिज्ञानम् अतस्मिन् तदिति ज्ञानं व्यधिकरणप्रकारावच्छिन्नं विशेष्यवृत्तिप्रकारकमिति यावत्।

प्रशस्तपादोऽप्येवमेवाह—मिथ्याज्ञानस्य विपर्ययशब्देन व्यपदेशे कृतेऽपि अन्यथाख्यातिरेव तदिति स्वीकर्तव्यम्। तथा च भाष्यम्—अतस्मिन् तदिति प्रत्ययो विपर्यय इति[३]।

**मणिग्रन्थोदिता अन्यथाख्यातिः**

नव्यन्यायप्रवर्तकास्तत्त्वचिन्तामणिकारा एवमभिप्रयन्ति—

(अ) विसंवादिप्रवृत्तिर्विशिष्टज्ञानजन्या प्रवृत्तित्वात् संवादिप्रवृत्तिवदिति।

(आ) रजतेच्छाजन्यशुक्तिविषयप्रवृत्तिजनकरजतत्वप्रकारकं ज्ञानं शुक्तिविशेष्यकम्, शुक्तिप्रवृत्तिप्रयोजकज्ञानत्वात्, शुक्तौ शुक्त्यर्थिप्रवृत्तिप्रयोजकज्ञानवदिति।

(इ) विवादास्पदं शुक्तिविशेष्यकं ज्ञानं रजतत्वप्रकारकम्, रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वादिति चानुमानत्रयमन्यथाख्यातिं साधयति। एवमेव शुक्तौ इदं रजतमिति भ्रमानुपदमेव 'इदं रजततया जानाति' इत्यनुव्यवसायो जायते। इदंविशेष्यकरजतत्वप्रकारकव्यवसायं विना तादृशानुव्यवसायस्यानुपपत्तेः। अतोऽनुव्यवसायात्मकप्रत्यक्षवशादपि अन्यथाख्यातिरवश्याङ्गीकार्येति गङ्गेशोपाध्याया आशेरते।

**न्याय(तत्त्व)सिद्धान्तदीपकथिता अन्यथाख्यातिः[४].**

शशिधराचार्यो न्यायसिद्धान्तदीपे शुक्तौ रजतमेव प्रतीयत इति, तत्र च इष्टसाधनताज्ञानमनुमाय रजतार्थी प्रवर्तते, न तु रजतभेदाग्रहासादितेष्टसाधनभेदाग्रहादिति न्यरूरुपत्।

**मुक्तावल्यभिमता अन्यथाख्यातिः**

मुक्तावलीकारो विश्वनाथः प्रमालक्षणघटकतद्विशेष्यकत्वविशेषणसार्थक्यनिरूपणावसरे 'इत्थं च अन्यथाख्यातौ प्रत्यक्षमेव प्रमाणम्, 'रङ्गं

---

१. वैशेषिकसूत्रम्-९-२-१०; २. तदेव-९-२-११।
३. प्रशस्तपादभाष्यम्-४२३; ४. न्यायसिद्धान्तदीपिका, पृ. ५५८।

रजततया अवेदिषम्' इत्यनुभवात्' इत्यन्यथाख्यातिस्वरूपं तत्प्रमाणं च सयुक्तिकं व्यवृणोत्।

### तर्कसङ्ग्रहसूचिता अन्यथाख्यातिः

'तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः'[१] इति तर्कसङ्ग्रहे तदभाववन्निष्ठ-विशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानम् अयथार्थानुभव इत्यन्नम्भट्टेनाभाणि।

### भाट्टप्रतिपादिता अन्यथाख्यातिः

अथेदानीमन्यथाख्यातिमेव उररीकुर्वतां भाट्टानां मतमधिकृत्य किञ्चित् प्रस्तुमः। भाट्टास्तावद् अन्यस्य अन्यथाभानात्मिका ख्यातिरन्यथाख्यातिरिति व्यपदिशन्ति।

### शाबरं मतम्

तत्राहुश्शबरस्वामिपादाः—'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः'[२] इत्यनेन भाष्येण मिथ्याज्ञानम् इन्द्रियादिदुष्टकरणजन्यमिति प्रतीयते। यस्य पुरुषस्य पीतः शंख इति प्रत्ययो जायते, स मिथ्या भवति। पीतशंखज्ञानवतश्चक्षुषः पित्तदोषेण दुष्टत्वात्। यत्र च मिथ्येति प्रत्ययः सोऽपि मिथ्या, यथा शुक्तिरजतज्ञाने मिथ्येति प्रत्ययो भवति बाधादिति शुक्तिरजतप्रत्ययोऽसमीचीनो मिथ्येति यावदिति भाष्यार्थः। अन्यस्य अन्यथाभानात्मकं दुष्टेन्द्रियजन्यं च ज्ञानं किञ्चिदभिमतमिति पश्यामः।

### कुमारिलभट्टमतम्

अत एवाहुः कुमारिलपादा निरालम्बनवादनिरसनावसरे श्लोकवार्तिके—

"तस्माद्यदन्यथासन्तमन्यथा प्रतिपद्यते।
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत्"[३]॥ इति।

तथा हि—लोके तावत् पुरोवर्तिनि वस्तुनि रजतार्थी प्रवर्तते। सा च न कदापि भेदाग्रहसहिताद् ग्रहणस्मरणात्मकज्ञानद्वयमात्राद् भवितुमर्हति। न च रजतप्रातिपदिकार्थमात्रस्मरणं तादृशप्रवृत्तिजनकं भवति। इदंकारास्पदवस्त्वभिमुखं खलु प्रवर्तन्ते रजतार्थिनः। तत्र च प्रवृत्तिः पुरोवर्तिवस्तुविषयकेच्छामन्तरेण न सम्भवति। पुरोवर्तिनि रजतत्वज्ञानं विना तद्विषयकेच्छा न भवितुमर्हति। न च इदन्त्वविशिष्टं रजतत्वेनाजानतोऽपि रजतत्वज्ञानाभावमात्रादेव प्रवृत्तिस्तत्र

---

१. तर्कसङ्ग्रहः; २. शबरभाष्यम्, पृ. ३३।
३. श्लोकवार्तिकम्, पृ. २२२।

सुलभेति वाच्यम्, तथा सति रजतत्वेन इदन्त्वविशिष्टस्याग्रहणात् कुतो वा न निवृत्तिः? एवञ्च पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानरूपाद् विशिष्टज्ञानादेव भ्रमस्थले प्रवृत्तिर्वाच्या। तदेव ज्ञानमन्यथाख्यातिपदेन व्यवह्रियते। अतोऽवश्यमन्यथाख्यातिरभ्युपगमनीया। एतदेव विवृतं श्लोकवार्तिके—

"तस्माद् भ्रान्तिरपि त्वेषां कल्पयत्यर्थमेव नः।
कल्पयत्यन्यथासन्तं न त्वात्मानं व्यवस्यति।।
ततश्च बाधकज्ञानाद् वाचोयुक्तिरियं भवेत्।
अर्थेऽन्यथापि सत्येष धियाकारः प्रतीयते"[१]।। इति।

**पार्थसारथिमिश्रमतम्**

पार्थसारथिमिश्रास्तु इमामन्यथाख्यातिं विपरीतख्यातिपदेन व्यवहरन्ति। "सर्वत्र संसर्गमात्रमसदेव अवभासते। संसर्गिणस्तु सन्त एव। सेयं विपरीतख्यातिरुच्यते **मीमांसकैः**। शुक्तिरजतवेदनेऽपि विद्यमानैव रजतत्वजातिर्विद्यमानस्यैव शुक्तिशकलस्य अनात्मभूतैवात्मतया अवगम्यते। तथा वन्ध्यासुतादिष्वपि विद्यमान एव सुतशब्दार्थो वन्ध्यान्विततया तत्पदसन्निधिदोषादवगम्यते"। इति शास्त्रदीपिकासन्दर्भः। निगदव्याख्यातमितो विरम्यते।

अतस्सिद्धं भाट्टमीमांसकैर्नैयायिकादृता अन्यथाख्यातिरेव समर्थिता विपरीतख्यातिशब्देनापि व्यवहृता चेति।

**जैनमताभिमता अन्यथाख्यातिः**

जैना अपि अन्यथाख्यातिपक्षमेव स्वीकुर्वन्तीति पूर्वमेवावोचाम। प्रमेयकमलमार्तण्डाख्ये जैनग्रन्थेऽस्या विपरीतख्यातिपदेन व्यपदेशः कृतः। तथा चायं ग्रन्थः—'ननु विपरीतख्यातिरपि प्रतिभासविरोधान्न युक्तेति। क एवमाह विपरीतोऽयमर्थ इति ख्यातिः? किं तर्हि पुरुषविपरीते स्थाणौ पुरुषोऽयमिति ख्यातिर्विपरीतख्यातिः'[२] इति।

**अन्यथाख्यातौ आरोप्यस्य रजतादेर्भाने हेतुः**

नन्वेवं सति इदं रजतमित्यादिभ्रमे आपणस्थरजतस्य इन्द्रियसन्निकर्षाभावात् कथं भानं भवितुमर्हति? अतोऽन्यत्र स्थितस्य रजतस्य अन्यत्र भानरूपा अन्यथाख्यातिर्न युज्यते। अयमाक्षेपोऽन्यथाख्यातिवादोपरि इतरैः प्रादर्शि। अस्य चोत्तरप्रदाने विभिन्नाः पन्थानो वरीवृतति।

१. श्लोकवार्तिकम्, पृ. २८९; २. प्रमेयकमलमार्तण्डः, पृ. ५२।

**तत्र न्यायमञ्जरीमतम्**

तत्र न्यायमञ्जरीकृतः—रजतस्मृतिसहिताद् दुष्टादिन्द्रियाद् रजतस्य भानं सम्भवति। एवं स्मृत्यपेक्षायामपि प्रत्यभिज्ञावद् भ्रमः प्रत्यक्षानुभव एव। तथा चैवमसूचि—'तस्माद्दोषकलुषितादिन्द्रियात् पुरोऽवस्थितधर्मिगतत्रिकोणत्वादि-विशेषावमर्शकौशलशून्यात् सामान्यधर्मसहचरितपदार्थान्तरगतविशेष-स्मरणोपकृताद् भवति विपरीतप्रत्ययः'[१] इति, 'उक्तमत्र सदृशपदार्थदर्शनोद्भूत-स्मृत्युपस्थापितस्य रजतस्यात्र प्रतिभासनमिति' इति च। इयमेव रजतस्मृति-र्ज्ञानलक्षणाप्रत्यासत्तित्वेन व्यवह्रियते मणिकृतेति।

**प्रशस्तपादभाष्यम्**

अत्र प्रशस्तपादभाष्यकृतः—शुक्तिसंयुक्तमिन्द्रियं पित्तादिदोषवशात् शुक्तित्वमज्ञापयदपि रजतसादृश्यविशिष्टतया ज्ञापयति। तेन च सादृश्यज्ञानेन रजतविषयकः संस्कारः प्रबोध्यते। स प्रबुद्धो रजतस्मरणजनने प्राप्ते मनोदोषाद् इन्द्रियसंयुक्तायां शुक्तौ अनुभवरूपं रजतज्ञानं जनयति। तथा च पूर्वानुभवजनितः संस्कारो रजतभाने हेतुर्भवति। अयं च तद्ग्रन्थसन्दर्भः—'प्रसिद्धानेकविशेषयोः पित्तकफानिलोपहतेन्द्रियस्य अयथार्थालोचनाद् असन्निहितविषयज्ञानजसंस्कारापेक्षाद् आत्ममनसोः संयोगाद् अधर्माच्च अतस्मिन् तदिति प्रत्ययो विपर्ययः'[२] इति। तथा च संस्कारसहिताद् दुष्टादिन्द्रियाद् रजतादिकमतस्मिन् भासत इति फलितार्थ इति।

**अत्र मणिग्रन्थः**

मणिकारास्तु—'न च हेत्वभावः, प्रत्यभिज्ञानवत् संस्कारेन्द्रियाभ्यां विशिष्टधीसम्भवात्'[३] इति ग्रन्थेन रजतभाने संस्कारः कारणमिति प्रशस्तपादभाष्यमतानुरोधं न्यरूरुपन्। न च इन्द्रियसन्निकर्षजन्यत्वाभावेन कथं तत्र रजतज्ञानं प्रत्यक्षं भवेदिति वाच्यम्, प्रत्यक्षत्वे इन्द्रियसन्निकर्षजन्यत्वं न प्रयोजकम्; अपि तु इन्द्रियजन्यत्वमिति 'मम तु इन्द्रियजन्यत्वात् जात्यसङ्कराच्च साक्षात्कारित्वमेवोभयत्र' इति ग्रन्थेन प्रत्यपीपदन्।

किञ्च प्रत्यक्षे विशेष्येण इन्द्रियसन्निकर्ष एव कारणम्, न विशेषणेनापि। तथा सति 'अयं घट' इति प्रत्यक्षे घटत्वं संयुक्तसमवायाद् भासत इति सिद्धान्तस्य का गतिरिति चेत्, श्रूयताम्—संयुक्तसमवायाख्यसन्निकर्षाद् आदौ विशेषणस्य घटत्वस्य प्रत्यक्षं भवति। ततो विशेषणज्ञानविशेष्येन्द्रिय-

१. न्यायमञ्जरी, पृ. ४६८; २. प्रशस्तपादभाष्यम्, पृ. ४२३।
३. तत्त्वचिन्तामणिः-५४१।

सन्निकर्षभेदाग्रहैः कारणैः 'अयं घटः' इति विशिष्टप्रत्यक्षं जायते। तथा च संयुक्तसमवायाख्यसन्निकर्षस्य विशेषज्ञानोपक्षीणत्वाद् विशिष्टज्ञाने विशेषणभानं प्रति न सन्निकर्षस्यापेक्षा। तदुक्तं मणौ—'तद्विशिष्टज्ञाने विशेषणज्ञानोपक्षीणत्वेन तस्य (सन्निकर्षस्य) अहेतुत्वात्'[१] इति। अस्य च विस्तरः प्रकाशादिग्रन्थ-पर्यालोचनेन द्रष्टव्यः।

अपि च भ्रमं प्रति दोषस्य हेतुत्वं सर्वसम्प्रतिपन्नम्। तथा च सन्निकर्षं विनापि दोषादेव रजतभानमित्यस्तु। प्रत्यक्षप्रमायां सन्निकर्षस्य प्रयोजकत्वेऽपि प्रत्यक्षाभासे दोषस्यैव हेतुत्वात्। तदुक्तं मणौ—'भ्रमोऽसत्यज्ञानमित्यसन्निकृष्टमपि दोषाद् भासत इत्युपेयम्'[२] इति। अयं पक्षः शास्त्रदीपिकायां पार्थसारथिमिश्रैरपि प्रोक्तः।

अथवा संस्कारस्तज्जन्या स्मृतिर्वा सन्निकर्षः। तज्जन्यत्वाद् रजतज्ञानस्य प्रत्यक्षत्वमुपपद्यत इत्यपि कथितं मणौ—'संस्कारस्य स्मृतेर्वा सन्निकर्षत्वाच्च'[३] इति ग्रन्थेन। मुक्तावलीकारोऽपि—'इत्थं च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः'[४] इति कथयन् भ्रमस्य प्रत्यक्षत्वनिर्वाहार्थमेव ज्ञानरूपोऽलौकिकस्सन्निकर्षोऽपि स्वीकर्तव्य इति सूचयति।

**अत्र शास्त्रदीपिका**

शास्त्रदीपिकाकृतस्तु—भ्रमे रजतग्रहं प्रति दोष एव कारणम्, नेन्द्रियसंयोग इति स्वाभिप्रायं न्यवेदयन्। न च अन्यसंयुक्तेनेन्द्रियेण अन्याकारं ज्ञानं कथं स्यात्, भवद्वा कथमन्यांशे प्रत्यक्षं स्यादिति वाच्यम्, प्रत्यक्षप्रमायामेव इन्द्रियसन्निकर्षोऽपेक्षितः, प्रत्यक्षाभासे तु अन्यसंयुक्तमपीन्द्रियं दोषसहकृतमन्यज्ञानं जनयितुमर्हति। दृश्यते हि स्वप्ने मनोदोषाद् अवर्तमानस्यापि वर्तमानवद्भानमिति च प्रत्यपादयन्। तदुक्तम्—'न हि शुक्तिकायां रजतज्ञानमिन्द्रियसम्प्रयोगजम्। किं तर्हि? इन्द्रियसम्प्रयोगात् शुक्तिशकलं रजतसाधारणेन भास्वरत्वादिरूपेण गृहीतम्। असाधारणं तु शुक्तिकात्वमिन्द्रियदौर्बल्यादगृहीतम्। अनन्तरञ्च संस्कारोद्बोधाद् रजतं स्मृतम्। ततः स्मृतरजतात्मना शुक्तिव्यक्तिर्दोषवशाद् गृह्यते। अतो नेन्द्रियसम्प्रयोगजं रजतविज्ञानम्' इति। अत्रत्यो युक्तिस्नेहप्रपूरणीग्रन्थोऽनुसन्धेयः।

●

---

१. तत्त्वचिन्तामणिः-५४४;
२. तदेव-५४९।
३. तदेव-५४३;
४. न्यायसिद्धान्तमुक्तावली, पृ. ४८७।

# विशिष्टाद्वैतदर्शने न्यायवैशेषिकपदार्थविमर्शः

**डॉ. पी.वी. शठकोपताताचार्यः**

न्यायाध्यापकः, श्रीशङ्कराचार्यसंस्कृतसर्वकलाशाला

तृशूर्-प्रादेशिककेन्द्रम्



आस्तिकलोके 'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारक'मिति श्रूयते, काणादशास्त्रस्य लोके विद्यमानपदार्थप्रतिपादनपरत्वात्। न्यायस्य च प्रमाणप्रतिपादनपरत्वात् काणादमिति पदं न्यायस्याप्युपलक्षकमिति। तथा च तयोः सर्वशास्त्रोपकारकत्वमभिमतमिति। सर्वशास्त्रान्तर्गतवेदान्तदर्शनेऽन्यतम-शाखात्वेन प्रथितं विशिष्टाद्वैतदर्शनमपि। तस्याप्युपकारकं भवति काणादम्। अथापि कुत्रचित् केषाञ्चित्पदार्थानां नामसाम्येऽपि लक्षणस्वरूपादिप्रतिपादने महान् भेदो दृश्यते। केचन पदार्था न्यूनाधिकभावेन न्यायवैशेषिकयोः प्रस्तुता इत्यभिप्रयन्ति। तमधिकृत्य केचन विषयाः प्रस्तूयन्ते।

विशिष्टाद्वैतदर्शनस्थापको भवति श्रीमद्रामानुजमुनिः। ततः पूर्वमपि श्रीमन्नाथमुनियामुनमुनिप्रभृतिभिर्बहवो ग्रन्था विरचिता विराजन्ते। तत्र न्यायतत्त्वमिति कञ्चन ग्रन्थं श्रीमन्नाथमुनिः प्रणिनाय। तत्र मङ्गलश्लोको भवति—

(क) 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः।
तं प्रणम्य हरिं शास्त्रं न्यायतत्त्वं प्रचक्ष्महे'॥ इति।

तत्र न्यायविषयाः प्रतिपादिता इत्यवगन्तुं शक्यते। अथापि दौर्भाग्यवशात् सम्पूर्णतया ग्रन्थोऽयं नोपलभ्यते। तदनन्तरकाले त्रयोदशशतकेऽवतीर्णैः श्रीमद्वेदान्तदेशिकैः स्वकीये न्यायपरिशुद्धिनामके ग्रन्थे इत्थमुद्धृतम्—

(ख) 'भगवन्नाथमुनिना न्यायतत्त्वसमाह्वया।
अवधीर्याक्षपादादि न्यबन्धि न्यायपद्धतिः'॥ इति।

एवं बहुत्र तदीया पङ्क्तिराद्रियते प्रमाणत्वेन।

प्राचीनन्यायशास्त्रस्य प्रमेयशास्त्रं नवीनस्य च प्रमाणशास्त्रमिति प्रथा विषयप्रतिपादनमधिकृत्य वर्तते। तत्र न्यायपरिशुद्धिनामको ग्रन्थः प्रमाणप्रतिपादनग्रन्थः, न्यायसिद्धाञ्जनग्रन्थश्च प्रमेयप्रतिपादनपरः। अयञ्च ग्रन्थः श्रीमद्वेदान्तदेशिकैरेव व्यरचि। सः स्वयमेव कथयति—

(ग) 'यन्न्यायपरिशुद्ध्यन्ते सङ्ग्रहेण प्रदर्शितम्।
पुनस्तद्विस्तरेणात्र प्रमेयमभिदध्महे'।। इति।

**प्रमाणविचारः**

प्रमेयसिद्धेः प्रमाणाधीनत्वात् प्रथमं प्रमाणमधिकृत्य विचारयामः। तत्र—

(क) विद्यास्थानेषु धर्म्येषु गण्यते न्यायविस्तरः।
स च विप्लावितस्तैस्तैस्ततोऽत्र परिशोध्यते।। (न्या.प.)

अनेनावगम्यते यत् केचन विषया वेदान्तिनां विरुद्धा न्याये प्रतिपादिता इति। एवञ्च केषाञ्चिद्विषयाणां स्वीकारोऽपि सम्मतः। केषाञ्चित्पदार्थानां न्यूनाधिकविरुद्धव्यपदेशादीनामलक्षणलक्षणोक्तीनां च अध्याहारान्यपर्यायाभ्यां निर्वाहः कर्तुं शक्यते। श्रुतिस्मृतिशारीरकशास्त्रैर्विरोधो यत्र भवति, तत्र खण्डनमपि कृतम्। कुत्रचिद् व्याख्यानान्तरेण विरोधपरिहारः—

१. (ख) **'इन्द्रियाणि भूतेभ्यः'** (न्यायसूत्रम्) अत्र ज्ञानेन्द्रियस्य पञ्चत्वकथनाद् इन्द्रियान्तरं नास्तीति न भवति। अपि च भूतेभ्य इति नोपादानकारणपरम्, किन्तु आप्यायनपरमिति व्याख्यानान्न तत्र विरोधः।

२. (ग) **'तदत्यन्तविमोक्षोऽपवर्गः'** (न्यायसूत्रम्) अत्र दुःखात्यन्तनिवृत्तिरेवापवर्ग इति कथनात् मोक्षदशायां ज्ञानाभावः कण्ठतो न प्रतिपाद्यते। भूषणकारेण भासर्वज्ञेनापि नित्यसुखसंवेदनसम्बन्धप्रतिपादनान्न तत्रापि विरोधः।

३. वर्णानामनित्यत्वं न्यायसूत्रेऽभिहितम्। तत्रापि श्रुतिविरोधो न भवतीति।

अत्रायमाक्षेपो भवति, सूत्रस्यान्यथा व्याख्यानान्न विरोध इति कथमुपपद्यत इति। तत्रैवं समाधातुं शक्यते। तदनुयायिभिरेव बहुत्र तथा व्याख्यातत्वात्। यथा (घ) **'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्ष'**मिति न्यायसूत्रम्। इदं च प्रत्यक्षलक्षणं भवति ईश्वरीयप्रत्यक्षेऽव्याप्तञ्च। ईश्वरप्रत्यक्षस्य इन्द्रियाजन्यत्वात्। अत एव मणिकारः 'ज्ञानाकरणकं ज्ञानं प्रत्यक्ष'मिति

प्रत्यक्षलक्षणम् इन्द्रियादिपदाघटितं वर्णयामास। अर्थाद् अनुमितौ व्याप्तिज्ञानं करणम्, उपमितौ सादृश्यज्ञानं करणम्, शाब्दे च पदज्ञानं करणं तथा च ज्ञानाकरणकं ज्ञानं प्रत्यक्षमेव भवति। इदञ्च ईश्वरप्रत्यक्षसाधारणमिति न तत्राव्याप्तिः। तथा च यत्र विरोधो भवति तत्रान्यथाव्याख्याने दोषाभावात्।

नन्वेवं विरोधाभावे किमर्थं बादरायणसूत्रे (ङ) 'अपरिग्रहाच्चात्यन्तमनपेक्षा' इति सूत्रेण खण्डनप्रकार इति चेत्, उच्यते—तत्र न न्यायमतस्य खण्डनम्; किन्तु कणभुक्पक्षस्यैव। अतो गौतमपक्षस्यास्वीकारो न सर्वथा वक्तुं शक्यत इति आचार्याणामभिप्रायः। तत्र कथयति—(च) 'यत्पुनरर्वाग्भिरक्षचरणपञ्चाध्याय्यां कुशकाशावलम्बेन कणचरणकथां निवेश्य नैगमिक्यः पदव्यो निरुध्यन्ते, तत्र तु नूनं स एव गौतमः स्वयमन्तः प्रहसति' इति (न्यायपरिशुद्धिः)। अनेन ज्ञायते न्यायवैशेषिकयोः समानतन्त्रतायामपि न तेषामभिप्राय इति।

विशिष्टाद्वैतवेदान्ते केचन विशेषाः प्रस्तूयन्ते।

**प्रमालक्षणम्**

तद्वति तत्प्रकारकं ज्ञानं प्रमेति न्यायमतरीत्या प्रमाया लक्षणम्। विशिष्टाद्वैते सम्यगनुभवः प्रमेति एकं लक्षणम्, अनुभूतिः प्रमेत्यपरं लक्षणम्। एवं बहूनि लक्षणानि सन्ति। 'यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा' इत्येकं लक्षणम्। इदमेव श्रीवेदान्तदेशिकाभिमतं लक्षणम्। तद्वति तत्प्रकारकत्वस्य यथार्थज्ञान(प्रमा)लक्षणत्वे, तदभाववति तत्प्रकारकं ज्ञानमित्ययथार्थस्य लक्षणं स्यात्। वेदान्तिमते सर्वस्यापि ज्ञानस्य यथार्थत्वात्। तदुक्तं (क) 'प्रायो बुद्धिर्यथार्था श्रुतिविदभिमता' (अधिकरणसारावलिः)।

**प्रमाणसंख्या**

न्यायमते (ख) 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी'ति (न्या.सू.) प्रमाणचतुष्टयं प्रतिपादितम्। वेदान्तिमते त्रिविधं प्रमाणं प्रत्यक्षानुमानशब्दभेदात्। तत्र प्रमाणं मानवं वचः।

(ग) 'प्रत्यक्षमनुमानञ्च शाब्दञ्च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता'।। इति।

तत्त्वरत्नाकरेऽपि (घ) 'प्रत्यक्षादिमूलानां स्मृतीनां स्वस्वमूलेऽन्तर्भावविवक्षया प्रमाणत्रित्वाविरोध' इति। केचन—(ङ) 'स्मृतिः प्रत्यक्षमैतिह्यम्।

अनुमानश्चतुष्टय'मिति (तैत्तिरीयारण्यकम्) वचनात् स्मृत्या सह प्रमाणचतुष्टयं समर्थयन्ति।

**प्रत्यक्षलक्षणम्**

न्यायसूत्रकारीयप्रत्यक्षलक्षणं तावत् (च) 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्ष'मिति। अस्य ईश्वरप्रत्यक्षेऽव्याप्त्या मणिकारैरन्यदेव 'ज्ञानाकरणकं ज्ञानं प्रत्यक्ष'मिति लक्षणं कृतमिति पूर्वमेवोक्तम्। वेदान्ते च १. (छ) 'साक्षात्कारिप्रमा प्रत्यक्षम्' (न्या.प.), साक्षात्त्वं च जातिरूपम्। जातिश्च न नैयायिकोक्ता इति केषाञ्चिन्मतम्। २. (ज) 'साक्षादनुभवः प्रत्यक्ष'मिति (प्रमेयसङ्ग्रहः) अपरं लक्षणम्। ३. (झ) 'ज्ञातकारणजज्ञानस्मृतित्वरहिता मतिः प्रत्यक्ष'मिति (न्या.प.) एकं लक्षणम्। इदञ्च लक्षणं वेदान्तदेशिकाभिमतम्। अस्य लक्षणस्य मणिकारलक्षणसाम्यं वर्तत इति न कुत्राप्यव्याप्तिः। प्रत्यक्षे नित्यमनित्यमिति द्विधा भेदो भवति। ईश्वरप्रत्यक्षं नित्यम्, अस्मदादिप्रत्यक्षमनित्यमिति वेदान्ते विशेषः।

**प्रत्यक्षविभागः**

न्यायमते प्रत्यक्षं द्विविधम्—निर्विकल्पकं सविकल्पकं चेति। इदं च वेदान्तिनां सम्मतमेव; परन्तु निष्प्रकारकं ज्ञानं निर्विकल्पकमिति लक्षणे भेदो भवति। तेषां पक्षे निर्विकल्पकज्ञानस्यापि सप्रकारकत्वमेव। तत्र प्रमाणम् अनुमानमेव। प्रयोगश्च भवति—प्रथमाक्षसन्निपातजा बुद्धिः, विशिष्टविषया, बुद्धित्वात्, सम्प्रतिपन्नबुद्धिवद् इति।

अत्रायमाक्षेपः—निर्विकल्पकस्यापि सप्रकारकत्वे सविकल्पकज्ञानेन भेदो न स्यादिति। तत्र समाधिः—सविकल्पकज्ञानाकारे भेदोऽङ्गीक्रियते। अर्थाद् अयमपि गौरित्येव सविकल्पकज्ञानं भवति। तत्र गोत्वस्यानुवृत्तिर्भवति। निर्विकल्पकेऽनुवृत्तिर्न भासत इति विशेषः। तथा च अयथार्थज्ञानवत् निष्प्रकारकज्ञानस्याप्यनङ्गीकारात्।

**अनुमानम्**

अनुमानप्रकरणे—अविनाभूतं व्याप्यम्। तदुक्तम्—

(क) 'यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत्।
स व्याप्यो व्यापकस्तस्य समो वाभ्यधिकोऽपि वा'।। (न्या.प.) इति।

अर्थाद् अनधिकदेशकालनियतं व्याप्यम्। अन्यूनदेशकालवृत्ति व्यापकमिति।

**हेतुभेदः**

न्यायनये हेतुस्त्रिविधः—केवलान्वयी, केवलव्यतिरेकी, अन्वयव्यतिरेकीति। वेदान्ते केवलव्यतिरेकिणं विहाय हेतुर्द्विविध इति।

अत्रायमाक्षेपः—केवलव्यतिरेकिणो लक्षणरूपत्वात् तदनभ्युपगमे लक्षणमेव न स्यादिति। स एवं परिह्रियते। तत्त्वरत्नाकरे अर्थासाधारणाकार-प्रतिपत्तिनिबन्धनम्। सजातीयविजातीयव्यवच्छेदेन लक्षणम् अर्थाद् असाधारणधर्मोपस्थापनेन व्यवहारव्यवस्थापकमाप्तवाक्यं लक्षणम्। यथा गन्धवती पृथिवीति। अत्र पृथिव्या असाधारणधर्मरूपगन्धवत्त्वोपस्थापनेन व्यवस्था सम्भवति। तथा च न दोषः। अपि च श्रीयामुनाचार्याः स्वीयात्मसिद्धिग्रन्थे केवलव्यतिरेकिहेतुं खण्डयन्ति। (ख) 'स साधनदशामेव न प्राप्नोति, सपक्षान्वयविरहात् असाधारणवत्'। अर्थात् सद्धेतोः पञ्चरूपाणि सन्ति, तानि च पक्षव्यापकत्वम्, सपक्षे सत्त्वम्, विपक्षवृत्तिरहितत्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षितत्वं च। तत्र केवलव्यतिरेकिस्थले हेतौ सपक्षसत्त्वं नास्ति। तथा च तस्य साधकत्वमेव नास्तीत्यभिप्रायः।

वैशेषिकदर्शनव्याख्यानरूपोपस्कारग्रन्थे (क) 'गमकतौपयिकानि यावन्ति रूपाणि तदन्यतमरूपशून्यत्वं हेत्वाभासत्व'मिति कथयन्ति। तदुपर्याक्षेपो भवति। एवं चेत् केवलान्वयिहेतौ विपक्षस्यैवासत्त्वाद् विपक्षावृत्तित्वं नास्ति, एवं केवलव्यतिरेकिणि सपक्षाभावात् सपक्षसत्त्वं नास्ति, तथा च तयोः अन्यतमरूपशून्यत्वसत्त्वात् तयोरपि हेत्वाभासत्वं स्यादिति। तत्र समाहितं यत् केवलान्वयिस्थले विपक्षावृत्तित्वं विहाय चत्वार्येव गमकतौपयिकानि, केवलव्यतिरेकिस्थले सपक्षवृत्तित्वं विहाय चत्वार्येव गमकतौपयिकानि। तथा च न तयोर्हेत्वाभासत्वमिति।

अत्रेयमाशङ्का—केवलव्यतिरेकिहेतोस्सपक्षान्वयविरहाद् असाधारणवद् हेतुत्वं नास्तीत्युच्यते, तथा केवलान्वयिनो विपक्षाप्रसिद्ध्या विपक्षवृत्तिरहितत्वाभावात् तस्यापि हेतुत्वं न स्यात्—'पूर्वोक्तपञ्चरूपोपपन्नं विपक्षरहितं केवलान्वयीति' केवलान्वयिनो लक्षणमिव, केवलव्यतिरेकिस्थलेऽपि सपक्षाभावादेव सपक्षान्वयविरहस्सम्भवतीति, अत्रापि सपक्षरहितं पूर्वोक्तपञ्चरूपोपपन्नं केवलव्यतिरेकीति कुतो नोक्तमिति।

समाधानम्—तत्र विपक्षाभावाद् विपक्षवृत्तित्वमपि नास्तीति तावता विपक्षावृत्तित्वं साधयति।

**अनुमानभेदः**

न्यायनयेऽनुमानं द्विविधम्—स्वार्थं परार्थं चेति; परन्तु वेदान्तिमते सर्वेषामप्यनुमानानां स्वव्यवहारमात्रहेतुत्वेन सर्वं स्वार्थमेवानुमानम्, न परार्थम्। नैयायिकोक्तरीत्या परार्थपदस्य निर्वचनासम्भवात्। न्यायजन्यशाब्दबोधानन्तरं जायमानमनुमानमपि स्वार्थमेव।

**अवयवाः**

पञ्चावयवप्रयोगेऽपि मतभेदो दृश्यते। पञ्चावयवाः प्रयोक्तव्या इति नैयायिकानां मतम्। उदाहरणान्तं तदाद्यं वा (उदाहरणादिनिगमनान्तं वा) त्रितयमिति मीमांसकाः। उदाहरणोपनयाविति बौद्धाः; परन्तु वेदान्तिनां मते न नियमो यथायथं सङ्गच्छते। अर्थात् कदाचित् पञ्चावयवः, कदाचिच्च त्र्यवयवः। कारणं तु प्रयोक्तॄणां सामर्थ्यमेव।

**हेत्वाभासः**

**'अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः'** इति काणादं सूत्रम्। अर्थाद् अप्रसिद्धपदेन असिद्धस्य, असन्नित्यनेन विरुद्धस्य, सन्दिग्धपदेन चानैकान्तिकस्य ग्रहणाद्धेत्वाभासानां त्रित्वं सूत्रकारसम्मतम्। तत्स्पष्टीकृतं प्रशस्तदेवैः—

(ख) 'यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते।
विपरीते च यन्नास्ति तल्लिङ्गमनुमापकम्'।। (प्रशस्तपादभाष्यम्)

इति सद्धेतोस्स्वरूपमुक्तम्। तदनन्तरम्—

(क) 'विपरीतमतो यत्स्याद् एकेन द्वितयेन वा।
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्'।। (प्र.भा.)

इति हेत्वाभासस्वरूपं तत्संख्यया सह प्रदर्शितम्।

न्यायनये तु सत्प्रतिपक्षबाधौ च संयोज्य पञ्चधा हेत्वाभासो वर्णितः। (ख) 'सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः' इति न्यायसूत्रम्। अत्रासिद्ध एव साध्यसमशब्देनोच्यते। न्यायतत्त्वे (ग) 'असिद्धानैकान्तिकविरुद्धा हेत्वाभासाः' इति कणादवत् त्रित्वमुक्तम्।

प्रायशो हेत्वाभासविषये तावान् मतभेदो न दृश्यते। अनैकान्तिको द्विविधः—साधारणासाधारणभेदात्; न्यायनये, वैशेषिकनये च त्रिविधः, साधारणासाधारणानुपसंहारिभेदात्।

वेदान्ते हेत्वाभासवद् उदाहरणाभासा अपि प्रदर्शिताः। एवं प्रशस्तपादभाष्येऽपि प्रदर्शिताः।

**शब्दः**

काणादाः शब्दप्रमाणप्रकरणे वेदस्य पौरुषेयत्वमनुमानेन साधयन्ति। प्रयोगश्च—वेदाः सर्वज्ञप्रणीताः, वेदत्वात्। श्रुतीरपि प्रमाणयन्ति (घ) 'यजुस्तस्मादजायत' इत्यादि; परन्तु वेदान्तिनो वेदस्यापौरुषेयत्वम् अनुमानेन श्रुत्या च साधयन्ति। एवं क्वचित् मतभेदः, क्वचिच्च साम्यं प्रमाणविषये प्रदर्शितम्। प्रमेयविषये क्वचिद्विशेषाः प्रस्तूयन्ते।

निरूप्यं प्रमेयं कया रीत्या विशोध्यत इत्यत्र न्यायसिद्धाञ्जने बुद्धिपरिच्छेदान्ते (ङ) 'वैशेषिकशैलीमनुसृत्य यथावस्थितपदार्थस्वरूपं विशोध्यत' इति।

अत्रायमाक्षेपो भवति वैशेषिकप्रक्रियाखण्डनरूपस्यास्य कथं तच्छैल्यनुसरणमिति।

एवं समाधातुं शक्यते—न्यायपरिशुद्धौ न्यायदर्शनशैलीमनुसृत्य सर्वं विशोधितम्; परन्तु तत्र न लोकवेदप्रसिद्धनिखिलप्रमेयनिरूपणं भवति केवलं द्वादशप्रमेयानि निरूपितानि, तानि च (च) 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्ति-दोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयानीति' न्यायसूत्रोक्तानि, तद्वृत्तिप्रमेयत्वं बन्धहेतुभूतमिथ्याज्ञानविषयत्वम्, मोक्षोपायभूततत्त्वज्ञानविषयत्वमात्रम्। अत एव न्यायभाष्ये भाष्यकारेण स्पष्टमभाणि (छ) 'अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयं तद्भेदेन च असङ्ख्येयमिति। द्वादशप्रमेयतत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत्र उपदिष्टं विशेषेण' इति।

पूर्वोक्तेषु प्रमेयेषु सामान्यविशेषसमवायानां पदार्थत्वं नेष्टम्। दिक्संज्ञकपदार्थम् आकाशस्य नित्यत्वं च नेच्छन्ति। (क) 'आत्मन आकाशः सम्भूतः' इति तैत्तिरीयश्रुतौ आकाशस्योत्पत्तिश्रवणात्। विशेषपदार्थं विनापि व्यावर्तकसिद्धेः। मुक्तेषु च सुखदुःखतत्कारणसन्ततेर्मिथो व्यावर्तकत्वात् तत्रापि न विशेषस्यावश्यकता।

एवं संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् सामान्य-पदार्थस्वीकारो नावश्यकः।

एवं समवायाभ्युपगमेऽपि दोषस्य साम्यात् समवायस्य नित्यत्वे तत्सम्बन्धिनोर्नित्यत्वापत्तेश्च न समवायः सिद्ध्यति। अत्रायं विशेषः— समवायस्थाने अपृथक्सिद्धविशेषणस्य सम्बन्धत्वं स्वीकुर्वन्ति।

नैयायिकोक्तात्मगुणानां मध्ये सुखदु:खेच्छाद्वेषप्रयत्ना: पञ्च बुद्धिविशेषानतिरिक्ता:। विभागपृथक्त्वे परत्वापरत्वे च न। तथा च दशैव गुणा अद्रव्यत्वेन व्यवह्रियन्ते। एवं बुद्धे: द्रव्यत्वम्, नित्यत्वम्, आत्मनोऽणुत्वम्, ईश्वरस्य च शास्त्रगम्यत्वमित्यादिविषयेऽपि महान् भेदो विचारश्च प्रस्तुत:। तथा च एवं विभाग: प्रस्तुतो द्रव्याद्रव्यप्रभेदात् प्रमेयो द्विविध:, पञ्चधा च द्रव्यविभागा:, जडद्रव्यजीवेश्वरनित्यविभूतिबुद्धिभेदात्। अथवा प्रकृति-कालजीवेश्वरनित्यविभूतिबुद्धिभेदात् षड्विधम्। अद्रव्याणि दश। अमुमेव विषयं श्लोकरूपेण सङ्गृह्णाति तत्त्वमुक्ताकलापनामकग्रन्थे श्रीवेदान्तदेशिक:—

(ख) 'द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहु-
र्द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ।
अन्त्यं प्रत्यक्पराक्च प्रथममुभयथा तत्र जीवेशभेदात्
नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहु:'।। इति।



# दर्शनानां पुरुषार्थप्रयोजनकत्वम्

**डॉ. विजयकुमारपाण्डेयः**
प्राध्यापकः, साहित्यविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्



प्रयुज्यतेऽनेन तत्प्रयोजनमिति व्युत्पत्त्या प्रवृत्तिहेतुरेव प्रयोजनं भवति। न्यायदर्शने आचार्यगौतमेन यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनमिति [1]लक्षणं कृतम्, तथा यदुद्दिश्य प्रवर्तन्ते पुरुषास्तत्प्रयोजनमिति [2]वरदराजेनाभिहितम्। प्रवृत्तिहेत्विच्छाविषयत्वं प्रयोजनमिति तत्त्वचिन्तामणिकारेण लक्षणं लक्षितम्[3]। पुरुषप्रयोजनं पुरुषार्थश्च समानपर्यायकौ। पुरुषः किमप्युद्दिश्य एव कस्मिंश्चित् कार्ये प्रवर्तते। तत्प्रयोजनं सुखस्वरूपमेवान्यथा कार्ये प्रवृत्तिर्न स्यात्। यज्ज्ञातं सत् स्ववृत्त्येष्यते स पुरुषार्थ इति नैयायिकानां लक्षणम्। नैयायिकाः सुखं दुःखाभावश्च द्वौ पुरुषार्थौ मन्यन्ते तत्र फलेच्छां प्रति फलज्ञानं कारणं तथा उपायेच्छां प्रति इष्टसाधनताज्ञानं कारणम्[4]। एतस्यार्थः[4] प्रयोजनमिति व्युत्पत्तिमङ्गीकृत्य 'धर्मार्थकाममोक्षाश्च पुरुषार्था उदाहृताः' इत्यग्निपुराणीयं वचनं सङ्गच्छते।

वस्तुतश्चत्वारः पुरुषार्था इति वचनमौपचारिकम्, यतो दार्शनिकैः स्वाभिमतं प्रयोजनं पुरुषार्थ इति नाम्ना व्यवहृतम्। कौण्डिन्यश्रुतौ 'अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरं तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरम्'[5] इति कथयित्वा त्रयः पुरुषार्था वर्णिताः। धर्मार्थकाममोक्षेषु

---

१. न्या.सू. १/१/२४।
२. वरदराजकृततार्किकरक्षायाम्, श्लो. ६।
३. गंगेशकृततत्त्वचिन्तामणौ–४।
४. न्यायसिद्धान्तमुक्तावल्यां गुणप्रकरणे इच्छानिरूपणे द्रष्टव्यम्।
५. मध्वभाष्यादुद्धृतं वचनं द्रष्टव्यम्।

धर्मार्थकामानां गणना त्रिवर्गेषु क्रियते, तथा मोक्षं ज्ञानान्तर्गतं मन्यते[१]। जैमिनिना मोक्षमनभिमन्य पुरुषप्रीतये विधीयमानस्य कार्यस्यैव पुरुषार्थसंज्ञा विहिता, तस्य सत्त्वे यस्मिन् स्वर्गादिसुखविशेषे पश्वादिसुखसाधने च लब्धे प्रीतिः कृतार्थोऽस्मीति वृत्तिस्तत्साधनं पुरुषार्थः कथ्यते[२]। चार्वाकमते 'अङ्गनालिङ्गनादिजन्यमैन्द्रिकसुखमेव पुरुषार्थः'[३], समानन्दैकरसञ्च पुरुषार्थ इति शाङ्करमते[४], मध्वमते च भक्तिरपि पुरुषार्थो मन्यते। भक्त्या भगवत्प्राप्तिरेव परमपुरुषार्थ इति रामानुजवचनम्। न्यायमते एकविंशतिदुःखानामात्यन्तिकोऽभाव एव परमपुरुषार्थः। तदुक्तमस्ति दुःखजन्मप्रवृत्तीत्यादि-गौतमसूत्रे[५]।

प्रयोजनविषये पुरुषार्थविषये वा प्रयोजनं सुखरूपमेव भवति, फलं तु सुखदुःखयोरन्यतरद् भवितुमर्हति, अन्यथा कार्यप्रवृत्तावुत्साहाभावः स्यात्, तथा कार्यं सम्पूर्णतां न गच्छेत्। मनुष्यस्य स्वभावोऽयं यत् स यद्वस्तुरूपं पुरुषार्थमर्थयते तत्तदर्थं श्रमं विधायाप्यात्मनि तद्वस्तु स्ववृत्तिकं कर्त्तुमिच्छति, अतः पुरुषार्थस्य एकोऽयमप्यर्थोऽस्ति—'श्रमेण प्राप्तव्योऽर्थः पुरुषार्थः' इति। श्रीमद्भागवते वर्णितमस्ति यत् परमात्मनो जीवसृष्टेरुद्देश्यमिदमेव यज्जीवः पुरुषार्थं प्राप्य परमात्मानमपि जानीयात्[६]। मायाबन्धने क्षेपणं जीवस्य नास्तीष्टं भगवतः। जीवस्य चेतनाचेतनतत्त्वयोस्सम्मिश्रणं व्यावहारिकरूपेऽस्ति, वस्तुतः स तु आनन्दमयपरमात्मनोंऽशः। भौतिकजडतत्त्वस्य साहाय्यं विना जीवो मृत्युं तर्तुं न प्रभवति तथा आध्यात्मिकं स्वरूपमज्ञात्वा स्वामृततत्वमपि ज्ञातुं न शक्नोति, अतो जीवने विद्याविद्ययोरावश्यकताऽस्त्येव। व्यवहारकाले जनः कर्म अकृत्वा क्षणमपि स्थातुं न शक्नोति। अत ऐहिकेच्छापूर्तिरपि व्यावहारिकजीवने आवश्यिकी[७]। पुरुषो यदर्थं प्रयतते तस्य चतस्रोऽवस्था भवन्ति—

---

१. श्रीमद्भागवतम्-७/६/२८।
२. जैमिनिन्याय. ४/१/२१।
३. सर्वदर्शनसंग्रहे (चार्वाकदर्शनम्)।
४. सर्वदर्शनसंग्रहे (शाङ्करदर्शनम्)।
५. न्या.सू. १/१/२।
६. श्रीमद्भागवतम्–१०/८६/२।
७. ईशावास्योपनिषद्–२६/६।

१. जगतो वस्तुन्येवार्थोऽथवा तानि प्राप्तुं धनमेवार्थः।

२. धनवस्तुव्यक्तिपरिस्थितीनां भोग एव कामः।

३. अर्थभोगयोर्व्यवस्था एव धर्मः।

४. सर्वेभ्यो बन्धेभ्यो निवृत्तिरेव मोक्षः। परिच्छिन्नताया अपरिच्छिन्नतायां गमनम्।

एतेषां मूले सुखमेव तिष्ठति। अर्थो बहिरङ्गं सुखं कामोऽन्तरङ्गं मनःस्थं सुखम्, धर्मो बुद्धिस्थं सुखं तथाऽऽत्मनो नित्यानन्दस्वरूपताबोधको मोक्षः, अर्थात्काम आन्तरः, कामाद् धर्मः, धर्मान्मोक्षश्चान्तरः, अर्थकामयोर्मध्ये धर्म आवश्यकः, अन्यथाऽनियन्त्रितौ तौ रागद्वेषौ जनयतः। धर्मनियन्त्रितावर्थकामौ व्यवस्थितौ तिष्ठतः। मोक्षोन्मुखो धर्मः सत्योन्मुखो भवति, यस्य आदिस्रोतांसि वेदाः सन्ति। वैदिकधर्म एवार्थभोगौ नियन्त्र्य पुरुषस्य जीवनं सत्त्वोन्मुखं करोति, स्वस्वरूपं बोधयति। वैदिकधर्मस्योपदेशो नास्ति पलायनवादपोषकः, न वा नैराश्योपस्थापकः[१]। विभिन्नकक्षायां विभिन्नावस्थायां वा एते पृथक् पृथग्रूपेण पुरुषार्था स्वमहत्त्वं रक्षन्ति, यथा देहकक्षायां द्रव्यमर्थो वा पुरुषार्थः, मानसकक्षायां यज्ञदानतपःप्रभृतिभिः कर्मभिः स एव वेद्यः[२]। अतः पुरुषार्थानां पुरुषार्थत्वं विद्यत एव।

चार्वाकमन्तरा सर्वेऽप्यास्तिकनास्तिकदार्शनिका मोक्षं परमपुरुषार्थत्वेन प्रतिष्ठापयन्ति। यत्र कुत्रचित् पुरुषार्थपदेन धर्मार्थकामानामेव विधानं कृतम्। अत एव केचन विद्वांसो मोक्षसिद्धान्तं भारतीयदर्शनासम्मतमिति स्वीकुर्वन्ति, तन्मते दार्शनिकचिन्तने मोक्षस्य नास्ति कश्चन सम्बन्धः। केचनान्ये पाश्चात्यविद्वांसोऽपि भारतीयदार्शनिकचिन्तनस्योद्देश्यभूतं मोक्षं शुद्धचिन्तने विघातकमिति जल्पन्ति; परञ्चेदमविचारितरमणीयं तथ्यं प्रतिभाति, यतो हि यच्चिन्तनं सत्यान्वेषणातिरिक्तमुद्देश्यान्तरपूर्तये क्रियते, तन्न समीचीनतां भजते, कस्यचिदपि शास्त्रस्य सार्थक्यं सत्यप्राप्तावेवास्ति, अप्राप्ते सत्ये किमर्थं

१. ईशावास्यप्रवचनम् (स्वामी अखण्डानन्दसरस्वती)।

२. ब्रह्मसूत्रशाङ्करभाष्यम्, कौस्तुभप्रभाभाष्यम्-३/४/१/२०।

शास्त्रशरणम्। प्रायश एतस्मादेव कारणात् पाश्चात्त्यविद्वांसो भारतीयदर्शनानामन्तर्भावं धर्मविचारे कुर्वन्ति।

पुरुषार्थशब्दस्यापरपर्यायभूतो मूल्यमिति शब्द आधुनिकैः पाश्चात्त्यविद्वद्भिर्विविच्यते। अत्र धर्मो नाम शुभकर्म, अर्थो नाम ज्ञानविषयत्वम्, कामो नाम इच्छाविषयत्वम्। इमे त्रयः पुरुषार्था जीवनसम्बन्धिमूल्यपदवाच्याः सन्ति। मनसा कृत्या ज्ञानेन भावनया सह चैतेषां मूल्यानां सम्बन्धो मन्यते।

कैश्चिदर्थः सुखसाधनवाचकः, कामश्च वासनाबोधक इति कथ्यते। तन्मते वासनापूर्तिस्तत्पूर्तिसाधनानि स्वस्यापरस्य च क्षेमसाधनकर्माण्येव भारतीय-जीवनमूल्यपदेन ज्ञायन्ते; परञ्चासङ्गतमिदं चिन्तनं प्रतीयते, यतो वासनापूर्त्तिरेव यद्येकं मूल्यं तर्हि तत्साधनं गौणमूल्यकमिति सुतरां सिद्धम्। एवं सति धर्मोऽपि आत्मनः परस्य निखिलजगतश्च कल्याणमूलकत्वात् कल्याणसाधनत्वाद्वा गौणमूल्यकः स्यात्। तथा च वासनापूर्त्तिरेव जीवनस्य मुख्योद्देश्यत्वेनावशिष्यते। अतो नायं मूल्यशब्दस्य समीचीनोऽर्थः। यदि मूल्यशब्दस्यार्थो मनुष्यकामनाविषयत्वयोग्यत्वमिति क्रियते, तदा धर्मः, अर्थः, कामश्चापि पुरुषार्थपदेन व्यवहर्तुं शक्यन्ते।

भोग (कामः) एव पुरुषार्थः। आत्मकक्षायां मोक्षः पुरुषार्थः[१]। पुरुषार्थानां दृष्ट्या वेदस्य प्रामाण्यं द्विकोटिकं शासनात्मकं शंसनात्मकञ्च। विधिनिषेधनियामकानि वेदस्य शासनात्मकप्रमाणानि। एतदनुशासनानां चरमोद्देश्यं तावद् भ्रमादिदोषमुक्तप्रज्ञायाः सम्पादनं येनेह परमसत्यस्य साक्षात्कारो भवेत्। वेदस्य शंसनात्मकप्रमाणानि भोक्तृभोग्यादितत्त्वानां सम्बन्धबोधकानि।

प्रयोजनरूपः पुरुषार्थो द्विविधो भवति—मुख्यो गौणश्च। ईप्सितेन सह अनीप्सितमपि कर्तुरीप्सितं भवति, यथा—'ग्रामं गच्छन् तृणं स्पृशति' इति[२]। आद्यं प्रयोजनं सुखं दुःखहानिश्च, द्वितीयं यागभोजनादिकमिति मन्यते[३]।

---

१. अष्टाध्यायी–१/४/५०।

२. तत्त्वचिन्तामणिः–४।

३. श्रीमद्भागवतम्–१/२/८-१०।

धर्मार्थकामाः पुरुषार्थाः सन्ति; परन्तु गौणप्रयोजनका एव, मुख्यप्रयोजनं जीवस्य तत्त्वजिज्ञासाऽस्ति, अर्थादिकं तु स्वयमेव प्राप्यते।

विनियोगस्तत्त्वजिज्ञासार्थमेव वर्त्तते, न तु भोगाय[१]। अनादिवासनासंयुक्तजीवेभ्यो धर्माविरोधिनोरर्थकामयोरुपदेशोऽनुशासनार्थं वर्तते; परन्तु जीवः प्रवृत्तावेव आत्मानं व्यापारयति। यद्यपि प्रवृत्तौ सुखमलब्ध्वा स नामरूपात्मके जगति स्थितिं न लभते, तथापि संस्कारवशात् तत्रैवानन्दतत्त्वमन्विषति[२]। सुखमनुकूलवेदनीयं भवति दुःखञ्च प्रतिकूलवेदनीयम्। एकस्यां दशायामनुकूलवृत्तिश्चेतसोऽपरस्यां दशायां प्रतिकूलवृत्तौ परिवर्तते, एकस्मिन्नेव जने एकदा बुद्ध्या अनुकूलात्मिका वृत्तिः, कालान्तरे तस्मिन् शत्रुबुद्ध्या प्रतिकूलात्मिका सञ्जायत इति सुखदुःखयोः परिभाषा आपेक्षिकी, न तु शुद्धा। अनुकूलवस्तुप्राप्तौ मनसि चित्प्रतिबिम्बपातत्वात् क्षणिकसुखं प्राप्य मनोऽपरस्मिन् वस्तुनि सुखमन्वेषयितुं प्रयतते। कस्मिन्नपि वस्तुनि सुखं नास्ति; अपि तु तदात्मगतं तत्र वस्तुन्यारोप्यते, अत एव शास्त्रं सुखप्राप्तये प्रयत्नकरणस्य निषेधं करोति, भगवद्भक्तौ जीवं प्रवर्तयति[३]। शास्त्रज्ञानस्य मुख्यं फलं परमात्मप्राप्तिः, परमात्मनः स्वरूपज्ञानम्, न त्वर्थकामयोरवाप्तिः।

अद्वैतवेदान्तिनां मते कर्मणः प्रयोजनं चित्तशुद्धिरेव, न तु साक्षाद् ब्रह्मविद्यायां तस्योपयोगः[४]। अतः पुरुषार्थानां पुरुषार्थत्वं विद्यत एव। ब्रह्मविद्यार्थमेव वेदान्तशास्त्रस्योपक्रमः—'ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसार-बीजाविद्यानर्थनिबर्हणात्'[५]।

अज्ञानं बन्धस्य कारणमिति वचनाद् इमे जीवाः स्वाज्ञानवशाद् बन्धमनुभवन्ति। स बन्धो ज्ञानेन निवर्तते। तज्ज्ञानमात्मज्ञानमेवास्ति। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'[६], 'ज्ञाने तु तदज्ञानं येषां

---

१. श्रीमद्भागवते–१/५/१४-१५।
२. तत्रैव–१/५/१८।
३. ब्रह्मसूत्रम्, शां.भा., कौस्तुभप्रभाभाष्यम्-३/४/१/२०।
४. वेदान्तसारः (अनुबन्धचतुष्टयम्)।
५. शाङ्करभाष्ये।
६. ईशावास्योपनिषद्–११।

नाशितमात्मनः'[१], 'ज्ञानं मोक्षैककारणम्', 'ज्ञात्वा देवं सर्वपाशापहानिः'[२], 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति'[३], 'ज्ञात्वा तयैव मनसा हृदा च भूयो न मृत्युमुपयाति विद्वान्' इत्यादिषु श्रुतिस्मृतिषु स्पष्टमेव ज्ञानान् मोक्ष इत्युच्यते।



---

१. भगवद्गीता–५/१६।

२. श्वेताश्वतरोपनिषद्-१/११।

३. तदेव–४/१४।

# ध्वनेः काव्यात्मता

**आचार्यश्रीरमाशङ्करमिश्रः**
साहित्यसंस्कृतिसङ्कायाध्यक्षचरः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणस्याम्



**पूर्वालोकः**

विदग्धजनवैदग्धीविजृम्भितवचनव्यवहारवीथी न वीक्षते शब्दार्थमात्रा-वबोधनमहिमानमेव, प्रत्युत भावात्मकप्रवृत्तिप्रवाहमेव स्वीकरोति[१]। भावात्मकप्रवृत्तिश्चेयं शब्दार्थगता भावात्मिका व्यञ्जनैव, इयमेव काव्ये शब्दार्थौ गौणीकृत्य अभिधालक्षणातात्पर्यानवगमनीयं व्यङ्ग्यार्थं व्यनक्ति[२]। व्यङ्ग्यार्थ एव च प्रतीयमानार्थ इत्युच्यते, यो हि वनितानां मुख-नयननासाद्यवयवातिरिक्तम् अङ्गगतं लावण्यतत्त्वमिव प्रसिद्धशब्दार्थाङ्गातिरिक्तं किमप्यपूर्वमेव वस्तुतत्त्वमिति ध्वनिकृत्[३]। अयमेव प्रतीयमानार्थो ध्वन्यमानत्वाद् (अवाच्यत्वाद् अलक्ष्यत्वाच्च) एव ध्वनिरिति सार्थकं नाम वहति।

---

१. (क) प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यद् 'अभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते, न साक्षाच्छब्दवाच्यत्वेन'। (ध्व., पृ. ५७६)

(ख) शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्'॥ (ध्व. १.७)

2. Many arrangements of words evoke attitudes without any refer ences required enroute. The operate like musical phrases. But usually references are involked as conditions for, or stages in, the ensuing development of attitudes, yet it is still the sttitudes. not the refercenes, which are important, Their sole function is to bring adeout and support the attitudes which are the further respense.

(I.A. Richards : Prin. oflit. Cro. Ch.)

३. 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति...विभाति लावण्यमिवाङ्गनानाम्'।

ध्वनिशब्दोऽयं व्याकरणार्णवाल्लब्धः साहित्यानुशीलनशीलैः। ध्वनिश्च त्रिविधो वस्तुरूपोऽलङ्काररूपो रसादिरूपश्चेति। त्रिविधोऽप्ययं ध्वनिः काव्यस्यात्मेति ध्वनिवादिनः।

प्रतीयमानार्थो हि नाभिधाशक्त्याभिधीयते, न लक्षणाशक्त्या लक्ष्यते, न वा तात्पर्यशक्त्या बोधयितुं शक्यते। अत एव साहित्यशास्त्रिभिः प्रतीयमानार्थध्वननाय 'व्यञ्जना'-शक्तिः स्वीकृता, या हि शब्दार्थौ न्यक्कृत्य लोकोत्तरचमत्कारकारिणामन्यार्थानां प्रसवं निर्बाधं तनोति[१]। यथा दीपकेन तिमिरततिविलीनाः पदार्थाः झटित्येव प्रतिभान्ति चर्मचक्षुषां समक्षम्, तथैव व्यञ्जनावृत्त्याऽपि व्यक्ता अभिधालक्षणाजवनिकान्तस्तिरोहिताश्चारुत्वातिशयझङ्कृता अन्यार्था अपि प्रतिभान्ति लोकोत्तरप्रतिभाजुषां सहृदयानां हृदयलोचनपथेषु।

### (क) रसध्वनेरेव ध्वनित्वम् आत्मत्वञ्च

संस्कृतकाव्यशास्त्रिभिः प्रत्यक्षमप्रत्यक्षञ्च कृतं रसस्यैव व्यापकं गरिमाणमालक्ष्य ध्वनिवादिभिः काव्यशरीरस्य आत्मत्वेन ध्वनिं मन्यमानैरपि रसध्वनिरेव प्राधान्येन आत्मा घोषितः, वस्त्वलङ्कारध्वनी तु रसस्यैकोपस्कारकीकृतौ। भरतेन सर्वतः प्राग् रसस्य काव्येऽनिवार्यमवस्थानं सूचितम्[२]। भामहस्तु भरतप्रतिपादितं रसमाहात्म्यं दृश्यकाव्यमात्रोपयोगि स्वीकृत्य श्रव्यकाव्ये तस्य तादृशं गौरवम् आत्मत्वञ्च अवर्णयित्वा अलङ्कारमेवाङ्गिनं स्वीचकार, रसञ्च अलङ्कारत्वेनैव निबबन्ध। तथा च 'रसवत्'-प्रख्येऽलङ्कार एव रसप्रवणता समुद्घोषिता तेन[३]।

भामहापेक्षया दण्डी रसस्य महत्त्वं विशेषतः स्वीकृतवान्। तथा हि अलङ्काराद् उच्चतरे काव्यधर्मे माधुर्यगुणेऽपि रसस्तेन समावेशितः, रसवदलङ्कारे तत्तद्भावानां रसीभवनसङ्केतोऽपि स्थिरीकृताः, भरतस्य अष्टौ रसास्तद्भावाश्चापि

---

१. तच्छक्तित्रयोपजनितार्थावगममूल-जात-तत्प्रतिभास-पवित्रित-प्रतिपत्तृप्रतिभा-सहायार्थद्योतन-शक्तिर्ध्वननव्यापारः, स च प्रागवृत्तं व्यापारत्रयं न्यक्कुर्वन् प्रधानभूतः काव्यात्मा।
(लोचने, पृ. ६०-६१)

२. न हि रसादृते कश्चिदर्थः प्रवर्तते। (ना.शा. ६)

३. काव्यालङ्कारे-३.१, ५-७।

नामभिस्सूचिता इति[१]। हृदयङ्गमा-व्याख्याऽपि दण्डिनं रसस्वीकर्तारं मन्यते[२]; किन्तु गुणालङ्कारापेक्षया गौण एव रसो दण्डिमतः। उद्भटेन अलङ्काराणामेव प्राधान्यमभ्यधायि, केषुचिच्च अलङ्कारेषु रससत्तापि सूचिता। एकेन सन्दिग्धेन उद्भटीयपद्येन सूच्यते यद् 'उद्भट एव सर्वतः प्राग् रसस्य काव्यात्मत्वं समुज्जुघोषेति' डॉ. योकोबी-महोदयः प्राह; किन्तु तदिदं पद्यम्—

'रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः।
कथ्यते तद् रसादीनां काव्यात्मत्वं व्यवस्थितम्'॥

स्यान्नाम जैकोबी-संस्करणे लब्धम्, परं नैतत् समुपलभ्यते निर्णय-सागरस्य बडोदायाश्च संस्करणयोः[३]। समुपलभ्यते चैतद् उद्धृतं प्रतीहारेन्दुराजीय-लघुवृत्तौ काव्यलिङ्गव्याख्याने 'तदाहु'रित्युपक्रम्य[४] प्रतीहारेन्दुराजोऽपि रसं काव्यात्मत्वेन व्याचख्यौ, शब्दार्थभूतं काव्यं शब्दार्थगतान् गुणालङ्काराँश्च शरीरत्वेन विवृतवान्[५]।

वामनो हि कान्तिनामके गुणे रससमावेशं कुर्वन् गुणाँश्च काव्यस्य नित्यधर्मत्वेन विवृण्वन् गुणाङ्गभूतस्य रसस्य यथाकथञ्चिन् नित्यत्वं व्यवस्थापितवान्[६]। कुन्तकाचार्यो वक्रोक्तिं काव्यजीवितं स्वीकुर्वाणोऽपि 'रसवद् अलङ्कारतां नार्हती'ति निर्वक्ति। तथा च रसानामलङ्कार्यत्वमङ्गित्वञ्च युगपदेव स वक्ति[७]। वैदग्धीभङ्गीभणितिरूपाणां वक्रतानां निर्वचने रसवक्रताऽपि कुन्तकेन सानुरागं निरुक्ता, गौणस्यापि च रसस्य महत्ता वितता[८]। आचार्यरुद्रटो

---

१. मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः। (काव्यादर्शे-१/५१)
'रसवद् रसपेशलम्'। (काव्यादर्शे-२/२७५)

२. हृदयङ्गमा-टीकायाम्, पृ. १६७।

३. De. Sanskrit Poeties, Vol II, P. 141-2.

४. का. सा. सं., लघुवृत्तौ, पृ. ४१५।

५. 'न खलु काव्यस्य रसानां च अलङ्कार्यालङ्कारभावः किन्त्वात्मशरीरभावः। रसा हि काव्यस्यात्मत्वेन अवस्थिताः, शब्दार्थौ च शरीररूपतया'। (तत्रैव, पृ. ४१३-१४)

६. दीप्तरसत्वं कान्तिः। (का.सू.वृ. ३.२.१५)

७. अलङ्कारो न रसवत्। (व.जी., पृ. ३३८, विश्वे.)

८. यत्राङ्गि-रसनिस्यन्द-निकषः कोऽपि लक्ष्यते।
पूर्वोत्तरैरसम्पाद्यः साङ्गादेः कापि वक्रता॥ (व.जी. ४/१०-११)

रसमयकाव्यानां तत्प्रणेतॄणां च प्रशंसनं विदधानो हि काव्यालङ्कारस्य द्वादशेऽध्याये भरतोक्तैरष्टरसैः सह स्वोत्प्रेक्षितं शान्त-प्रेयोनामकमलङ्कारद्वयं संयोज्य दश रसान् विवृतवान्[१]। शृङ्गाररसस्य च रुद्रटेन विशेषतः प्रशंसनं कृतम्[२], यदालम्बनेन भोज-रूपगोस्वामिप्रभृतिभिस्तस्य शृङ्गाररसस्य समुत्कर्षणं रसराजत्वञ्च वर्णितमिति तर्कः। राजशेखरोऽपि शब्दार्थौ काव्यस्य शरीरम्, रसञ्च काव्यात्मानं स्पष्टतया स्वीकरोति[३]।

किन्तु रसस्य काव्यशरीरे समुचितमासनं ध्वनिवादिभिरेव निर्णीतम्। तथा च यद्यपि ध्वनेस्त्रिविधत्वं ध्वनिकृता आनन्दवर्धनेन प्रतिपादितम्, तथापि रसस्यैव तेन पदे पदे प्राधान्यं सङ्केतितम्, तद्यथा—

(क) प्रतीयमानस्य च अन्यभेददर्शनेऽपि रसभावमुखेनैव उपलक्षणम्, प्राधान्यात्[४]।

(ख) 'व्यङ्ग्य-व्यञ्जक-भावेऽस्मिन् विविधे सम्भवत्यपि।
रसादिमय एकस्मिन् कविः स्यादवधानवान्[५]॥

अत्र 'क' भागं विवृण्वन् अभिनवगुप्तोऽपि रसध्वनिमेव समर्थयते काव्यात्मानम्—

'ननु समर्थयते ध्वनिं काव्यात्मानम्—तत्र त्रिभेदं प्रतिपादितम्, न तु रसैकरूपम्, अनेन चेतिहासेन रसस्यैवात्मभूतत्वमुक्तं भवतीत्याशङ्क्याभ्युपगमेनैवोत्तरमाह—'प्रतीयमानस्य चेति'। अन्यो भेदो वस्त्वलङ्कारात्मा'[६]।

आनन्दवर्धनो हि गुणान् अलङ्कारान् रीतिरूपान् सङ्घटनभेदाँश्च काव्यधर्मान् रसानुगुण्येन प्रयोजयितुं निर्दिशति, रसञ्च अङ्गित्वेनैव निबद्धुमादिशति कवीन्द्रानिति ध्वन्यालोकस्य प्रतिपदं वक्ति। रसध्वनि-

---

१. काव्या. १२/३।
२. तत्रैव, १२/८,९,१७,४१।
३. शब्दार्थौ ते शरीरं...रस आत्मा। (का.मी., पृ. ४४)
४. ध्व., पृ. ९१।
५. ध्व. ४/५।
६. लोचने, पृ. ९।

विनिवेशनसावधानमानसा हि कवीन्द्राः काव्यगतान् वर्णान् पदानि वाक्यानि रचनाः प्रबन्धान् काव्यानि मुक्तकानि महाकाव्यानि च सरसीकुर्वन्तोऽपूर्वमेव चारुत्वविजृम्भितं चमत्कारसारं जनयन्ति[१]।

मनीषि-मण्डल-मौलि-मुकुटमणिरभिनवगुप्तपादस्तु बहुत्र रसध्वनेरेव प्राधान्येन काव्यात्मत्वं ध्वनिकृत्समर्थितमिति स्वीयलोचने साधितवान्[२]। त्रिविधेऽस्मिन् ध्वनौ वस्त्वलङ्काररूपौ ध्वनिभेदौ लौकिकौ, रसादिरूपो ध्वनिभेदस्तृतीयस्तु अलौकिकः काव्यव्यापारैकगोचरश्च, रसध्वनिरेव मुख्यतया ध्वनित्वव्यपदेशमर्हति, स एव च काव्यस्यात्मेति लोचनकारः[३]। वस्त्वलङ्काराख्यौ ध्वनिभेदौ तु रसस्यैव उपस्कारकौ, रसध्वनिपर्यवसितौ च मन्तव्यौ। अतश्च तृतीयो ध्वनिप्रकारो रसध्वनिरेव काव्यात्मा। वस्त्वलङ्कारयोः काव्यात्मत्वं तु वाच्यार्थापेक्षया उत्कृष्टतरत्वप्रतिपादनायैव निरुक्तम्। अत एव ध्वनिः काव्यस्यात्मेति सङ्गच्छते[४]।

भट्टनायकस्तावद् व्यञ्जनाव्यापारस्य, ध्वनिभेदस्य, रसस्य ध्वनित्व-प्रतिपादनस्य, वस्त्वलङ्कारयोर्ध्वनित्वस्य ध्वनेः काव्यात्मत्वस्य च प्रबलतमो विरोधीति लोचनोद्धृतैरेव तद्वचनैर्ज्ञायते, तथापि वस्त्वलङ्काराख्यौ ध्वनिभेदौ स

---

१. 'रसाभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्'॥ (ध्व., पृ. २०८)
'रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स कविभ्यो न रोचते॥ (स.क.भ., पृ. ७९)
'अयमेव हि महाकवेर्मुख्यो व्यापारो यद् रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानाञ्चोपनिबन्धनम्'॥ (ध्व., पृ. ४४२)

२. रसचर्वणात्मनः प्राधान्यं दर्शयन् रसध्वनेरेव सर्वत्र मुख्यभूतमात्मत्वमिति दर्शयति। (लोचने, पृ. ४०)

३. 'तत्र प्रतीयमानस्य तावद् द्वौ भेदौ, लौकिकः काव्यव्यापारैकगोचरश्च। यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो, न लौकिकव्यवहारपतितः...आनन्दचर्वणाव्यापाररसनीयरूपो रसः, काव्यव्यापारैकगोचरो रसध्वनिरिति, स च ध्वनिरेवेति, स एव मुख्यतयाऽऽत्मेति'। (लोचने, पृ. ५०)

४. तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते। इति वाच्यादुत्कृष्टौ तौ इत्यभिप्रायेण 'ध्वनिः काव्यस्यात्मे'ति सामान्येनोक्तम्। (लो., पृ. ८६)

निराकरोति मुख्यतया, रसन्तु सोऽपि काव्यात्मत्वेन स्वीकरोत्येव निर्विवादम्[१]। रसस्य ध्वनित्वकथनमेव, ध्वनेश्च काव्यात्मत्वमेव च भट्टनायकहृदयदर्पणस्य मलीमसमलिनं कलङ्कबिन्दूपमं न्यक्कारनिदानभाजनमिति प्रतीयते। तथा च भट्टनायको न रसविरोधी, अपि तु रसध्वनित्वनिराकर्तेति भावः[२]। रसचर्वणां काव्यजीवितभूतां स्वीकुर्वन् भट्टनायको रसध्वनिमपि मन्दमन्दं समभ्युपगच्छतीवेति लोचनकारः। इत्थञ्च लोचनकारस्तावत् स्वयन्तु मन्यत एव रसध्वनेः काव्यात्मत्वम्, ध्वनिकृद्-भट्टनायकाभ्यामपि मीमांसितं 'रसध्वनिरेव काव्यस्यात्मेति' वादं व्यवातिष्ठिपत्[३]।

अभिनवभारत्यामपि अभिनवेन व्यञ्जनासाध्यामेव रसाभिव्यक्तिं व्याख्याय मन्ये रसध्वनेः काव्यात्मत्वं प्रतिष्ठापितम्। अभिनवस्य तामिमां रसध्वनिप्रतिपादनप्रणाल्यां रस-प्राधान्य-वीथीमाश्रित्य विश्वनाथादिभिः परवर्तिभिराचार्यैः 'रस एव काव्यस्यात्मे'ति वादः प्रवर्तनीयतां प्रापित इति रसवादो ध्वनिवादस्य, तत्रापि च लोचनकारीयरसध्वनित्वव्याख्यानस्य मकरन्दकणायमान एवेति तत्त्वोन्नयः। महाकविभिरपि रसध्वनिमहिमा पालितः समर्थितश्च[४]।

---

१. 'यदूचे भट्टनायकेन' अंशत्वं न रूपता इति, तद् वस्त्वलङ्कारध्वन्योरेव यदि नाम उपालम्भः, रसध्वनिस्तु तेनैवात्मतयाऽङ्गीकृतः। रसचर्वणात्मनस्तृतीयांशस्य अभिधाभावनांशद्वयोत्तीर्णत्वेन निर्णयात्, वस्त्वलङ्कारध्वन्योः रसध्वनिपर्यन्तत्वमेवेति वयमेव वक्ष्यामः। (लो., पृ. ५१)

२. भट्टनायकस्य, लोचने पृ. ४०, द्रष्टव्यम्—भारतीय काव्यशास्त्र के प्रतिनिधि सिद्धान्त (प्रो. राजवंश सहाय 'हीरा'), पृ. १३२।

३. (अ) रसध्वनेर्जीवितत्वं सूचयति। (लो., पृ. ४५)

(ब) तथा हि अभिधा-भावना-रसचर्वणात्मकेऽपि त्र्यंशे काव्ये रसचर्वणा तावज्जीवितभूतेति भवतोऽप्यविवादोऽस्ति। (पृ. ४०)

(स) तर्हि...ध्वननव्यापारः किं न सह्यते। किञ्च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सुष्ठुतरां ध्वनिध्वंसोऽयम्।...अथ रसस्यैव इयता प्राधान्यमुक्तम्, तत् को न सहते। (लो., पृ. ६९)

४. रसध्वनेरध्वनि ये चरन्ति सङ्क्रान्त-वक्रोक्ति-रहस्य-मुद्राः।
तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम्।। (विक्रमा. च. १.२२)
यथा च विज्जिकायाः—'कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम्।..ऽयमञ्जलिः'।
(सं.सा.इ.-ब.उ., पृ. ३४४)

रसध्वनेरेव काव्यात्मत्वं परवर्तिभिराचार्यैः साधु समर्थितम्[1]। मम्मटेन तस्यैव उत्तमकाव्यत्वम्, जगन्नाथेन च उत्तमोत्तमकाव्यत्वं निरूपितम्। अद्यावधि समग्रभाषीय-काव्यशास्त्रीय-वाक्सम्पद् रसध्वनिमेव ध्वनिं काव्यात्मानं च मुक्तकण्ठं विकचलोचनञ्च समालोचयतीति दिक्।

**(ख) ध्वनौ रसपर्यवसानम्**

आनन्दवर्धनेन हि विवक्षितान्यपरवाच्यध्वनिविवेचनप्रसङ्गे असंलक्ष्यक्रमध्वनिनिरूपणं कृतम्। न हि रस एव काव्यस्यात्मा, अपि तु रसध्वनिरेवेति ध्वनिवादिनः। न हि रसस्य स्वतन्त्रा स्थितिरपि तु ध्वन्यमानो रस एव रसः। तथा च विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति भरतीय-रससूत्रे निष्पत्तिशब्दोऽभिव्यक्तिपर एव गृह्यते, तस्माद् रसोऽभिव्यज्यते=ध्वन्यते सर्वथा। अत एव रसध्वनेः काव्यात्मत्वं सङ्गतं भवति[2]। रसस्य ध्वन्यमानतामनवेक्ष्यैव 'रसः काव्यात्मेति' रसवादिनो विजल्पन्ति। ध्वनिसिद्धान्ते रस एव सर्वस्वभूतः काव्यचमत्कारैकप्राणभूतो मतः। रसमनुसृत्यैव रसानुरोधपारवश्येनैव च काव्यधर्माणाम् अलङ्काररीतिवृत्ति-गुणादीनां विनिवेशनं रसपेशलैः कविभिर्विधेयमिति ध्वनिकृद्वीथी। 'कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्' इति ध्वनिकृद्वाक्यमेव ध्वनौ रसमहत्त्वं परिगणयति[3]। तथा च स आह—

'रसादिमय एकस्मिन् कविः स्यादवधानवान्'[4]। इति।

इदमत्रावधेयं यद् रसवादिनो रसरहितेषु स्थलेषु उत्तमकाव्यत्वं न मन्यन्ते; किन्तु ध्वनिवादिनो नीरसेष्वपि वस्तुमात्रध्वनिस्थलेषु अलङ्कारध्वनिस्थलेषु चापि चमत्कारातिशयवत्त्वात् 'सहृदयहृदयाह्लादकारि-शब्दार्थमयत्वमेव हि काव्यलक्षणम्'[5] इति पक्षमभ्युपगम्य

---

१. रसध्वनिर्न यत्रास्ति तत्र वन्ध्यं विभूषणम्।
मृताया मृगशावाक्ष्याः किं फलं हारसम्पदा।। (प्रकीर्णम्) (द्रष्ट. ध्व. ४/१-५ वृत्तौ)

२. यस्तु...रसः, स काव्यव्यापारैकगोचरो रसध्वनिरिति, स च ध्वनिरेवेति, स एव मुख्यतयाऽऽत्मेति। (लो., पृ. ५०)
'स यत्र प्राधान्येन अवतिष्ठते, तत्र ध्वनिरेव'। (अलङ्कारकौस्तुभे, विश्वे. पृ. ४१६)

३. ध्व., पृ ३६८; ४. तत्रैव-४/५।

५. तत्रैव, पृ. २३।

काव्यत्वमङ्गीकुर्वन्त्येव। तस्माद् व्याप्योऽयं रससीमा, ध्वनिसीमा तु आवर्णात् पद-वाक्य-मुक्तक-प्रबन्ध-रचना-महाकाव्यानि यावद् व्यापृतसर्वातिशायिमहिमा सर्वहृद्यतां यातः साम्प्रतम्[१]। तस्माद् रसवादिनां नयेऽकाव्यभूतानि वस्तुमात्रालङ्कारध्वनिस्थलानि अकाव्यत्वकारणात् परिरक्षितानि काव्यकोटिमापादितानि च ध्वनिनयेन इति सत्यमेव विश्वजनीनोऽयं काव्यसार्वभौमो ध्वनिसिद्धान्तो नाम।

## २. ध्वनौ अलङ्कारपर्यवसानम्

यद्यपि भामह-दण्डि-रुद्रटोद्भटादिभिरलङ्कारवादिभिः प्रतीयमानार्थरूपो ध्वनिसारो रस-सारश्च विदितावास्तामेव, तथापि परिस्फुट-परिबोधाभावे किं ते ब्रूयुर्वराका ध्वनितत्त्वं नाम! अत एव काव्यात्मत्वं प्रापितोऽयं रसध्वनिरालङ्कारिकैरलङ्कारकोटौ परिगण्यमान एवासीत्। तथा च अप्रस्तुत-प्रशंसा-समासोक्त्याक्षेप-पर्यायोक्त-प्रभृतिष्वलङ्कारेषु अन्तःपातितमलङ्कारवादिभिः; किन्तु ध्वन्यालोक-प्रथम-द्वितीय-तृतीयोद्योतेषु बहुधाऽलङ्काराणां ध्वन्यमानत्वं प्रतिपाद्य समासोक्त्याक्षेप-सङ्कर-पर्यायोक्तादीनां ध्वन्यङ्गत्वं निरूपितम्[२]। अलङ्काराणामलङ्कारत्वं तदैव स्थास्यति यदा तेऽलङ्कारा रसभावादिविषय-विवक्षापारतन्त्र्येण विनिवेशिता भविष्यन्तीति सर्वथा रसानुगुणैरेवा-लङ्कारैर्निवेशितैर्भाव्यम्[३]।

न च रसाननुगुणा प्रबन्धरचना रोचते ध्वनिरुचिशुचिमानसेभ्यः कविभ्यः सहृदयेभ्यो वा। अतश्च रसप्रतिकूलामलङ्कारयोजनां न काव्ये निबध्नीयात् सुकविः। इत्थम् अलङ्काराणाम् (व्यङ्ग्यानाम्) अलङ्कारध्वनौ परिगणनं केषाञ्चिद् (वाच्यानां) ध्वन्यङ्गत्वं रसध्वन्यनुकूलत्वञ्च निर्देशितं ध्वनिवादिभिरित्यलङ्कारा ध्वनावेव पर्यवसीयन्त इत्यलम्[४]।

---

१. तथा हि व्यङ्ग्यमुखप्रेक्षितया विना नेदं वाक्यं वर्णाः पदभागः सङ्घटना महाकाव्यमिति स्वरूपत एव व्यञ्जकानां भेदः। (लो., पृ. ३१२)

२. ध्व., पृ. १०७-३७।

३. ध्व., पृ. ५२५-३३।
एवम् उपनिबध्यमानोऽलङ्कारो रसाभिव्यक्तिहेतुः कवेर्भवति।। (ध्व., पृ. २४८)

४. 'मुख्या महाकवि-गिरामलङ्कृति-भृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्'।। (ध्व., पृ. २४८)

### ३. ध्वनौ वृत्तिपर्यवसानम् (गुणानामन्तर्भावश्च)

वृत्तयो द्विविधाः—शब्दतत्त्वाश्रिता अर्थतत्त्वाश्रिताश्चेति[१]। शब्दतत्त्वाश्रिता वृत्तयः काव्यवृत्तय इत्युच्यन्ते, यासु अनुप्रासजातीनां नागरिकोपनागरिकाग्राम्याणां परुषा-मधुरा-कोमलाऽपरनाम्नीनामेव ग्रहणमिष्यते। एता हि शब्दवृत्तयोऽनुप्रासभेदा रसोत्कर्षोपकारकत्वेन सम्मता इति। अनुप्रासाद्यलङ्कारा अपि व्यङ्ग्याश्चेद् अलङ्कारध्वनित्वम्, वाच्याश्चेद् रसानुगुणा रसोत्कर्षकाश्चेति पूर्वमुक्तमेव।

इत्थमेव अर्थतत्त्वाश्रिता वृत्तयो नाट्यवृत्तयो नाट्यमातृत्वेन समादृताः। ताश्च कैशिकीसात्त्वत्यारभटीभारतीप्रख्या वृत्तयो रसविशेषोत्कर्षणायैव नाट्ये प्रयुज्येरन्निति भरतः प्राह। नाट्यप्रकर्षहेतूनां नाट्यवृत्तीनां ध्रुवमेव रसध्वन्यङ्गता सिद्ध्यति।

एवमेव काव्यवृत्तयो गुणाश्चाभिन्ना एव। गुणानाञ्च रसैर्नित्यः शाश्वतिकश्च सम्बन्धोऽवसेयः। अलङ्काराः काव्यशरीरधर्माः काव्यबाह्यशोभाऽऽधायका मता अनित्याश्च। गुणास्तावत् काव्यात्मनो (रसध्वनेः) धर्मा काव्यान्तरुत्कर्षका नित्याश्चेति ध्वनिकारसंसत् प्राह[२]।

सर्वथा सर्वाश्च वृत्तयोऽथ तदभिन्ना गुणाश्च रसादितात्पर्यपर्यालोचनया निवेशिताः काव्यस्य किमपि कामनीयकं पुष्णन्त्येवैति[३] वृत्तिगुणयोर्ध्वनि-पर्यवसितत्वं निष्पद्यत एव।

### ४. ध्वनौ रीतिपर्यवसानम्

वामनेन प्रतिपादिता गुणविशेषाश्रिता रीतयो भवन्ति तिस्रो वैदर्भी-गौडी-पाञ्चाली-भेदैः। ओजोगुणाश्रिता रीतिर्गौडी, प्रसादगुणगुम्फिता रीतिर्वैदर्भी,

---

१. शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः।
वृत्तयोऽपि प्रकाशने ज्ञातेऽस्मिन् काव्यलक्षणे।। (ध्व., ३।४७)

२. का.प्र., पृ. ४०४, का.प्र., ८/६७, ध्व. २/६।

३. रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान् यस्ता एव वृत्तयो द्विविधाः स्थिताः।। (ध्व. ३/३३)
वृत्तयो हि रसादितात्पर्येण सन्निवेशिताः कामपि नाट्यस्य च च्छायामावहन्ति।
(ध्व., पृ. ४४३)

माधुर्यगुणानुस्यूता रीतिः पाञ्चालीति मम्मटादय ऊचुः। यथा अलङ्काराः काव्यस्य अनित्या धर्मास्तथैव नेमे गुणाः। गुणा हि काव्यस्य सुस्थिरा धर्मा रसोत्कर्षका मताः। अत एव गुणाश्रिता रीतयोऽपि रसादिध्वनिसमुत्कर्षणायैव कल्पन्त इति रुद्रटादिभी रसविशेषालम्बिता रीतिविशेषा विवृताः[१]।

इमा एव वामनोक्ता रीतयो ध्वनिकृता असमासामध्यमसमासादीर्घ-समासाख्याः सङ्घटना इति विवेचितम्। गुणाश्रिताश्चैताः सङ्घटना नूनमेव रसानुगुण्येनैव योजिताः किञ्चनानिर्वचनीयं रामणीयकं वितन्वन्ति काव्योद्याने। तथा च काव्यशरीरसङ्घटनात्मिकाः सङ्घटनारूपा रीतयो रसादिध्वनेर्नित्योपकारिण्य इति ध्वनिव्यूढ एव रीतिग्रामोऽध्यवसेय इत्यानन्दवर्धनः[२]।

## ५. ध्वनौ वक्रोक्तिपर्यवसानम्

वक्रोक्तिप्रस्थानप्रस्थापकः कुन्तको विचित्रां विशिष्टां वाऽभिधाशक्तिमेव स्वीकृत्य, अभिधयैव लक्ष्यान् व्यङ्ग्यान् वाच्याँश्चाप्यर्थान् प्रकटनीयान् मनुते। विचित्रा अभिधा हि लक्षणा-व्यञ्जना-गम्यानर्थान् प्रस्फोटयन्ती वैदग्ध्य-भङ्गीभणितिपदवीमारूढा वक्रोक्तित्वं व्रजति, सैव च काव्यात्मा। व्यञ्जना-व्यङ्ग्यव्यञ्जकानां स्थाने अभिधावाच्यवाचकानामेव प्रयोगः कुन्तकेन समाचरितः, सर्वाण्यपि च ध्वन्युपभेदभेदोदाहरणानि वक्रोक्तिजन्यविविध-वक्रताभेदोदाहरणेषु परिणमितानि। तथा च ध्वनिस्थान एव वक्रोक्तिमार्गो ध्वनिविरोधनाय तेन प्रवर्तित इति प्रतीयते, तथापि विचित्रमार्गादि-विवेचनस्थलेषु स प्रतीयमानव्यङ्ग्यादिशब्दानां प्रयोगं विधत्ते[३]। बहवश्चालङ्कारा अपि तेन सुस्पष्टमेव प्रतीयमानात्मकतया विवेचिताः।

---

१. 'नैव वृत्तिरीतीनां गुणव्यतिरिक्तत्वं सिद्धम्।...तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः'। (लोचने, पृ. १९)

केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः। एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भी-गौडीया-पाञ्चाल्याख्या रीतय उच्यन्ते। (का.प्र. ९.४, वृत्तौ च)। एतेन रीतयो वृत्त्यात्मिका इत्यर्थः। (तत्रैव)। माणिक्यचन्द्रस्य 'सङ्केते' वैदर्भीपाञ्चाल्यौ प्रेयसि करुणे भयानकाद्भुतयोः। लाटीया गौडीये रौद्रे कुर्याद् यथौचित्यम्'। (रुद्रटस्य का. १५/२०)

२. ध्व., पृ. ३४१।

३. प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते।
वाच्य-वाचक-वृत्तिभ्यामतिरिक्तस्य कस्यचित्'॥ (व.जी. १.४०)

कुन्तकेन पदपूर्वार्धवक्रतायाम् अर्थान्तरसङ्क्रमितो ध्वनिर्व्याख्यातो रूढिवैचित्र्यवक्रतारूपेण प्रभेदविशेषेण, पदपूर्वार्धवक्रताया एव उपचारवक्रताख्ये प्रभेदेऽत्यन्ततिरस्कृतवाच्यो ध्वनिः, पर्यायवक्रतायां पर्यायध्वनिः, वृत्तिवैचित्र्यवक्रतायां समासध्वनिः, निपातवक्रतादौ च निपातादिध्वनिर्विवेचितः परिगणितश्च। एवञ्च व्यञ्जनावृत्त्या अभिव्यक्तः काव्यात्मरूपो ध्वनिः, अभिधावृत्त्या विशिष्टाभिधया वा वाच्यायां वस्तुपरकवक्रतायामन्तर्भावितस्तेन। एवञ्च व्यञ्जनाध्वनिशब्दयोर्नाममात्रं खण्डनं दृश्यते। वस्तुतोऽभिधया वाच्यार्थे बोधितेऽपि विशिष्टया अभिधया विशिष्टार्थवक्रताप्रत्यायनकल्पनायां किं नाम व्यञ्जना-व्यङ्ग्याभ्यास-ऋते वस्त्वन्यत्?

कुन्तकाचार्यस्य वक्रोक्तिप्रस्थापनस्य मूलन्तु भामहदण्डिरुद्रोद्भट-वामनानन्दवर्धनादिप्रतिपादिता वक्रोक्तितत्त्वविवेचनैव। आनन्दवर्धनोत्तरवर्ती हि कुन्तको ध्वन्यालोकाद् वक्रोक्तिमार्गस्य सर्वामपि सरणिमुपजीवितवानिति नामान्तरेण ध्वनेरेव वक्रोक्तिनाम्ना व्यवस्थापनं कुन्तकेन कृतमिति न वक्रोक्तेः किमपि मौलिकं वैशिष्ट्यम्। आनन्दवर्धनेनापि वक्रोक्त्यतिशयोक्त्योरभेदः सर्वालङ्कारबीजत्वञ्चेति प्रत्यपादि[१]। अन्यच्च ध्वनितत्त्वमेव सकलं वक्रतातत्त्वे तेन कुन्तकेन पातितम्। उक्तिवैचित्र्यन्तु ध्वनिकृतापि ध्वनिमार्गे समर्थितम्, मन्ये तदिदमुक्तिवैचित्र्यमेव वक्रोक्तिनिरूपके 'वैदग्ध्य-भङ्गी-भणिति'-शब्दे कुन्तकेन परिणमितमिति[२]।

सन्ति बहवश्शब्दा ध्वनिकृता व्यवहृता ध्वन्यालोके, यान् साक्षात् नामान्तरैश्च समुपादाय वक्रोक्तिप्रासादः कुन्तकेन रचित इति तत्त्वम्। तथा हि वाग्विकल्पानामानन्त्यादिति[३] ध्वनिकृच्छब्द एव 'भङ्गीभणिति'-वैचित्रीं चुम्बति। भणितिवैचित्र्यम्[४], अर्थवैचित्र्यमुक्तिवैचित्र्यञ्चेति[५][६] शब्दा ध्वनिकृता बहुत्र प्रयुक्ताः

१. यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया।...इति सर्वालङ्कारशरीरस्वीकरण-योग्यत्वेन अभेदोपचारात् सैव सर्वालङ्काररूपा। (ध्व. ३/३७ वृत्तौ)

२. किमिदम् उक्तिवैचित्र्यम्? उक्तिर्हि वाच्यविशेषप्रतिपादि वचनम्। तद्वैचित्र्ये कथं न वाच्यवैचित्र्यम्।...तेनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमनिच्छताऽप्यवश्यमेवाभ्युपगन्तव्यम्। (ध्व., पृ. ५८७-९०) 'विचित्रैवाभिधा वक्रोक्तिरित्युच्यते'। (व.जी., पृ. ५१, विश्वे.) 'वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते'। (व.जी. १।१०)

३. वाग्विकल्पानन्त्यात्। (ध्व., पृ. २७)

४-६. ध्व., पृ. ५११।

कुन्तकनिरूपिताया अभिधा-विचित्रतायाः प्रेरणामूलम्। ध्वनिकृतो 'भणिति'-शब्दोऽपि कुन्तकेन समपहृतः। अव्युत्पत्तिकृतान् दोषान् शक्त्या संव्रियमाणान् विवृण्वता ध्वनिकृता नूनमेव संवृतितत्त्वं व्याख्यातमेव[१], यच्च कुन्तकीयायाः संवृतिवक्रताया आधारमेदिनी। कुन्तकेन विशेषतः प्रतिपादितानां लावण्यसौभाग्याभिजात्याख्यगुणानामपि (मूलशब्दानाञ्च) मूलं ध्वन्यालोके प्राप्यमेव।

तथा च ध्वनिविरोधनशीलोऽपि वैचित्र्यलीलोऽयं वक्रोक्तिसिद्धान्तो ध्रुवमेव ध्वनितत्त्वादभिन्नो भिन्नश्च नाम्नैव केवलमिति।

### (६) ध्वनौ औचित्यपर्यवसानम्

ध्वन्यालोके प्रायः प्रतिपृष्ठमुचितौचित्यशब्दौ प्रयुक्तौ वीक्ष्येते, लोचने च रसादिध्वनिप्रभृतिविवरणप्रसङ्गे शब्दाविमौ सादरं परिगृहीतौ। तावेव दर्शं दर्शं लोचनकारस्य साहित्यशास्त्रीयशिष्यः प्रतिभापवित्रितान्तःकरणः क्षेमेन्द्र औचित्यं काव्यस्य आत्मत्वेन व्याचख्यौ। यद्यपि भरतादारभ्य क्षेमेन्द्रं यावत् काव्यशास्त्रिभिर्विविधकाव्यधर्ममर्म्मप्रकाशनकाले शब्दाविमौ प्रयुक्तौ, तथापि मनोऽभिनिवेशतस्तु आनन्दवर्धनाभिनवगुप्ताभ्यामेव रसगुणालङ्कारसङ्घटनावृत्ति-ध्वनिप्रभेदव्याख्यानावसरप्रसरेषु उचितशब्द औचित्यशब्दश्च भृशं ससम्मानञ्च व्यवहृतौ[२]।

काव्यस्य आत्मा ध्वनिः, ध्वनिरपि त्रिविधः, तथापि च रसादिध्वनिरेव वस्तुतः काव्यस्यात्मा, रसस्यापि परमोपनिषद्भूतं तत्त्वमौचित्यं नामेति ध्वनिकृत् सुस्पष्टमेव रसाभिनिवेशेन प्रसङ्गेनौचित्याद् दूरीचिकीर्षुः कवीन्द्रान् प्रति औचित्यपालनायैव विरौति—

'अनौचित्याद् ऋते नान्यद् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा[३]।। इति।

---

१. 'संवृत्याऽभिहितो वस्तु यत्रालङ्कार एव वा'। (ध्व., पृ. ५३२)
'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः'। (ध्व., पृ. ३४६)

२. ध्व., वृत्तौ, लोचने च, ६/१४।

३. ध्व., पृ. ३६२।

नियतमेव इयं कारिका औचित्यवादप्रतिष्ठापनस्य प्रेरणासम्पत्। इत्थमेव अलङ्कारौचित्यं रसौचित्यं गुणौचित्यं सङ्घटनौचित्यं विषयौचित्यं वृत्त्यौचित्यम् इत्यादिविधौचित्यानां प्रतिपादनं ध्वनिकृत्कृतमेव विलोक्य औचित्यवादोऽनुप्राणितीकृतो लब्धोदयश्च[१]। किं बहुना, वाच्यवाचक-भेदानामौचित्यमपि ध्वनिकृता विततम्[२], यदुपजीव्य विविधा औचित्यभेदा व्यवस्थापिताः क्षेमेन्द्रेण। देशकालावस्थाद्यौचित्यस्यापि सङ्कीर्तनं ध्वनिकृता कृतम्[३], क्षेमेन्द्रेण च समुपात्तम्।

इत्थञ्च सम्पूर्णश्चायं भेदोपभेद-विवृति-विकचायमानोऽपि औचित्यवादो ध्वनिकृदभिनवगुप्तयोर्वाग्विकल्पकल्पित एवेति ध्वनौ तदन्तर्भावः सुष्ठु विभावनीय इति।

**(७) ध्वनौ चमत्कारपर्यवसानम्**

विश्वेश्वरप्रभाकरादिभिः प्रवर्तितोऽयं नूतनश्चमत्काराख्यः काव्यात्माऽपि ध्वन्यालोकलोचनयोरनुशीलनफलरस एवेति मन्तव्यः। आनन्दवर्धनेन लोचनकृता च पदे पदे व्यङ्ग्यार्थबोधनस्थले शब्दार्थवैचित्र्यनिरूपणस्थले, वस्त्वलङ्काररसादिध्वनिविवेचनस्थले च चमत्कारशब्दो बहुशः प्रयुक्तः[४]। द्वितीयोद्द्योते च ध्वनिकृता चेतश्चमत्कृतिविधायी काव्यार्थविवेको मतः। चमत्कृतिश्च काव्यास्वादापरपर्याया। ध्वन्यालोकव्याख्यात्राऽभिनवगुप्तेन तु विशेषतो ध्वनित्रयविवेचने रसस्यालौकिकत्वविवरणे च चमत्कारशब्दो बहुधा विततः। ध्वन्यालोके लोचने च बहुत्र विततः 'चारुत्व'शब्दोऽपि चमत्कार-नेदीयानेव, यो हि सौन्दर्यरसयोस्सामञ्जस्यं पश्यति[५]।

कविराजविश्वनाथस्य प्रपितामहो नारायणोऽपि चमत्कारशब्दं प्रयुङ्क्ते रससारत्वेन, अद्भुतरसाभिन्नत्वेन च[६]। तेन विश्वनाथेनापि

---

१. विशेषतया द्रष्ट. ध्व. ३/६-८९।

२. वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः।। (ध्व. ३.३२)

३. द्रष्टव्यम् ४।७-९, ध्व. वृत्तौ च।

४. आस्वादयितॄणां यः चमत्काराविघातस्तदेव रससर्वस्वम्। (लो., पृ. ३४६)

५. द्रष्टव्यम्, अत्रैव चमत्कारनिरूपणे। (ध्व., पृ. १४४,१७८ निर्णय. सा. सं.)

६. रसे सारश्चमत्कारः...तस्माददद्भुतमेवाह कृती नारायणो रसम्। (सा.द. ३, पृ. १०६)

विस्मयापरपर्यायश्चमत्कारोऽङ्गीकृतः। परमाह्लादरूपोऽयं चमत्कारो लोकोत्तरानन्दादभिन्न एवेति पण्डितराजो मनुते। तथा च वाच्यवाचकतत्त्वापेक्षयाऽधिकतरचमत्कारवतां व्यङ्ग्यव्यञ्जकव्यञ्जनानां व्याख्यानमादधान एव ध्वनिसम्प्रदाय एष परिवर्तिनश्चमत्कारवादस्य प्रेरणासोपानसमुल्लासभूः।

इत्थं समासेनैव कृतामिमां सिद्धान्तसन्दोहविवृतिं पश्यन्तो वयं निर्णयामो यद् देवगवीगुम्फिते साहित्यिके शास्त्रीयतत्त्वविवेचने ध्वनितत्त्वं किल सौभाग्यपरिचुम्बितपरिमलविमलपरिचरणचर्चितं विश्वदिगन्तश्रान्तकाव्यशास्त्रीयकीर्तिलतान्तविश्रान्तचमत्कारं नाम, समेषां नव्यानां समुदीयमानतत्त्वातत्त्वविमर्शपरामर्शनोत्कर्षितचेतसां हृदयमन्दिरेषु कृतव्यङ्ग्यार्थकनककलशपीयूषमाधुर्यरससेकं, जगतीतले प्राप्तपरिपाकं, समुदितसमुदीयमानसमुदेष्यमाणसिद्धान्तविशेषसञ्जननकौशलबन्धुरं मधुरमधुरं काव्यकलैकसुन्दरं सहृदयहृदयप्रतिभापवित्रितपीठपरिलसितं काव्यजीवितं वेदितव्यं काव्यपरिशीलनशीलपेशलैरिति[1]। तथा च—

काव्यशास्त्रीयसिद्धान्तसार्थसार्थक्यसान्द्रितः।
ध्वन्यादिवादवैशद्यो निबन्धोऽयं विवेचितः[2]॥

●

---

१. (अ) ध्व., पृ. ५२६।

(ब) सत्यं, न तादृक् काव्यप्रकारोऽस्ति, यत्र रसादीनामप्रतीतिः। (ध्व., पृ. ५२७)

(स) ध्व., पृ. ५२१।

(द) तस्मान्नास्त्येव तद्वस्तु यत् सर्वात्मना रसतात्पर्यवतः कवेस्तदिच्छया तदभिमतरसाङ्गतां न धत्ते, तथोपनिबध्यमानं वा न चारुत्वातिशयं पुष्णाति। सर्वमेतच्च महाकवीनां काव्येषु दृश्यते। (ध्व., पृ. ५३१)

२. स्वप्रणीतम्।

# प्राच्य-पाश्चात्त्यराजनीतिविश्लेषणम्

**डॉ. हेतरामकछवाहः**
अध्यक्षः, प्राचीनराजशास्त्रार्थशास्त्रविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



मानववृत्तीनां संरचनानिर्माणविकासा भौगोलिकवृत्ताश्रिता भवन्ति। एता मानवप्रवृत्तयः समाजनिष्ठनैकविधावश्यकता आविर्भावयन्ति। आभिर्मानव-संस्थानामाहोस्वित् सामाजिकसंस्थानां सृष्टिर्विधीयते। राजनीतिकसंस्थास्वरूपं यत्किञ्चिद् मानवसंस्थाया एव विस्तृतवृत्तमस्ति। यथा यथा मानव उन्नतिमार्गे समारूढस्तदा तदा तदावश्यकता जटिलायमाना अभवन्, तथा अन्यसंस्थानाभिलाषवृद्धिरिव राजनैतिकसंस्थानवृद्ध्याऽऽकाङ्क्षापि मानवं चिन्तनाय प्रेरयति स्म। इयमेव व्यग्रता राजनीतिशास्त्रस्य प्रणेत्री जाता। राजनीतिदर्शनोद्भवस्येयं मनोवैज्ञानिकभूमिकाऽस्ति।

भिन्नभिन्नयुगेषु नैकविधाः समस्या आसन्, तथा तासां राजदर्शने दार्शनिकाः सूरयश्च स्वानुभवक्रमेण निदानमप्यकुर्वन्। एतानि निदानानि नैकविधराजनीतिसम्बन्धिसिद्धान्तान् प्रादुर्भावयन्ति। एकस्य सिद्धान्तस्य प्रतिक्रिया तन्निर्माणात् परं भवति, तथा सा विरोधिनमपरं सिद्धान्तं जनयति। पर्यन्ते उभयोः सिद्धान्तयोः समन्वयो भवति, तथोभयानुसारेण नूतनस्य सिद्धान्तस्याविर्भावो भवति। कालान्तरे अस्यापि प्रतिक्रिया भवति। एवमयं क्रमश्चक्रारपङ्क्तिरिव प्रचलति। कस्यापि राजनीतिकसिद्धान्तस्यावगतये तदीयसामाजिकभूमिकां ज्ञातुं तावदेवावश्यकं यावत् स्ववक्त्रावलोकनाय दर्पणम्।

पौर्वदेशीयराजनीतिशास्त्रस्य जनिर्विकासश्च प्राथम्येन हिन्दुषु, यहूदिषु, चीनेषु चाभवत्। मिश्र-बेबीलोनिया-असीरिया-फारसेषु राजनीतिदर्शनं नातीव विकसितम्। प्राचीनभारते तथा चीने राजव्यवस्थायां कारणत्वेन धर्म एवोन्नततम आसीत्। तत्काले राजनीतौ धर्मे तथा सामाजिकनियमेषु भेदो नासीत्। राजनीतितन्त्रं धर्मगुरुषु पुरोहितादिषु च सन्नद्धमासीत्। पुरा पौर्वकालिकदर्शनं

राजनीतिसंस्थाः पावनताया आसने आसयत् तथा समाजस्य सामाजिकजीवनमेव सर्वममन्यत। तस्य माहात्म्यख्यापनं न व्यक्तिमात्रेषु किन्तर्हि? समाजे भवति स्म। आधुनिकव्यक्तिवादात्मकविचारवादे प्राचीनदर्शने वैयक्तिकस्वातन्त्र्यस्यापहारो भवति, तथापि निःसन्दिग्धमेतद् यद् बाह्यदोषाभावे सा व्यवस्था साफल्येन प्राचलत्।

महाभारतानुसारं सर्गकालाद् यावद् बहुसंवत्सरपर्यन्तं न राज्यं न राजा न च दण्डो नापि दाण्डिक आसीत्। अन्योन्यं जनाः परस्परं रक्षणपरायणा अभवन्[1]। सर्वे मनुष्या धर्मेणैव परस्परं पाल्यमाना ध्रियमाणाश्च भवन्ति स्म; किन्तु बहुषु कालेषु व्यतीतेषु अन्योन्यसंरक्षणे विपर्ययो जातः। शिथिले खलु धर्मसाम्राज्ये लोभमोहव्यापृतजनाः परस्परं कलहायमानाः सन्तः समाजेऽनवस्थासमारूढाः। तदनु समाजे अप्राप्यं वस्तु प्राप्तुं स्वार्थसाधने जनास्तत्परा बभूवुः[2]।

पूर्वं स्वधर्मप्रतिष्ठितमात्मानुशासनमासीत्, पतिते सति विश्वप्रशासनपरा देवाश्चिन्तामापुः। परस्परं ते विमृश्य प्रजापतेः शरणमाजग्मुः। ते स्तवादिना तं सन्तोष्य साञ्जलिं प्रार्थयामासुः—हे देव! धर्मापचयेन वैदिकसनातन-वर्णाश्रममार्गाविरोधेन च पृथ्वीलोके धर्मानुशासनं स्वार्थसाधनञ्च प्रवर्तते। अतो मानवलोकव्यवस्थायै कश्चन मार्ग उपदेष्टव्यः, येन लोकव्यवस्थितिः स्यादिति[3]।

आचार्यभीष्मेण निगदितं यद् देवानां कष्टमनुभूय भगवता ब्रह्मणा प्रोक्तम्—भो देवाः! भवतां भयं जाने, चिन्तयामि खलु तन्निवृत्तावुपायः। तदनु भगवता ब्रह्मणा लक्षैकाध्यायपरिमितं राजशास्त्रं व्यरचि[4]। तस्मिन् शास्त्रे

---

१. नैव राज्यं न राजाऽऽसीन्न दण्डो न च दाण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्॥ (म.शा.प. ५९.१४)

२. पाल्यमानास्तथान्योन्यं नरा धर्मेण भारत। खेदं परममाजग्मुस्ततस्तान्मोह आविशत्॥
ते मोहवशमापन्ना मनुजा मनुजर्षभ। प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत्॥
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा। लोभस्य वशमापन्नाः सर्वे भरतसत्तम॥
(म.शा.प. ५९.१५-१७)

३. नष्टे ब्रह्मणि धर्मे च देवास्त्रासमथागमन्। ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः॥
प्रपद्य भगवन्तं ते देवा लोकपितामहम्। ऊचुः प्राञ्जलयः सर्वे दुःखशोकभयार्दिताः॥
भगवन्नरलोकस्थं नष्टं ब्रह्म सनातनम्। लोभमोहादिभिर्भावैस्ततो नो भयमाविशत्॥
(म.शा.प. ५९.२२-२४)

४. ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्। यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः॥
मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वं रजस्तमः। स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः॥
(म.शा.प. ५९.२९,३१)

चतुर्विधोपायसाधनाय मार्गो निर्दिष्टः। किञ्च, त्रयो गुणाः प्रायशो नीतिपरा उपदिष्टा अभूवन्। यतो हि ऋषिमुनिपरम्पराभिः शास्त्रमिदं प्रवृत्तम्।

भगवता व्यासेन ब्रह्मणश्चिकीर्षितं समाजबलेन महाभारतस्य शान्तिपर्वणि व्याहृतम्। ब्रह्मणो नीतिशास्त्रे आत्मा, देशः, कालः, उपायः, कार्यं सहायकमिति षड्वर्गा वर्णिताः सन्ति। नीतिसञ्चालका एते लोककल्याणाय प्रवर्तन्ते। तत्र त्रयी आन्वीक्षिकी वार्ता तथा दण्डनीतिरित्यासां विद्यानां निरूपणं जातम्[1]। उक्तञ्च सन्दर्भेऽस्मिन् भारतभावदीपाख्यटीकाकारैः—'आत्मा चित्तं नीतिबलात् प्रजानां चित्तं दुःस्थितमपि सुस्थितं भवति। कुदेशोऽपि सुदेशो भवति। कलिरपि कृतं भवति। उपायाः साधनानि कृत्यं कृतिनिर्वर्त्यं प्रयोजनं सहायाः सुहृदादयो भवन्ति। एते सर्वे विकला अपि सकला भवन्ति, तत्र कारणं नीतिजः षड्वर्गो नीतिप्रीतिसम्मितश्चेत्यादिरित्यर्थः। त्रयी कर्मकाण्डः, आन्वीक्षिकी ज्ञानकाण्डः, वार्ता कृषिवाणिज्यादिजीविकाकाण्डः, दण्डनीतिः पालनविद्या इति। एते धर्मादयस्तत्र ब्रह्मकृतशतसहस्राध्याये दर्शिताः'[2]।

भगवतो ब्रह्मणस्तस्मिन् राजशास्त्रे अमात्यरक्षा, प्रणिधिः, राजपुत्रलक्षणानि, गुप्तचराणां संसाराय नैकविधा उपायाः, विभिन्नस्थानेषु विभिन्नप्रकारतया तेषां नियुक्तेरुपायः, साम-दान-दण्ड-भेदोपेक्षात्मकानां पञ्चानामप्युपायानां प्रकाराः प्रतिपादिताः सन्ति। सर्वविधा मन्त्रणाः, भेदनीतिप्रयोगप्रयोजनानि, मन्त्रणायां जायमाना भ्रमास्तद्भेदननिमित्तकभीतयस्तथा तस्याः सिद्ध्यसिद्धिप्रयोजनान्यपि वर्णितानि सन्त्यस्मिन् शास्त्रे[3]। सन्धेस्त्रयो भेदा उत्तममध्यमाधमभेदेन सन्ति। एतेषां क्रमेण वित्तसन्धिः, सत्कारसन्धिः, भयसन्धिश्चेति तिस्रः संज्ञाः सन्ति। धनग्रहणेन यः सन्धिः क्रियते स वित्तसन्धिरुत्तमः, सत्कारेण विधीयमानो स मध्यमः, भयेनाङ्गीक्रियमाणः स सन्धिरधम इति निगद्यते। एतत् सर्वं तस्मिन् ग्रन्थे

---

१. आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च। सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः॥
त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ। दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः॥
(म.शा.प. ५९.३२-३३)

२. म.शा.प. ५९.३२-३३ इत्यत्र भारतभावदीपाख्यटीकायाम्।

३. अमात्यरक्षाप्रणिधी राजपुत्रस्य रक्षणम्। चारश्च विविधोपायः प्रणिधिश्च पृथग्विधः॥
साम चोपप्रदानञ्च भेदो दण्डश्च पाण्डव। उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता॥
मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च। विभ्रंशश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत्फलम्॥
(म.शा.प. ५९.३४-३६)

विस्तरेण प्रतिपादितमस्ति। शत्रोराक्रमणे चत्वार अवसराः—मित्रवृद्धिः, कोशवृद्धिः, शत्रोर्मित्राणां नाशः, शत्रोः कोषहानिश्चेति सन्ति। त्रिवर्गविस्तारः, धर्मजयः, अर्थविजयः, आसुरविजयश्चेति विषया उक्तग्रन्थे प्रतिपादिताः सन्ति। मन्त्रि-राष्ट्र-दुर्ग-सैन्य-कोशा इति पञ्चवर्गास्तथा तेषामुत्तममध्यमाधमभेदेन प्रकारत्रयलक्षणप्रतिपादनमप्यस्ति[१]। संसारे सन्मार्गाय ये ये उपाया भवितुमर्हन्ति, तेषां समेषां प्रतिपादनमस्मिन् नीतिशास्त्रे उपदिष्टमस्ति।

एतद्रहस्यं महाभारते शान्तिपर्वणि भीष्मोपदेशेन स्फुटम्। एतत् निखिलमुपदिश्य स्वयं प्रजापतिर्ब्रह्मा परं तोषमवाप, तदनु शक्रप्रमुखदेवान् प्रतीदमुवाच—'अयि देवगणाः! सम्पूर्णलोकस्य उपकाराय तथा च धर्मार्थकामस्थापनायै वाक्सारभूतो विचारोऽयं प्रकटितः। दण्डविधानेन समन्वितेयं नीतिः सर्वजगद्रक्षिका स्येत्स्यति। इयं दुष्टनिग्रहाय साधुपुरुषानुग्रहाय च सर्वत्र प्रवर्तिष्यति। एतदाधारेणैव दण्डविधिना राजा प्रजां प्रशास्ति। अत एतदेव कारणेन एतच्छास्त्रं विद्या दण्डनीतिनाम्ना व्यपदिश्यते। अस्यास्त्रिषु लोकेषु प्रचारविस्तारो भविष्यति'[२]। इयं विद्या षाड्गुण्यसारभूता महात्मवृन्दे समाहिता पूजिता च भविष्यति। अस्मिन् शास्त्रे धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्था निरूपिताः सन्ति।

सर्वमिदं मनसि निधाय भीष्मेणोक्तं यद् ब्रह्मोपदेशानन्तरं नीतिशास्त्रं पूर्वं भगवता शङ्करेण गृहीतम्, स च बहुरूपः, विशालाक्षः, शिवः, स्थाणुः, उमापतिरित्येवमादिनाम्ना व्यपदिश्यते। विशालाक्षो भगवान् शिव आयुर्ह्रासक्रमं ज्ञात्वा ब्रह्मविरचितमिदं शास्त्रं संक्षिप्य व्यधात्, एवमिदं वैशालाक्षाभिख्यया व्यपदिश्यते। महातपस्विना सुब्रह्मण्यापरनामधेयेन पुरन्दरेण यदा शास्त्रमिदमधीतं तदाऽस्मिन् दशसहस्रसम्मिता अध्याया आसन्। इन्द्रेणापीदं शास्त्रं संक्षिप्तम्, तेनेदं पञ्चसहस्रपरिमिताध्यायं समपद्यत। तदेव

---

१. सन्धिश्च विविधाभिख्यो हीनो मध्यस्तथोत्तमः। भयसत्कारवित्ताख्यः कार्त्स्न्येन परिवर्णितः।।
यात्राकालश्च चत्वारस्त्रिवर्गस्य च विस्तरः। विजयो धर्मयुक्तश्च तथार्थविजयश्च ह।।
आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः। लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम्।।
(म.शा.प. ५९.३७-३९)

२. उपकाराय लोकस्य त्रिवर्गस्थापनाय च। नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता।।
दण्डेन सहिता ह्येषा लोकरक्षणकारिका। निग्रहानुग्रहरता लोकाननुचरिष्यति।।
दण्डेन नीयते चेयं दण्डं नयति चाप्युत। दण्डनीतिरिति प्रोक्ता त्रीँल्लोकाननुवर्तते।।
(म.शा.प. ५९-७६-७८)

बाहुदन्तकनाम्ना विख्यातमभूत्। तदनन्तरमाचार्यबृहस्पतिना स्वकीयचिन्तनेन संक्षिप्तम्, तदा त्रिसहस्रपरिमिताध्यायं जातम्। बार्हस्पत्येन तदेव व्यपदिश्यते। पश्चात् शुक्राचार्य एकसहस्राध्यायपरिमितं तत् संचिक्षेप। एवं मानुषाणामायुर्विलोपज्ञानपुरःसरं जगद्धिताय महर्षयः शास्त्रमिदं संचिक्षिपिरे[१]।

उपाध्यायनिरपेक्षाटीकाकारेणास्मिन् विषये कथितं यद् ब्रह्मणा लक्षपरिमिताध्यायं राजनीतिशास्त्रं संरचितम्, तदीयग्रन्थरत्नं नारदेन्द्रबृहस्पति-भार्गवभारद्वाजविशालाक्षभीष्मपराशरमनुयाज्ञवल्क्यप्रभृतयस्तथान्येऽपि महर्षयः संक्षिप्तमकार्षुः। मानुषायुष्यस्यात्यल्पीयस्त्वाद् आचार्यवर्यः कौटिल्यो लोककल्याणार्थं पुनः संचिक्षेप[२]।

आचार्यकामन्दकस्य कथनमिदमस्ति यत् पूर्ववर्त्याचार्याणां राजशास्त्रस्यार्थशास्त्रस्य वानुशीलनं विधायाचार्येण कौटिल्येन लोकहिताय भगवतो ब्रह्मणो ग्रन्थस्यार्थवत्सूत्ररूपेण संक्षिप्तं कृतम्[३]।

प्राचीनग्रीक इव प्राचीनभारतेऽपि विचारसम्प्रदायानां सत्ताऽऽसीत्। आचार्यमनुबृहस्पतिप्रभृतयः सुप्रसिद्धा विचारका ग्रीकविचारकप्लेटोतुल्यान् विचारान् साम्प्रदायित्वे स्थापयन्, विकासोऽपि गुरुशिष्यपरम्परया विशिष्टत्वेनाभूत्। कौटिलीयेऽर्थशास्त्रेऽधोलिखितानां सम्प्रदायानां न केवलमुल्लेख एवास्ति, तन्मतान्यपि समुद्धृतानि, यथा मानवाः, बार्हस्पत्याः, औशनसाः, पाराशराः, आम्भीयाश्चेति। महाभारतेऽपि नैकविधानां पूर्ववर्तिनां

---

१. ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः। बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः॥
युगानामायुषो ह्रासं विज्ञाय भगवाञ्शिवः। सञ्चिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम्॥
वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत। दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः॥
भगवानपि तच्छास्त्रं सञ्चिक्षेप पुरन्दरः। सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम्॥
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः। सञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते॥
अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत्। तच्छास्त्रममितप्रज्ञो योगाचार्यो महातपाः॥
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः। संक्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासि पाण्डव॥
(म.शा.प. ५९.८६-९२)

२. ब्रह्माध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्। तन्नारदेन शक्रेण गुरुणा भार्गवेण च॥
भारद्वाजविशालाक्षभीष्मपाराशरैस्तथा। संक्षिप्तं मनुना चैव तथा चान्यैर्महर्षिभिः॥
प्रजानामायुषो ह्रासं विज्ञाय च महात्मना। संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये॥
(कामन्दकीयनीतिसारे १.७ इत्यत्र उपाध्यायनिरपेक्षाटीकायाम्)

३. नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः। य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे॥
दर्शनात्तस्य सुदृशो विद्यानां पारदृश्वनः। राजविद्याप्रियतया सङ्क्षिप्तग्रन्थमर्थवत्॥
(कामन्दकीयनीतिसारः-१.६-७)

विस्तरेण प्रतिपादितमस्ति। शत्रोराक्रमणे चत्वार अवसराः—मित्रवृद्धिः, कोशवृद्धिः, शत्रोर्मित्राणां नाशः, शत्रोः कोषहानिश्चेति सन्ति। त्रिवर्गविस्तारः, धर्मजयः, अर्थविजयः, आसुरविजयश्चेति विषया उक्तग्रन्थे प्रतिपादिताः सन्ति। मन्त्रि-राष्ट्र-दुर्ग-सैन्य-कोशा इति पञ्चवर्गास्तथा तेषामुत्तममध्यमाधमभेदेन प्रकारत्रयलक्षणप्रतिपादनमप्यस्ति[१]। संसारे सन्मार्गाय ये ये उपाया भवितुमर्हन्ति, तेषां समेषां प्रतिपादनमस्मिन् नीतिशास्त्रे उपदिष्टमस्ति।

एतद्रहस्यं महाभारते शान्तिपर्वणि भीष्मोपदेशेन स्फुटम्। एतत् निखिलमुपदिश्य स्वयं प्रजापतिर्ब्रह्मा परं तोषमवाप, तदनु शक्रप्रमुखदेवान् प्रतीदमुवाच—'अयि देवगणाः! सम्पूर्णलोकस्य उपकाराय तथा च धर्मार्थकामस्थापनायै वाक्सारभूतो विचारोऽयं प्रकटितः। दण्डविधानेन समन्वितेयं नीतिः सर्वजगद्रक्षिका स्येत्स्यति। इयं दुष्टनिग्रहाय साधुपुरुषानुग्रहाय च सर्वत्र प्रवर्तिष्यति। एतदाधारेणैव दण्डविधिना राजा प्रजां प्रशास्ति। अत एतदेव कारणेन एतच्छास्त्रं विद्या दण्डनीतिनाम्ना व्यपदिश्यते। अस्यास्त्रिषु लोकेषु प्रचारविस्तारो भविष्यति'[२]। इयं विद्या षाड्गुण्यसारभूता महात्मवृन्दे समाहिता पूजिता च भविष्यति। अस्मिन् शास्त्रे धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्था निरूपिताः सन्ति।

सर्वमिदं मनसि निधाय भीष्मेणोक्तं यद् ब्रह्मोपदेशानन्तरं नीतिशास्त्रं पूर्वं भगवता शङ्करेण गृहीतम्, स च बहुरूपः, विशालाक्षः, शिवः, स्थाणुः, उमापतिरित्येवमादिनाम्ना व्यपदिश्यते। विशालाक्षो भगवान् शिव आयुर्ह्रासक्रमं ज्ञात्वा ब्रह्मविरचितमिदं शास्त्रं संक्षिप्य व्यधात्, एवमिदं वैशालाक्षाभिख्यया व्यपदिश्यते। महातपस्विना सुब्रह्मण्यापरनामधेयेन पुरन्दरेण यदा शास्त्रमिदमधीतं तदाऽस्मिन् दशसहस्रसम्मिता अध्याया आसन्। इन्द्रेणापीदं शास्त्रं संक्षिप्तम्, तेनेदं पञ्चसहस्रपरिमिताध्यायं समपद्यत। तदेव

---

१. सन्धिश्च विविधाभिख्यो हीनो मध्यस्तथोत्तमः। भयसत्कारवित्ताख्यः कात्स्न्र्येन परिवर्णितः॥
यात्राकालश्च चत्वारस्त्रिवर्गस्य च विस्तरः। विजयो धर्मयुक्तश्च तथार्थविजयश्च ह॥
आसुरश्चैव विजयस्तथा कात्स्न्र्येन वर्णितः। लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम्॥
(म.शा.प. ५९.३७-३९)

२. उपकाराय लोकस्य त्रिवर्गस्थापनाय च। नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता॥
दण्डेन सहिता ह्येषा लोकरक्षणकारिका। निग्रहानुग्रहरता लोकाननुचरिष्यति॥
दण्डेन नीयते चेयं दण्डं नयति चाप्युत। दण्डनीतिरिति प्रोक्ता त्रील्ँलोकाननुवर्तते॥
(म.शा.प. ५९-७६-७८)

बाहुदन्तकनाम्ना विख्यातमभूत्। तदनन्तरमाचार्यबृहस्पतिना स्वकीयचिन्तनेन संक्षिप्तम्, तदा त्रिसहस्रपरिमिताध्यायं जातम्। बार्हस्पत्येन तदेव व्यपदिश्यते। पश्चात् शुक्राचार्य एकसहस्राध्यायपरिमितं तत् संचिक्षेप। एवं मानुषाणामायुर्विलोपज्ञानपुरःसरं जगद्धिताय महर्षयः शास्त्रमिदं संचिक्षिपिरे[१]।

उपाध्यायनिरपेक्षाटीकाकारेणास्मिन् विषये कथितं यद् ब्रह्मणा लक्षपरिमिताध्यायं राजनीतिशास्त्रं संरचितम्, तदीयग्रन्थरत्नं नारदेन्द्रबृहस्पति-भार्गवभारद्वाजविशालाक्षभीष्मपराशरमनुयाज्ञवल्क्यप्रभृतयस्तथान्येऽपि महर्षयः संक्षिप्तमकार्षुः। मानुषायुष्यस्यात्यल्पीयस्त्वाद् आचार्यवर्यः कौटिल्यो लोककल्याणार्थं पुनः संचिक्षेप[२]।

आचार्यकामन्दकस्य कथनमिदमस्ति यत् पूर्ववर्त्याचार्याणां राजशास्त्रस्यार्थशास्त्रस्य वानुशीलनं विधायाचार्येण कौटिल्येन लोकहिताय भगवतो ब्रह्मणो ग्रन्थस्यार्थवत्सूत्ररूपेण संक्षिप्तं कृतम्[३]।

प्राचीनग्रीक इव प्राचीनभारतेऽपि विचारसम्प्रदायानां सत्ताऽऽसीत्। आचार्यमनुबृहस्पतिप्रभृतयः सुप्रसिद्धा विचारका ग्रीकविचारकप्लेटोतुल्यान् विचारान् साम्प्रदायित्वे स्थापयन्, विकासोऽपि गुरुशिष्यपरम्परया विशिष्टत्वेनाभूत्। कौटिलीयेऽर्थशास्त्रेऽधोलिखितानां सम्प्रदायानां न केवलमुल्लेख एवास्ति, तन्मतान्यपि समुद्धृतानि, यथा मानवाः, बार्हस्पत्याः, औशनसाः, पाराशराः, आम्भीयाश्चेति। महाभारतेऽपि नैकविधानां पूर्ववर्तिनां

---

१. ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः। बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः॥
युगानामायुषो ह्रासं विज्ञाय भगवाञ्छिवः। सञ्चिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम्॥
वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत। दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः॥
भगवानपि तच्छास्त्रं सञ्चिक्षेप पुरन्दरः। सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम्॥
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः। सञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते॥
अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत्। तच्छास्त्रममितप्रज्ञो योगाचार्यो महातपाः॥
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः। संक्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासि पाण्डव॥
(म.शा.प. ५९.८६-९२)

२. ब्रह्माध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्। तन्नारदेन शक्रेण गुरुणा भार्गवेण च॥
भारद्वाजविशालाक्षभीष्मपाराशरैस्तथा। संक्षिप्तं मनुना चैव तथा चान्यैर्महर्षिभिः॥
प्रजानामायुषो ह्रासं विज्ञाय च महात्मना। संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये॥
(कामन्दकीयनीतिसारे १.७ इत्यत्र उपाध्यायनिरपेक्षाटीकायाम्)

३. नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः। य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे॥
दर्शनात्तस्य सुदृशो विद्यानां पारदृश्वनः। राजविद्याप्रियतया सङ्क्षिप्तग्रन्थमर्थवत्॥
(कामन्दकीयनीतिसारः-१.६-७)

राजशास्त्रप्रणेतॄणां नामान्युट्टङ्कितानि। यथा विशालाक्षेन्द्र-बृहस्पति-मनु-शुक्र-भारद्वाज - गौरशिरा - मातरिश्वा - कश्यप - वैश्रवणोतथ्य - वामदेव - शम्बर - कालकवृक्षीय-वसुहोम-कामन्दकप्रभृतयः सन्ति।

कामन्दकीयनीतिसारे नैकविधं प्राचीनानां ग्रन्थानां मतमुद्धृतमस्ति। एषु केचन ग्रन्थास्तैराचार्यैरेव प्रणीताः सन्ति, तत्र केचन त एवाचार्याः कौटिल्यार्थशास्त्रे उद्धृताः सन्ति; किन्तु आचार्यद्वयं नूतनमप्यस्ति। एतयोर्नाम मयः पुलोमा चास्ति। श्रीमित्रमिश्रविरचिते वीरमित्रोदयराजनीतिनामके ग्रन्थे प्राचीना आचार्या अपि प्रतिपादिताः सन्ति। तत्र विज्ञानेश्वरः, बृहत्पाराशरः, अपरार्कः, गौतमः, बृहस्पतिः, नारदः, अङ्गिरा, कात्यायनश्चेत्येते मुख्याः सन्ति।

मध्यकाले सोमदेवसूरिणा नीतिवाक्यामृतनामको राजनीतिसम्बद्धो ग्रन्थो व्यरचि। एतेनैव यशस्तिलकचम्पूनामकं काव्यमपि प्रणीतम्, यत्र राजनीतिशास्त्रविषयकनैकविधतत्त्वान्यपि समाविष्टानि सन्ति। नास्ति संशीतिलेशो यत् प्राचीनभारते बहुप्रकारका ग्रन्था विद्यमाना आसन्। अनेकेषामाचार्याणां सम्प्रदायानाञ्चास्तित्वमासीत् प्राचीनभारते, यै राजनीतिशास्त्रं सम्यक्तया संवर्द्धितं परिपालितञ्च।

इत्थं निश्चीयते यत् प्राचीनभारतीयराजनीतिशास्त्रस्योत्पत्तिः सामाजिकावश्यकतानुसारं परिस्थितिवशाच्चाभूत्। शास्त्रस्यास्य जनकः स्वयम्भूर्ब्रह्मा तथा च भगवान्विशालाक्ष-सहस्राक्षेन्द्र-गुरुबृहस्पति-महातपस्वी-शुक्राचार्य-प्राचेतस-मनु-भगवान्-भारद्वाज-मुनिवरगौरशिरा-नारद-ऋषिभार्गव-पराशर-याज्ञवल्क्य-गङ्गापुत्रभीष्म-आचार्यविष्णुगुप्त-आचार्यकामन्दक-भर्तृहरि-विदुरप्रभृतिभिरिदं शास्त्रं पुष्पितं फलितं संवर्द्धितञ्चेति। अत एतेषां प्राच्यभारतीयाचार्याणां सम्मतौ वैदिककाले भारतीयराजनीतेरुपपत्तिरभूत्। अर्थाद् भारतीयराजनीतेर्मूलाधारत्वेन वेद एवाधितिष्ठति। वेदेषूल्लिखितराजनीतिरेव महर्षिभिराचार्यैश्च स्मृतिपुराणमहाभारतधर्मशास्त्रेषु यथासमयं पल्लविताऽभूत्। विभिन्नेषु राजनीतिग्रन्थेषु राजनीतिर्भिन्नप्रकारत्वेनैव प्रतिपादिता वर्तते। महाभारते राजनीतेः प्रतिपादनमतिविस्तृतया दरीदृश्यते। मनुस्मृतौ राजनीतिव्यतिरिक्ततया मनुष्याणां प्रत्येकं वृत्तं प्रतिपादितमस्ति। याज्ञवल्क्यस्मृतौ व्यवहारप्रकाशे च विशेषतया न्यायव्यवस्थाऽस्त्युपवर्णिता। शुक्रनीतौ दण्डनीतेरेव विद्यते प्राधान्यम्। आचार्यशुक्रस्य दृष्टौ दण्डनीतिरेव राजनीतिः। कौटिलीयार्थशास्त्रे

राजनीत्या सह मानवानां सर्ववृत्तनिरूपणमप्यस्ति। आचार्यकौटिल्येन ग्रन्थारम्भ एव व्यक्तमस्ति यत् सम्पूर्णजगद्धिताय, लाभाय, परिपालनायैव च पूर्वोक्ताचार्यैः प्रतिपादितमेव सर्वान् राजनीतिसम्बन्धिग्रन्थान् सङ्कलय्याधीत्य च चिन्तयित्वा अर्थशास्त्रमिदं निर्ममे[१]।

ऋग्वेदेऽपि निगदितमिदं यद्राजप्रजयोश्च सुखप्राप्त्यर्थं विज्ञानवृद्धिकारकं धर्मार्यसभां विद्यार्यसभां राजार्यसभाञ्च व्यवस्थितं कृत्वा सम्पूर्णप्रजायै विद्या-स्वातन्त्र्य-धर्म-सुशिक्षा-धनमित्यादिभिः सम्यग्रूपेण सुरक्षां कुर्वीत। सैन्येन सम्मिलित्वा तिस्रः सभा राजधर्मस्य पालनं कुर्वत्यः समरव्यवस्थां कुर्युरिति[२]। शुक्लयजुर्वेदे विराट्पुरुषस्योपवर्णने स विराट्पुरुषः 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्'[३] इत्यादिभिर्विशिष्टविशेषणैः सम्बोधितः। पुराणेषु देवेशः सहस्राक्षनाम्ना कथितः। छान्दोग्योपनिषदि अध्यापनस्य विषये सनत्कुमारस्य प्रश्नोत्तरं समादधानोऽन्यविषयाणामध्यापनेन सहैव 'एकायनविद्यायाः' अध्यापनस्यापि निर्देशो वर्तते। अस्यार्थः शाङ्करभाष्ये नीतिविद्या राजनीतिर्नयविद्या वा कृता। अतो राजनीतिशास्त्रस्य मूलं वेदा एव सन्ति।

पाश्चात्त्यराजदर्शनेतिहासारम्भो यूनानराजदर्शनेन सह भवति। यूनानीयराजदर्शने प्राधान्येन द्वौ विचारकौ स्तः—प्लेटो, अरस्तू चेति। एते यूरोपीयराजदर्शनस्य अग्रेसराश्चिन्तका इति निगद्यन्ते। नास्ति कश्चनापि यूरोपीयराजदार्शनिको य एताभ्यां प्रभावितो न स्यात्। एतौ महान्तौ दार्शनिकावपि स्तः।

प्लेटोमहोदयादपि पूर्ववर्तिषु विचारकेषु सुकरातमहोदयस्य माहात्म्यमधिकमस्ति। सुकरातमहोदयादपि पूर्ववर्तिनो राजनीतिज्ञा अभवन्, ये 'सॉफिस्ट' इत्यभिधया ज्ञायन्ते। सुकरातस्य विचाराणां भूयांशः सॉफिस्टानां जीवनवृत्तस्यालोचनप्रत्यालोचने स्तः। सुकरातस्यालोचनपद्धतिः, राजनीति-विषयको विचारश्चातीवसुपुष्टो गभीरोऽस्ति, येन यूनानदेशीयख्याति-लब्धैर्विचारकैरपि यत्किञ्चित् परिवर्तनपुरस्सरं विकासपुरस्सरञ्चाङ्गीकृतम्। दृष्टान्ते

---

१. पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्। (कौटिलीयार्थशास्त्रम्-१.१)

२. एवमादिरर्थस्तत्तद्वाक्यानां तत्तल्लेखकाभिमतादुल्लिखितः। भाष्याद्यनुसारेण वाक्यान्तराण्यपि द्रष्टव्यानि।

३. यजुर्वेदरुद्राष्टाध्यायी-२.१।

सुकरातशिक्षादर्शनप्रभावः प्लेटोमहोदयं प्रति स्पष्टं दृश्यते। प्लेटोमहोदयेन सुकरातमहोदयस्य सिद्धान्ता न केवलं यथानुरूपं स्वीकृताः, किञ्च विकसिताः संवर्द्धिताश्च। दृष्टान्ते ज्ञानमेव गुण इति सिद्धान्तः सुकरातेनैव पूर्वं व्यक्तस्तदनुसारं प्लेटोमहाभागेन साधितं यद् गुणाः शिक्षणीया इति, तथाऽस्य साधनं ज्ञानमेवेति।

प्लेटोमहोदयात् पूर्वमैतिहासिकदृष्ट्या प्राधान्येन सॉफिस्टानां नामान्यायान्ति, तदनन्तरं सुकरातमहोदयस्य तत्पश्चाच्च सिनिक्सानां तथा च सिरेनिक्सानाम्। पाश्चात्त्यराजदर्शनस्य भूयान् भागः प्लेटो-अरस्तूमहोदयाभ्यामारभ्यते, तथा चोभयोरपि बाहुल्येन चिन्तनाधारभूमय एतद्विचारकैस्तुल्याः सन्ति। प्लेटो-अरस्तूभ्यां पूर्वतनानामाचार्याणां विचारा यथारूपं नाङ्गीक्रियन्ते इत्यन्यदेतत्; किन्तु पूर्वतना विचारका उभयोरेव प्रेरयितारः सन्तीति दार्ढ्येन निश्चेतुं शक्यते। इत्थं यदा यूनाने एतेषां विचारकाणां विचारभूमयः प्राशस्त्यमुपलभ्यमाना आसन्, तदानीमीशवीयात् प्राक् पञ्चमी शताब्दी आसीत्।

प्लेटोमहोदयस्य षट्त्रिंशद्ग्रन्थेषु 'दि रिपब्लिक', 'दि स्टेट्समैन', दि लाज' इत्येते महत्त्वपूर्णग्रन्थाः सन्ति। 'दि रिपब्लिक' इत्याख्यो ग्रन्थस्तेन ईशवीयात् प्राग् अष्टाशीत्युत्तरत्रिशततमे वर्षे लिखितः, यत्र अध्यात्म-नैतिकता-शिक्षा-राजदर्शनसम्बन्धिविचाराः सन्ति। 'स्टेट्समैन' इत्यभिधो ग्रन्थः षट्वर्षादुत्तरमीशवीयात् प्राग् अशीत्युत्तरत्रिशततमे वर्षे लिखितस्थायितमो ग्रन्थः, 'दि लाज' इत्याख्यः प्लेटोमहोदयस्य मृत्युकालात् पश्चाद् ईशवीयात् पूर्वं सप्तविंशत्युत्तरत्रिशततमे वर्षे प्रकाशितः। पाश्चात्त्यराजदर्शनस्येतिहासे प्लेटो एतादृशः प्रथमो विचारकोऽस्ति, यो राजनीतिसम्बन्धिप्रगतिवादस्य प्रतिनिधित्वं विदधाति, तस्य विचारधारायां क्रान्तिकारिताऽस्ति तथा पूतिकूष्माण्डीभूत-व्यवस्थाया उन्मूलनं भवति। व्यवस्थितविचारप्राधान्यादेव तं पाश्चात्त्यविचारकेषु प्राथम्येन गणयन्ति विज्ञाः। प्लेटोमहोदयात् पश्चाद् अरस्तूमहोदयेन 'पॉलिटिक्स' इत्याख्ये स्वीये लब्धप्रतिष्ठे ग्रन्थे राजनीतिसम्बन्धिविचाराः प्रतिपादिताः। तत्पश्चात् कालान्तरे आगस्टाइन-जॉनसैलिसबरी-सन्त-टॉमस-एक्वीनाज-दान्ते-मैकियावली-जीनबोंदा-हॉब्स-लाक-माण्टेस्क्यू-रूसो-बर्क-जेरेमी-बेंथम-जेम्समिल-जॉन-आस्टिन-हर्बर्ट-स्पेन्सर-आगंस्ट-कामटे-हीगल-बोसाके-काल-मार्क्सप्रभृतयः पाश्चात्यविचारका अभूवन्, यैः पाश्चात्त्यराजनीतिशास्त्रं स्वीयविशिष्टमौलिकसिद्धान्तैः संवर्द्धितमिति।

भारतीयविदुषां मते राजनीतिः 'राजन्-नीति' इति शब्दद्वयभागयोर्योगेन निर्मिताऽस्ति। सा च विशिष्टतात्त्विकार्थैः समन्विता स्वयमेव पूर्णार्थबोधिका व्यापकार्थनिष्ठा चास्ति। व्याकरणदृष्ट्या षष्ठीतत्पुरुषस्यैकवचनान्तसमासे राज्ञो नीतिः राजनीतिर्भवति, अस्याः क्षेत्राधिकारो राष्ट्रियस्तरे भवति, तथा च षष्ठीतत्पुरुषस्य बहुवचनान्तसमासे राज्ञां नीतिः राजनीतिर्भवति, अस्याः परिक्षेत्रश्चान्ताराष्ट्रियस्तरे भवति।

शास्त्रीयपरिभाषादृष्ट्या—'प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ, देशकालानुकूल्ये सति यथासाध्योपायविनियोगलक्षणा क्रिया नीतिरिति'[1]। अर्थात् प्रत्यक्षपरोक्षानुमानादीनां त्रिप्रमाणानां निकषे दार्ढ्येन फलनिष्पत्त्यर्थं साम-दान-दण्ड-भेद-मायोपेक्षेन्द्रजालरूपाणां सप्तानामुपायानां देशकालपरिस्थितिसङ्गतिषु प्रयोगस्य विधिरेव नीतिर्निगद्यते। भगवता शुक्राचार्येणेदमेवोक्तम्—

> दमो दण्ड इति प्रोक्तस्तात्स्थ्याद्दण्डो महीपतिः।
> तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते[2]॥

अस्मिन्नुदाहरणे राजनीतेर्व्यापकतायाः परिचयो दृश्यते। अपराधीनां दमनमेव दण्डपदाभिधेयो भवति। तस्य धाता राजा भवति। तस्यैव नीतिर्दण्डनीतिः, राजनीतिरर्थशास्त्रं, राजदर्शनं, दण्डनीतिरित्यनेकानि नामानि विहितानि विद्वद्भिः।

भारतीयराजनीतिर्जनानां तमसः प्रति, असन्मार्गात् सन्मार्गं प्रति, असभ्यतायाः सभ्यतां प्रति, राष्ट्रञ्चाविकसिताद् विकासशीलं प्रति, विकासशीलाच्च विकसितं प्रति नयति। आचार्यभीष्मस्य मते राजधर्म एव राजनीतिः। राजनीतेर्वैशिष्ट्यमुपवर्णयताचार्यभीष्मेणोक्तं यल्लोकस्य सर्वे त्यागा राजनीतावेव दृश्यन्ते, सर्वा विद्या राजनीतौ राजधर्मे वा समाहिताः, सर्वे लोका राजधर्म एव प्रविष्टाश्चेति[3]।

पाश्चात्यविदुषां मते राजनीतिशब्द आङ्ग्लभाषायाः 'पालिटिक्स' (Politics) इति शब्दानुवादः, 'पालिटिक्स'-शब्दो यूनानीयभाषायाः "पोलिस"-

---

१. कामन्दकीयनीतिसारे उपाध्यायनिरपेक्षाटीकायाम्।

२. शुक्रनीतिः-१.५६।

३. सर्वे त्यागा राजधर्मेषु दृष्टाः सर्वा दीक्षा राजधर्मेषु चोक्ताः।
सर्वे योगा राजधर्मेषु चोक्ताः सर्वे लोका राजधर्मान्प्रविष्टाः॥ (म.शा.प. ६३.२९)

(Polis) शब्दस्यैव रूपान्तरमस्ति। यूनानभाषायां 'पोलिस'-शब्दस्यार्थो नगरराज्यमित्यस्ति (City State)। प्राचीनकाले यूनानदेशो लघुनगरराज्येषु विभक्त आसीत्। अयमेव नगरराज्ययोः सम्बद्धविषयः 'पॉलिटिक्स' (Politics) इति कथ्यते। एवं व्युत्पत्तिदृष्ट्या राजनीतिशास्त्रं राज्यानां सर्वाङ्गीणमधीतिकेन्द्रमेवास्ति। परमिदानीं न तु नगरराज्यान्येव भवन्ति न च 'पॉलिटिक्स'-शब्दस्य इयान् व्यापकोऽर्थ एवावमन्यते। सामान्यतया इदानीन्तने आधुनिकयुगे राजनीतिशब्दप्रयोगः शासनस्य सत्ताप्राप्त्यर्थं सर्वकारं प्रति छलच्छद्मारोप एव क्रियते। व्युत्पत्तिदृष्ट्या राजनीतिशास्त्रं राज्यविषयकं शास्त्रमेव। राजनीतिशास्त्रस्य परिभाषाः पाश्चात्यविचारकाणां मते त्रिधा विभज्यन्ते—

१. राजनीतिशास्त्रं केवलं राज्याध्ययनरूपे।

२. राजनीतिशास्त्रं केवलं सर्वकाराध्ययनरूपे।

३. तदुभयाध्ययनरूपे।

प्रथमकोटौ त एव विचारकाः सन्ति ये राजनीतिशास्त्रं केवलं राज्यस्याध्ययनपर्यन्तमेव मन्वते। अपि च सर्वकाराध्ययनं राजनीतिक्षेत्रे सन्निविष्टतया न मन्वते। एषु विचारकेषु ब्लंटशली-गार्नर-गैरिजाख्यानां नामान्युद्ध्रियन्ते। एतैर्विचारकैर्राजनीतिः केवलं राज्यस्य व्याख्यातारमधीति-विषयकशास्त्रमेवाङ्गीक्रियते।

ब्लंटशलीदृष्ट्या 'राजनीतिशास्त्रं तद्विज्ञानमस्ति यस्य सम्बन्धो राज्येनैवास्ति। यमिदमवबोधयितुं प्रथमं प्रयतते यद्राज्यस्य कानि मूलतत्त्वानि? तस्यावश्यकं स्वरूपं किम्? केषु च विभिन्नरूपेणात्मानं व्यक्तं तथा तदीयविकासोऽपि कथं भवति'[१]।

गार्नरमहोदयानुसारेण—'राजनीतिशास्त्रस्य आदिरन्तश्च राज्येन सहैव भवति'[२]।

---

१. 'Political Science is a science which is concerned with the state, which endeavours to understand and comprehend the State in its fundamental conditions, in its essential nature, its various forms of manifestation, its development'. (Bluntschli)

२. 'Political Science begins and ends with the State'. (Garner)

गैरिसमहोदयेनाप्युक्तम्—'राजनीतिशास्त्रं राज्याध्ययने शक्तिसम्पन्न-संस्थारूपेण पूर्णसम्बन्धेषु तदुत्पत्तौ तत्स्थितौ च तदुद्देश्ये, तदीयनैतिकमहत्त्वे, तदीयार्थिकसमस्यासु, तदीयजीवनपरिस्थितौ च रूढं वर्तते'[१]।

एताः परिभाषा राजनीतिशास्त्रस्य मूले प्रकाशं कुर्वन्ति, प्रतिपादयन्ति चेदं यद् राजनीतिशास्त्रस्य मूलविषयो राज्यमेवेति। राज्यपरकव्यवस्थाया हेतोः सर्वकारव्यवस्थाया अप्रतिपादनाच्चैताः परिभाषा भ्रान्तिमूलाः। राज्यममूर्तविचारत्वेन प्रतितिष्ठति। सर्वकारो राज्यस्य मूर्तं स्वरूपमस्ति, तेनैव राज्यस्य इच्छाशक्त्योरभिव्यक्तिः प्रयोगश्च क्रियते। अतः सर्वकारमन्तरेण राज्यस्य क्रियात्मकरूपस्याध्ययनं न भवति। इत्थमेतद्वर्गीयविचारकैः प्रस्तुतपरिभाषा एकाङ्गिका अपूर्णा भ्रान्तिमूलिका चास्ति।

द्वितीयवर्गेषु ते विचारकाः सन्ति ये राजनीतिशास्त्रं केवलं सर्वकाराध्ययनपर्यन्तमेव मन्वते। एतादृक्परिभाषासु राज्यशब्दसमावेशो नास्ति। एतद्वर्गे विद्वांसः सीले-लीकाकप्रभृतयः सन्ति।

सीलेमहोदयानुसारेण 'राजनीतिशास्त्रं शास्त्रसम्बन्धिसिद्धान्तानां तत्कार्याणाञ्च तथैव विवेचनं करोति यथा वित्तशास्त्रं वित्तस्य, जीवविज्ञानं जीवनस्य, बीजगणितमङ्कस्य, ज्यामितिशास्त्रं स्थानस्य दूरत्वस्य च'[२]।

लीकाकमहोदयमते 'राजनीतिशास्त्रं सर्वकारेण सम्बद्धा विद्यास्ति'[३]।

एताः परिभाषा अपि अपूर्णाः, सर्वाङ्गानि न स्पृशन्ति। सर्वकारं राज्यात् पृथक् कृत्वा मौलिकास्तित्वसम्पादनं भ्रममूलकमेव। सर्वकारस्य पृथग् अस्तित्वं न भवति, स तु राज्यस्याङ्गमात्रं तत्त्वमेकं वास्ति। राज्यमेकं स्थूलतत्त्वं सर्वकारश्च तस्य प्राकट्यभूमिमात्रम्। अतः सर्वकारमात्रमेकराज्यशास्त्रस्य विषये व्यवस्थापनमेकांशे पूर्णतान्नार्हति।

---

१. 'Political Science considers the state as an institution of powers in the totality of its relations, its origin, its setting (Land and People), its object, its ethical significance, its economic problems, its life conditions, its financial side, its end etc.'. (Garis)

२. 'Political Science investigates the phenomena of government as political Economy deals with wealth, Biology with life, Algebra with numbers and Geometry with space and magnitude'. (Seeley)

३. 'Political Science deals with government'. (Leacock)

तृतीयवर्गे ते विचारकाः सन्ति यैर्मध्यममार्गो गृहीतस्तथा राजनीतिशास्त्रं राज्यसर्वकारयोरुभयोरप्यध्ययनत्वे स्वीकृतम्। एषु विचारकेषु पॉलजेनेट-लास्की-गेटेल-गिलक्राइस्टप्रभृतयः सन्ति।

पॉलजेनेटमहोदयस्य मते—'राजनीतिशास्त्रं समाजशास्त्रस्य तद्विधमङ्गमस्ति येन राज्यस्याधारशासनयोः सिद्धान्तान् विचारयति'[१]।

गेटेलमहाभागानुसारेण—'राजनीतिशास्त्रं राज्यस्यातीतकालीनस्याधुनिकस्य, भाविनः स्वरूपस्य, राजनीतिकसङ्घटनस्य, तत्कार्यस्य, तत्संस्थाया राजनीतिकविचाराणाञ्चाध्ययनमस्ति'[२]।

उपर्युक्तासु त्रिविधासु परिभाषासु प्रायेण तृतीया परिभाषैव न्यायानुप्राणिततर्कसङ्गता सर्वमान्या चास्ति।

मौर्यकालिकभारतीयराजनीतिविदाचार्येण कौटिल्येन स्वीयप्रसिद्धे ग्रन्थे अर्थशास्त्रे राज्यशासनयोः कलाया वर्णनं कृतम्। तदनुसारम्—'राजनीतिशास्त्रं तच्छास्त्रमस्ति यदेकसुव्यवस्थितसमाजराज्यसम्बन्धिनां विविधविषयाणामध्ययनं विदधाति'।

तत्समानकालीनभाविना अरस्तूमहोदयेनापि स्वीयप्रसिद्धकृतौ 'राजनीति' (पॉलिटिक्स) इत्याख्यायां राजनीतिशास्त्रं प्राधान्येन राजविज्ञानरूपत्वे-नैवाङ्गीकृतं यद् राज्यविषयकसर्वप्रकारेष्वधीतिं विदधाति। तद्गुरुणा प्लेटोमहोदयेनाप्ययमेव विचारो व्यक्तः।

**उभयोः समीक्षणम्**

सर्वविदितमेतद् यत् पाश्चात्त्यराजदर्शनस्य भौतिकदृष्ट्या यावदुत्थानं भवतु; किन्तु आध्यात्मिकदृष्ट्या प्राचीनभारतीयदर्शनादेव तदुत्थानलाभोऽभूत्।

भारतीयराजनीतिशास्त्रीयेतिहासस्य वैशिष्ट्यमेतदेव यत्तत्र समन्वय-सामञ्जस्यस्थापने सर्वतोऽधिकं महत्त्वं प्रादर्शि। सर्वधर्मसहिष्णुत्वमौपनिषददृष्टिश्च भारतीयसाम्राज्ये शासकगतवैशिष्ट्यं ख्यापयति। धर्म उन्नतिपथे समारूढ

---

१. 'Political Science is that part of Social Science which treats of the foundation of the State and the principles of government'.
(Paul Janct)

२. 'It (Political Science) is thus a study of the state in the past, present and future, of political organisation and political function, of political institutions and political theories'. (Gettell)

आसीत्तथा जीवनक्रमे व्यक्तिगतत्वेनैव, न तु समष्टिगतत्वेनासीत्। परधर्मावलम्बिनामपि हिंसावृत्तिर्भारतीयराजतन्त्रे अश्रुतपूर्वैवास्ति। राज्यद्वारा पुरोहित-ऋषिप्रभृतीनामत्यधिकः समादर आसीत्। ते च समादृता अपि शासनतन्त्रे व्यवधायका नासन्।

भारतीयराजनीतिशास्त्रस्यापरमपि वैशिष्ट्यं यत्तत्र शान्तिवादसमर्थनमभूत्। आचारनीतौ हिंसा निन्दनीया आसीत्तथा यथासम्भवं बलप्रयोगो घातकत्वेनैवोपदिष्टः।

भारतीयराजनीतिशास्त्रस्य रचयिता स्वयम्भूर्ब्रह्मा तथा भारतीयनयोत्पत्तौ मूलभूतं स्रोता वेदा एव, वेदे तथा निर्धारणदर्शनात्।

पाश्चात्त्यराजनयविदुषां मते पाश्चात्त्यराजशास्त्रसमुत्पत्तिर्यूनानीय-नगरराज्येनाजायत, यस्यारम्भः प्लेटो-अरस्तूभ्यां कृतः, अथवा सोफिस्टानां सुकरातस्य सिनिक्सानां सिरेनिक्सानां तथा प्लेटो-अरस्तूप्रभृतीनां नामान्येव पाश्चात्त्यराजनीतिशास्त्रप्रवर्तकत्वेन गण्यन्ते। तस्योत्पत्तिः सम्भवत ईशवीयात् सप्तशतकेभ्यो वर्षेभ्यः पूर्वमेवावतिष्ठते। यतो हि यूनाने नगरराज्ययोः स्थापना तत्काल एवाभूत्।

यतो हि पाश्चात्त्याः पौरस्त्याश्च विद्वांसो वेदानां प्राचीनकालोद्भवत्व-मङ्गीकुर्वन्ति तथा भारतीयराजशास्त्रस्योत्पत्तिर्ब्रह्मणा जाता। एतेनेदमेव निश्चीयते यद् भारतीयराजनीतिशास्त्रस्योत्पत्तिः प्राचीनकाल एव सृष्टिसंरचनाकाले वा वैदिककाले वाऽभूत्।

एवं कालदृष्ट्या भारतीयराजशास्त्रं पाश्चात्त्यराजशास्त्रादतीव प्राचीनमस्तीति निश्चीयते। भारतीयराजनीतिशास्त्रस्य ग्रन्थेषु राजनीत्या सह अन्यशास्त्राणामपि विस्तरेण प्रतिपादनमस्ति। तत्र मानवजीवनस्य सर्वाङ्गीणाः पक्षा वर्णिताः सन्तीति वक्तुं शक्यते। पाश्चात्त्यराजशास्त्रेऽन्यविषया न तथा प्रतिपादिताः सन्ति। इत्थं भारतीयराजनीतिशास्त्रस्य सीमा पाश्चात्त्यापेक्षया विपुला सार्वभौमा चास्ति। भारतीयाचार्यैः राजनीतिशास्त्रस्य सुव्यवस्थिता तथा क्रमबद्धा परिभाषा न प्रस्तुता। तैः केवलं राजनीति-धर्मनीति-नीति-नय-अर्थशास्त्र-दण्डनीति-राजदर्शन-राजशास्त्र-धर्मशास्त्रेत्यादिभिर्नामभी राजनीते-र्व्यवहारः कृतः।

पाश्चात्त्यैः प्राचीनार्वाचीनै राजनीतिविद्भी राजनीतिशास्त्रस्य सुव्यवस्थिता बद्धक्रमा परिभाषापि प्रस्तुता।

अतः सुव्यवस्थितक्रमिकपरिभाषादृष्ट्या प्राचीनपाश्चात्त्यार्वाचीनराजनीति-र्भारतीयराजनीतेरपेक्षया श्लाघास्पदत्वेनायाति।

भारतीयराजनीतेरुद्देश्यं राष्ट्रकल्याणं मानवहितं तथा धर्मार्थकाम-मोक्षाधिगतिरस्ति। पाश्चात्त्यनये मोक्षस्योपेक्षास्ति। पाश्चात्त्यदर्शन एषा महती त्रुटिः।

भारतीयराजनये ऐहलौकिकेन सह पारलौकिके वृत्तेऽपि चिन्तनमस्ति न तु पाश्चात्त्ये तथा। भारतीया राजनीतिः परमार्थनैतिकत्वाध्यात्मिकत्वालम्बनास्ति सा भौतिकताया अतीव दूरे वर्तते। पाश्चात्त्यराजनये तु भौतिकतैवास्ति। अयमेव पाश्चात्त्यराजनीतौ महान् दोषः।

एवं प्राच्यपाश्चात्त्यराजनीतिविषयकमूल्याङ्कनेनेदं प्रतिफलति यत् प्राचीनभारतीयराजनीतौ सुव्यवस्थितपरिभाषाभावेऽपि व्यापकत्वाध्यात्मिकत्वादि-गुणगणैरुद्देश्यस्य वैशिष्ट्यात् पाश्चात्त्यप्राचीनार्वाचीनराजनीत्यपेक्षया भारतीयराजनीतिरेव श्लाघनीया सङ्ग्रहणीया अनुकरणीया चास्तीति।



# धर्मसापेक्षं राष्ट्रम्

**डॉ. दिनेशकुमारगर्गः**
प्राध्यापकः, प्राचीनराजशास्त्रार्थशास्त्रविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



समस्तेऽपि जगति सर्वे प्राणिनः सुखमिच्छन्ति। कथं सुखिनः स्याम्, यतन्तेऽपि; किन्तु वास्तविकं सुखमवाप्तुं न यतन्ते। भौतिकं क्षणिकं सुखं प्राप्तुं प्रयासरता जना भूरिशो दरीदृश्यन्ते। ऐहिकं पारलौकिकञ्च सार्वकालिकं सुखं कथं भवेत्, एतदर्थं तपःपूता महर्षयस्तत्तच्छास्त्रेषु निर्दिशयमानाः समवलोक्यन्ते। अत्र विषये आचार्यचाणक्यो ब्रूते—'सुखस्य मूलं धर्म इति'[1]। एवं पाञ्चभौतिकं शरीरं व्युदस्य पारलौकिकीं यात्रां प्रारभमाणो जीवो धर्मरूपं पाथेयमादायैव गच्छति। अत्रोक्तं महर्षिणा—

> धनानि भूमौ पशवश्च गोष्ठे नारी गृहद्वारि जनाः श्मशाने।
> देहश्चितायां परलोकमार्गे धर्मानुगो गच्छति जीव एकः।।

अर्थाद् असारे खलु संसारे यं यमाश्रित्यानेकविधानि पापानि आचरति जीवस्तानि सर्वाणि धनादिप्रभृतीनि वस्तूनि अन्तकाले परित्यजन्ति, धर्मेणानुगम्यमानः पारलौकिकीं यात्रां करोति।

कोऽस्ति धर्मः, कथं सः प्राप्यते, किं तत्स्वरूपं, धर्मं विनाऽपि किं कोऽपि मानवो व्यवहर्त्तुं शक्यते, कोऽपि राष्ट्रो धर्मापेक्षां विनाऽपि समुन्नतिपथं गन्तुं शक्नोति? एते समे प्रश्ना बुद्धौ प्राय उद्भवन्ति।

सर्वप्रथमतो धर्मशब्दो विचार्यते। 'धरति लोकान् ध्रियते पुण्यात्मभिर्वेति धर्मः'। 'धृञ्-धारणे' इति भौवादिकधातोः [2]'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' इत्यौणादिकसूत्रेण मन्प्रत्यये विभक्तिकार्ये सति धर्म इति निष्पद्यते। विश्वकोशानुसारिणोऽस्यार्थः—'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ', एवं विश्वे—'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इत्याद्यर्थेषु प्रयुज्यमानो धर्मशब्दः प्रायशस्तत्तच्छास्त्रेषु दृश्यते।

---

१. चाणक्यसूत्रम्-१; २. औणादिकसूत्रम्-१३७।

धर्मशब्दो यज्ञानुष्ठानबोधक एव नास्ति, अपि तु जातिलोकमर्यादा-वर्णव्यवस्थाद्यनेकेष्वप्यर्थेषूपलभ्यते। यथा श्रीमद्भगवद्गीतायाम्—'कुलधर्माः सनातनाः'[१] अत्र कुलमर्यादापरकः। 'जातिधर्माः'[२] अत्र जातेर्द्योतकः। एवं 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः'[३] अत्र धर्मशब्देन स्वकीयवर्णाश्रमादि-व्यवस्थापरकोऽस्ति। 'लक्षणप्रमाणाभ्यां विना वस्तुसिद्धिर्न' इति वचनानुसारेण अत्र धर्मशब्दस्य विभिन्नशास्त्रेषु तत्तदृषिमतानुसारिलक्षणं प्राप्नोति, यथा पद्मपुराणे—

पात्रे दानं मतिः कृष्णे मातापित्रोश्च पूजनम्।
श्रद्धाबलिर्गवां ग्रासः षड्विधं धर्मलक्षणम्[४]॥

मनुमते—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
श्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्[५]॥

श्रीमद्भागवते—

सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः।
अहिंसा ब्रह्मचर्यञ्च त्यागः स्वाध्याय आर्जवम्॥

अत्राद्यादेः संविभागा भूतेभ्यश्च यथार्हतः।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव॥

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम्॥

नृणामयं परो धर्मः सर्वेषां समुदाहृतः।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति[६]॥

एवं षड्विधं, दशविधं तथा त्रिंशत्प्रकारकं लक्षणं तत्तदाचार्यैः प्रत्यपादि। उपर्युक्ता गुणा येषु मानवेषु प्राप्यन्ते त एव धर्मशीलाः सन्ति। अन्यच्च भारतेऽप्युक्तम्—

धारणाद् धर्ममित्याहुर्धर्मो धारयते प्रजाः।
यत्स्याद् धारणसंयुक्तं स धर्म इति निश्चयः[७]॥

---

१. श्रीमद्भगवद्गीतायाम्-१.४०;
२. तत्रैव-१.४३।
३. तत्रैव-३.३५;
४. पद्मपुराणे-१४.१३।
५. मनुस्मृतौ-६.९२;
६. श्रीमद्भागवतपुराणे-७.११.९-१२।
७. महाभारते शान्तिपर्वणि-२०९.२२।

आचार्यचाणक्योऽपि वदति—'धर्मेण धार्यते लोकः'[१]।

अर्थाद् धर्माधिक्यादेवेयं धरा सुस्थिरा वर्तते, मानवाः पापं कर्तुं सहसा न प्रवर्तन्ते। तथैव महाभारतेऽपि धर्माऽधर्मलक्षणमुच्यते—

'अहिंसालक्षणो धर्मो हिंसा चाऽधर्मलक्षणा'।

अर्थात् 'मा हिंस्यात् सर्वभूतानि' इत्युक्त्या सर्वप्रकारिका हिंसा परिहर्त्तव्या सदाचारिभिर्मानवैः। पुनश्च व्यासेन श्रीमद्भागवते धर्मलक्षणमुक्तम्—

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः'।

धर्मदीपिकायाम्—

विहितक्रियया साध्यो धर्मः पुंसां गुणो मतः।
प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म उच्यते॥

महर्षिकाणादप्रणीतवैशेषिकदर्शने—

'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'।

आश्वलायनगृह्यसूत्रे—'धारणात् श्रेय आदधाति' इति धर्मः। जैमिनिप्रणीतपूर्वमीमांसायाम्—'चोदनालक्षणोऽर्थो धर्मः'।

अर्थात्—उपदेशेन आज्ञया किं वा विधिना ज्ञायमानः श्रेयस्करोऽर्थो धर्मः। धर्मस्य लक्षणं महर्षियाज्ञवल्क्येन प्रत्यपादि—

इज्याचारदमाहिंसा दानस्वाध्यायकर्मणाम्।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्[२]॥

प्राचीनमहर्षीणां मते धर्मस्य निष्कृष्टं लक्षणम्—

'यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः, यं गर्हन्ते सोऽधर्म' इति।

आद्यशङ्कराचार्यावतारो विविधग्रन्थग्रन्थिविमोचकः सनातनधर्मरक्षणतत्परो धर्मसम्राट् स्वामिश्रीकरपात्रचरणो धर्मस्य लक्षणं विविधशास्त्रसम्मतं ब्रूते—

'बलवदनिष्टाप्रयोजकत्वे सति श्रेयःसाधनतया वेदप्रमातितत्त्वमेव धर्मत्वम्'।

समेषां लक्षणानामयं सारो यद्यत्कार्यं कल्याणपथं नयति, परान् न क्लेशयति, स एव धर्मः। अन्यथा यत्र हिंसाप्रवञ्चनादिकं भवति, स तु न धर्मः, अपि तु अधर्मः, अथवा धर्माभासः।

---

१. चाणक्यसूत्रम्-२३४;	२. याज्ञवल्क्यस्मृतिः-१.८।

उपरि धर्मस्य लक्षणमुक्त्वा, पश्चाद् धर्मस्याङ्गानि, तस्य मूलं तदाधारश्च कः? एतत्सर्वमग्रे प्रदर्श्यते। **धर्मस्याङ्गानि**—

ब्रह्मचर्येण सत्येन तपसा च प्रवर्तते।
दाने नियमेनापि क्षमा शौचेन वल्लभाः।।
अहिंसया सुशान्त्या चाऽस्त्येयेनापि वर्तते।
एतद्दशभिरङ्गैस्तु धर्म्ममेव प्रसूयते[१]।।

धर्मस्य मूलम्—

अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः।
ब्रह्मचर्यं ततः सत्यमनुक्रोशः क्षमा धृतिः।।
सनातनस्य धर्मस्य मूलमेतद्दुरासदम्[२]।।

धर्मस्याधारस्थानानि—

यत्र स्थानं तवाधारो वदामि श्रूयतां विभो।
वैष्णवेषु च सर्वेषु यतिषु ब्रह्मचारिषु।।
पतिव्रतासु प्राज्ञेषु वानप्रस्थेषु भिक्षुषु।
नृपेषु धर्मशीलेषु सत्सु सद्वैश्यजातिषु।।
द्विजसेविषु शूद्रेषु सत्संसर्गस्थितेषु च।
एषु त्वं सन्ततं पूर्णो धर्मराज! विराजसे।।
युगे युगे तवाधारा एते पुण्यतमा जनाः।।

अपि च—

अश्वत्थवटबिल्वेषु तुलसीचन्दनेषु च।
देवार्हेषु च पुण्येषु विद्यमानोऽसि शाखिषु।।
देवालयेषु तीर्थेषु सतां शश्वद्गृहेषु च।
वेदवेदाङ्गश्रवणे जनेषु च सभासु च।।
श्रीकृष्णगुणनामोक्तश्रुतिगीतास्थलेषु च।
व्रतपूजातपोन्याययज्ञसाक्षिस्थलेषु च।।

---

१. पद्मपुराणे, भूमि.ख. ८३.७।

२. मत्स्यपुराणे, अ. १४४, श्लो.सं. ३१-३२।

दीक्षापरीक्षाशपथगोष्ठगोष्पदभूमिषु।
गवां गृहेषु गोष्ठेषु विद्यमानो हि पश्यसि।।
कृशता ते न भविता धर्मैतेषु स्थलेषु च।।

इदानीं जनानां पूर्वोक्तेषु स्थलेषु पाश्चात्यसंस्कृतौ दत्तचित्तत्वात् श्रद्धाया न्यूनता दृश्यते; किन्त्वद्यापि ये मानवाः पूर्ववर्णितविषये गवि, ब्राह्मणे, देवालये, श्रीकृष्णचरणारविन्दे च शुद्धभावेन सह समर्पणं कुर्वन्ति, ते ऐहिकं पारलौकिकञ्च सार्वकालिकं सुखं भुञ्जते। अत्र **मानवधर्मो** निरूप्यते—अयं धर्मः समेषां कृतेऽस्ति—

स्वाध्यायं ब्रह्मचर्यञ्च दानं यजनमेव च।
अकार्पण्यमनायासं दयाहिंसाक्षमादयः।।

जितेन्द्रियत्वं शौचञ्च माङ्गल्यं भक्तिरुच्यते।
शङ्करे भास्करे देव्यां धर्मोऽयं मानवः स्मृतः।।

एवविधो मानवानां सदा ग्राह्यो धर्मो विद्यते। एतद्धर्मं विना मानवः पशुतुल्योऽस्ति। यथा पशवो भोजनमैथुनादिकार्येषु स्वकीयं दिनं यापयन्ति। ते जना न सामाजिकाः; अपि तु सामजिका एव। यतो हि पशूनां समूहः समजः, मानवानां समूहः समाजः। समाज एव धर्मधौरेया निवसन्ति।

धर्मेऽपि विविधताऽस्ति, तत्र भेदत्रयं निरूप्यते—

**धर्मभेदाः**—धर्मस्त्रिविधो भवति—१. सामान्यधर्मः, २. विशेषधर्मः, ३. आपद्धर्मश्च।

१. सामान्यधर्मः—

यदाचरति सति समाजस्याऽभ्युदयः, निःश्रेयस्त्वञ्च प्राप्यते स सामान्यधर्मः। यथा—

अहिंसासत्यमस्त्येयं शौचमिन्द्रियनिग्रहः।
एतं सामाजिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः[१]।।

एवमेव यत्र धृतिः (सन्तोषः), क्षमा, दमः, अस्त्येयं (चौर्यादिकार्याभावः), बाह्याभ्यन्तरपवित्रता, इन्द्रियनिग्रहः (विषयेभ्यो निवर्तनम्), धीः (तत्त्वजिज्ञासुबुद्धिः), विद्या (आत्मज्ञानम्), सत्यम्, अक्रोधः। एतद्दशविधं लक्षणं सामान्यजनानां कृतेऽस्ति।

---

१. मनुस्मृतौ-१०.६३।

२. विशेषधर्मः—'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति भगवद्वचनानुसारं चतुर्वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणाम्। अथ च चतुर्णामाश्रमाणां ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाश्रमाणां शास्त्रनिर्देशानुसारं पालनमेव विशेषधर्मः। एवं स्वधर्मनिरतः शूद्रः शतवारं जन्म गृहीत्वा वैश्ययोनिं गच्छति। वैश्यधर्मे निरतो जनः शतजन्मानन्तरं क्षात्रयोनिमवाप्नोति, तथा क्षात्रधर्मे रतः शतजन्मपर्यन्तं शास्त्रविहितकर्म कुर्वाणो ब्रह्मयोनिं गच्छति। अयमेव विशेषधर्मः।

३. आपद्धर्मः—आपत्कालिकीं दशामनुभूय, देश-काल-पात्राणां चिन्तनं कृत्वा सद्भावावलम्बनेन शास्त्रमर्यादानुसारं यस्य धर्मस्य पालनं सत्पुरुषो जनः करोति, स एव आपद्धर्मो भवति। आपत्काले परधर्मस्य स्वीकृतिः शास्त्रदृष्ट्या विधियुक्तैव। तत्रापि स्वच्छन्दतयाऽऽचरणं न कृत्वा शास्त्रानुसार्यवलम्बनमेव विधिसम्मतम्। आपदो व्यपगते सति जनः स्वकीयं मूलधर्मं स्वीकुर्यात्। एतत्सर्वं धर्मशास्त्रसम्मतमेव। आपद्धर्मे शिष्टजनानामाज्ञा सदा पालनीया। यो जन ईर्ष्याहङ्कारदम्भलोलुपतामानमोहक्रोधादिविरहितः, स एव सज्जनो भवति। यो मानव आपत्काले पालनीयस्य धर्मस्य विपत्तेः समाप्तौ सत्यामपि पालयति, स पापभागी भवति। अत आपद्धर्मव्यतिरिक्तकाले स्वधर्मस्यैव आचरणं विधातव्यम्।

कोऽपि देशः काञ्चिद् विशिष्टां संस्कृतिमादधानो भवति। तस्य राष्ट्रस्य किमपि वैशिष्ट्यं धर्मो भवति। धर्मं विना कोऽपि देशो न ह्यवस्थातुं शक्नोति। धर्मोऽवश्यमेव पालनीयः। अस्माकं देशोऽनादिपरम्परामात्मसात्कुर्वन् जगतीतले महनीयां छटां वितनोति। अस्माकं देशस्य प्राचीनतमो धर्मः सनातनधर्म एवास्ति। एतत् सनातनधर्मस्यानुकरणमन्ये समेऽपि तथाकथितधर्माः कुर्वन्ति। अत्र यादृशी शिक्षा प्रदीयते, तादृशी अन्यत्र कुत्रापि नास्ति। कोऽपि मानवो धर्मं विना नैव स्थातुं शक्यते। अत एवाद्यतनास्तथाकथिता आत्मानं राष्ट्रस्य नायकं मन्यमानाः सनातनधर्मस्य मर्मविषयेऽज्ञाः पदादिलोभवशाद् भगवद्रूपं सनातनधर्मं तिरस्कुर्वन्ति।

अत्र राष्ट्रे मुख्यतया चत्वारो धर्मा अत्रत्यैर्जनैः स्वीक्रियन्ते। तत्र यथा—१. सनातनधर्मः, २. बौद्धधर्मः, ३. मुस्लिमधर्मः, ४. ईसाईधर्मश्च। अत्र सनातनव्यतिरिक्ता ये धर्मास्ते वास्तविका धर्मास्तु न सन्ति, यतो हि पूर्वोक्तधर्मलक्षणेषु मध्ये पूर्णतया नहि संघटन्ति। कुत्रचिद् हिंसायाः प्राबल्यम् एवं कुत्रचित् छद्माचारः प्रबलतयाऽवलोक्यते। द्विविधं वस्तु भवति। प्रथमं तावद् उपजरूपम्, अन्यद् अन्वेषणीयञ्च। यत् पूर्वं न भवति, पश्चादायाति,

तद्वस्तु उपजेति कथ्यते; किन्तु यत् पूर्वं भवति, तस्यैव अन्वेषणं भवति। एवमाधुनिका ये धर्मा उपजमूलकाः, यतो हि एते कस्याश्चिद् व्यक्तेः बुद्धेश्चिन्तनमेव सन्ति, यथा बौद्धधर्मो बुद्धस्य बुद्धिवैशद्यरूपोऽस्ति, मुहम्मदसाहेबेति नाम्नः कस्यचित् पुरुषस्य चिन्तनभूतो मुस्लिमधर्म इति। ईसामसीहेति जनस्य चिन्तनरूप ईसाईधर्म इति; किन्तु सनातनधर्मो नहि कस्याश्चिद् व्यक्तेश्चिन्तनेनागतः; अपि तु स्वयमेव अनादिरूपतामादधानो विराजते। अत एवोच्यते—'ऋषयो मन्त्रद्रष्टारः'। अनेन वचनेन ऋषीणां शोधस्वरूपः सनातनधर्मोऽस्ति। श्रीमद्भगवद्गीतायामपि अर्जुनेनोक्तम्—'त्वमव्ययः शश्वद्धर्मगोप्ता'। एवमेव तत्रैव—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्[1]॥

अर्थाद् अपौरुषेयस्य सनातनधर्मस्य कृशतां गते सति, तस्य पुनः पूर्ववत् संस्थापनार्थं भगवतोऽवतारो भवति। अस्माकं कैश्चिदपि अन्यैर्धर्मैः (धर्माभासैः) सह विरोधो नास्ति। कमपि धर्मं प्रति श्रद्धानः पुरुषो यदि निष्कामभावेन परोपकारं पुरस्कृत्य कर्म करोति, सोऽपि सद्गतिं प्राप्तुं शक्यते। अन्यधर्मपरम्परापेक्षया सनातनधर्मः पूर्णरूपेण वैज्ञानिकः कल्याणकारी चास्ति। अतः सनातनधर्मः सदा सर्वैः सेवनीयो वरीवर्ति। धर्मस्य सेवनकाले सावधानताऽऽवश्यक्यस्ति। अन्यथा त्रयाणामधोलिखितानां तत्तद्धर्माणां सेवने सति महाननर्थः स्यात्। तद्यथा धर्मे त्रयः—१. कुधर्मः, २. अधर्मः, ३. परधर्मश्च भवन्ति।

१. धर्मे कुधर्मो यथा—अन्यान् प्रति अनिष्टचिन्तनं कूटनीत्यादिभावाश्च धर्मे कुधर्मोऽस्ति।

२. धर्मे अधर्मः—यज्ञे पश्वालम्भनम्, तथाऽन्यत् शरीरेण मनसा च यद् हिंसात्मकं कर्म क्रियते, स एव धर्मे अधर्मः।

३. धर्मे परधर्मः—स्वस्मै निषिद्धः परस्य कृते यद् विहितं कर्म तत् क्रियते, स एव परधर्मः। एवंविधस्त्रिविधो धर्मो जनानां कल्याणाय न भवति। एतान् परित्यज्य यदा सनातनधर्मः पाल्यते, तदानीमेव सद्गतेः प्राप्तिः, अन्यथा सत्पथात् पतति।

अत एव वेदविहितस्य कल्याणकारिणो धर्मस्य आचरणं कुर्यात्, यतः सर्वे मानवा लोकेऽस्मिन् यशांस्यनुभवन्तः परलोके अनन्तात्मकं परात्मसुख-

१. श्रीमद्भगवद्गीतायाम्-४.७।

मधिगच्छेयुः। एतत् सार्वकालिकं सुखं मोक्षपदवाच्यमस्ति। यावद् विभेद-स्तावदेव दुःखानुभूतिः। भेदे नष्टे सति परमात्मतत्त्वावाप्तिर्जायते।

धर्म एव कस्यचिदपि राष्ट्रस्य आत्मा भवति, येन विना राजनीतिः कल्याणपक्षप्रदायिनी न भवति। यतः कोऽपि जनो राजपदे आरोढुमिच्छति, तदानीं राजधर्मस्य शिक्षा स्मृत्यादिग्रन्थेभ्योऽवश्यमेव ग्राह्या भवति। अन्यथा प्रजायाः पालनं सम्यग्रूपेण न कर्त्तुं शक्यते। सर्वप्रथमतः—'आत्मानं प्रथमं राजा विनयेनोपपादयेत्'[1] इति कामन्दकवचनानुसारेण राजा विनयी भवेत्। विनयो हीन्द्रियजयः। राज्ञः कृते इन्द्रियनिग्रहणं परमावश्यकं भवति। अन्यथा विषयसम्बन्धिनी लोलुपता राजानं स्वधर्मात् पातयति। 'यथा राजा तथा प्रजा' इति नियमेन प्रजा अपि चौर्यादिकर्मव्यापृतस्य राज्ञोऽनुकरणं कुर्वन्ति। अद्यतने काले ये शासकाः सन्ति, ते धर्मनिरपेक्षतावादिनः सञ्जाताः। कोऽपि सत्पथस्य चर्चां न करोति। कथं वयं धनिनः स्याम्, अस्या एव पाश्चात्त्यशिक्षायाः सर्वत्र प्राबल्यं दृश्यते। भौतिकतावादिजीवनमेव श्रेयस्करं मनुते। धनं केन मार्गेण आयाति, अत्र कोऽपि विचारो न क्रियते। अस्यैव दुष्परिणामो यद् असत्पथं गच्छन्तोऽद्यतनीना युवानो यत्र तत्र सर्वत्र दरीदृश्यन्ते। अत एव आतङ्कवादस्वरूपो व्यालः सर्वान् भोक्तुं मुखं प्रसार्य समुपस्थितो वर्तते। धर्मेणैव यस्य कस्यापि राष्ट्रस्य समृद्धिर्भवितुं शक्यते। उक्तञ्चात्र कामन्दकेन—'धर्मेण वर्धते राज्यं तस्य स्वादु फलं श्रियः'[2]।

महात्मागान्धिप्रभृतयो महापुरुषा धर्मसापेक्षा एव आसन्। तेषां मनसि धर्मयुक्तस्यैव राष्ट्रस्य निर्माणे सङ्कल्प आसीत्। अत एव सनातनधर्मध्वजवाहकस्य भगवतः श्रीरामचन्द्रस्य स्वरूपोऽस्य राष्ट्रस्य संविधानग्रन्थस्य सर्वोपरि विद्यते। सनातनधर्मं पुरस्कृत्यायं राष्ट्रः प्रगच्छेच्चेत्, तदानीमेवास्योन्नतिः सम्भविष्यति। अन्ते च **'सत्यं वद धर्मं चर'** इति मन्त्रवाक्यस्य प्रचारो यदा जने जने भवेत्, तदानीमेवात्र रामराज्यमायास्यतीति।

●

१. कामन्दकीयनीतिसारः-१.२५।
२. तदेव-१.१७।

लघु-ग्रन्थमाला

[ ६९ ]

# अद्वैततत्त्वतरङ्गिणी


लेखकः

**प्रो. राजारामशुक्लः**

आचार्यः, वैदिकदर्शनस्य

संस्कृतविद्याधर्मविज्ञानसङ्काये

काशीहिन्दूविश्वविद्यालये, वाराणस्याम्

सम्पादकः

**डॉ. राजेश्वरद्विवेदी**

प्रवक्ता, अद्वैतवेदान्तस्य

श्रीसीतारामवैदिकादर्शसंस्कृतमहाविद्यालये

कोलकाता





**वाराणस्याम्**

वि.सं. २०६६

# भूमिका

**अद्वैतं परमानन्दं निर्विशेषं परात्परम्।**
**सर्वान्तरं सदानन्तं चिन्मात्रं शङ्करं नुमः।।**

द्वाभ्यां प्रकाराभ्यामितं ज्ञातमनुयोगिप्रतियोगिभ्यामिति द्वीतं द्वीतमेव द्वैतं स्वार्थिकोऽण्। न विद्यते द्वैतं यत्र तदद्वैतम्। सजातीयविजातीयस्वगत-सकलभेदरहितम्। निर्विशेषमित्यर्थः। तच्च ब्रह्मैव। विशेषो भेदः जातिः गुणः क्रिया तार्किकमतसिद्धनित्यान्त्यवृत्तिपदार्थो वा मध्वसम्मतभेदप्रतिनिधिभूत-विशेषपदार्थो वा कश्चिद् धर्मो वान्यः। सर्वविशेषरहितोऽत एव सामान्य-रहितोऽपि सच्चिदानन्दानन्तः परमात्मा प्रत्यगभिन्नः स्वप्रकाशः सर्ववेदान्त-तात्पर्यविषयः। द्वाभ्यामुक्ताभ्यां प्रकाराभ्यां भेदः सादृश्यञ्च विज्ञायते। सादृश्यस्य भेदघटितत्वाद् भेदे निषेधे सादृश्यस्यापि निषेधो भवत्येव।

छान्दोग्ये षष्ठे प्रपाठके एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय सकलप्रपञ्च-कारणरूपमेकमद्वितीयं सद् ब्रह्म निर्दिशति श्रुतिः। **सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयमित्यादि** (छा. ६/२/१)। तत्र इदं प्रत्यक्षादि सन्निधापितं जगत् अग्रे उत्पत्तेः प्राक् सदेव आसीत्। एवकारेणान्यव्यवच्छेदः। तच्च सद् कीदृशमिति जिज्ञासायामेकमेवाद्वितीयमिति पदत्रयेण निर्दिश्यते। पदत्रयेण एकमेव ब्रह्म बोध्यते भेदत्रयनिवारणद्वारा। यथोक्तं पञ्चदश्याम्—

**वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः।**
**वृक्षान्तरात् सजातीयो विजातीयः शिलादितः।।**
**तथा सद् वस्तुनो भेदत्रयं प्राप्तं निवार्यते।**
**ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात्।।** (प.द. २-२०, २)

एवञ्च एकमित्यनेन स्वगतो भेदः, एवकारेण सजातीयो भेदः, अद्वितीयपदेन विजातीयो भेदश्च प्रतिषिध्यते। एवमद्वैतं ब्रह्म सकलभेदरहितम्। नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। यत्र द्वैतमिव भवति तत्रेतर इतरं पश्यति यत्र सर्वमात्मैवाभूत् केन कं पश्येत्। अथात आदेशो नेति नेति। अथ यो दहरमन्तरं कुरुते न स वेद इत्यादि-श्रुतिभ्यः।

**न स्थानतोऽप्युभयलिङ्गं सर्वत्र हि** इत्युभयलिङ्गाधिकरणे, समन्वयाधिकरणे आरम्भणाधिकरणे च भगवत्पादैरद्वैतनिर्विशेषब्रह्म प्रतिपादितम्।

**खण्डनखण्डखाद्ये**—अद्वैते किं प्रमाणमित्युपक्रम्य प्रश्नानुपपत्त्या किञ्चित् समाधाय एकमेवेति श्रुतिः भेदत्रयनिषेधपूर्वकं प्रमाणमित्युक्तम्। भेदाश्च स्वरूपं धर्मान्योन्याभावादिभिः विकल्प्य विस्तरेण खण्डने चित्सुख्यामद्वैतसिद्धौ च खण्डिताः। अद्वैतंसिद्धिग्रन्थे विस्तरेण विशेषखण्डनमपि कृतम्।

अद्वैतमभेद ऐक्यमिति यावत्, स च न कश्चिद्धर्मविशेषोऽपितु ब्रह्मरूपमेव। न चाभेदस्य स्वरूपत्वे तस्य नित्यसिद्धत्वेन स्वप्रकाशतया स्वतः स्फुरणेन उपदेशवैयर्थ्यम्। तस्य अस्फुरणे च तद् बुभुत्साद्यनुपपत्तिरिति वाच्यम्, अभेदस्य ब्रह्मचैतन्यस्वरूपत्वेन तस्य नित्यसिद्धत्वेऽपि सर्वज्ञत्वाद्युपलक्षितस्वरूपज्ञानस्य अज्ञानादिनिवर्तकस्य साध्यत्वात्। अयं भावः, न हि स्वरूपेण ब्रह्म अविद्यादिबन्धनिवर्तकम्। शास्त्रजन्यतत्त्वसाक्षात्काररूपवृत्त्यारूढं सत् निवर्तकम्। अन्यथा चिन्मात्रस्य ब्रह्मणः नित्यसिद्धत्वात् अविद्याया आश्रयानुपपत्तिः स्यात्। अनिर्वतकत्वे च अनिर्मोक्षप्रसङ्गः स्यादिति। वृत्तिविषयतापन्नं तत् अज्ञानादिसकलबन्धोच्छेदमिति शास्त्रमर्यादा। अतो ब्रह्मविद्यारूपाखण्डाकारवृत्तिसिद्ध्यर्थं शास्त्रोपदेशस्य सार्थक्यं न वैफल्यम्। न हि शास्त्रमन्तरा सिद्धस्यापि जीवब्रह्मणोरैक्यस्य विज्ञानं कथमपि सम्भाव्यते। तथा च अभेदाऽद्वैतं वा ब्रह्मस्वरूपमेव न कश्चित् प्रकारः। स्वरूपस्य प्राधान्यात् प्रकाराभावात्। ननु सर्वस्यापि प्रपञ्चस्य नेह नानास्तीत्यादिश्रुत्यापि ब्रह्मणि अभावो बोध्यते स च त्रैकालिकः। तथा चाभावशतसंकुलं ब्रह्माभावरूपमेव स्यात्। किञ्च द्वैताभावः कथं भावरूपस्य ब्रह्मणः स्वरूपं भवितुमर्हति। नहि अभावो भावस्य स्वरूपं भावो वा अभावस्य स्वरूपं भवति। द्वैतप्रपञ्चाभावस्वरूपत्वे च ब्रह्मणो निरुपाख्यत्वापत्तेः इति चेत्? अत्रोच्यते—भावान्तरमन्तरेणाभावस्य स्वरूपानङ्गीकाराद् अभावो न कश्चिद् पृथक् पदार्थः। भावान्तरस्यैवाभावपदार्थत्वात्। एवं भेदपक्षेऽपि बोध्यम्। तथा च घटाद्यभावः भूतलादिरूप एव। घटादिभेदश्च पदादिरूप एव। अभावस्य भेदस्य च अनुयोगिस्वरूपभिन्नत्वपक्षेऽपि ब्रह्मणि सर्वप्रपञ्चाभावे भेदे वाङ्गीकृते न कोऽपि दोषः। ननु द्वैतापत्तिरेवेति चेन्न भावाद्वैते श्रुतितात्पर्यात्। वस्तुतः अभावस्य प्रतियोगिनिरूपितत्वात् तदभावे अभावे प्रमाणाभावात् प्रतियोगिनश्च जडवर्गस्य मिथ्यात्वाद् अभावस्यापि मिथ्यात्वमेव। व्यवहारकाले तु चर्चैषा। द्वैतापेक्षयैव ब्रह्मणि अद्वैतव्यवहारः। किं वा सत्यज्ञानादिसर्वज्ञसर्वशक्तिनिर्गुणादिपदव्यपदेशोऽपि सत्यादीतरनिवृत्तिपरत्वेन सर्वव्यवहारातीते मनोवागविषये

ब्रह्मणि। न तु द्वैताद्वैतव्यवहारः परमार्थः। अत एवाजातवादे प्रपञ्चो यदि जायेत निवर्तेत न संशयः। एवञ्च नोत्पत्तिर्न निरोधः। व्यवहारमात्रं तु मिथ्या ब्रह्मणि कल्पितम्।

तात्त्विकात्यन्ताभावपक्षेऽपि प्रपञ्चनिषेधस्य ब्रह्मस्वरूपात्यन्ताभिन्नत्वात् नाद्वैतक्षतिः। नन्वेवं प्रपञ्चाभावस्य ब्रह्मणोऽत्यन्ताभिन्नत्वे नेह नानास्तीत्यादिश्रुतिबोधिता ब्रह्मणि प्रपञ्चाभावविशिष्टबुद्धिरनुपपन्ना स्यात्, न हि अत्यन्ताभिन्ने विशेष्यविशेषणभावः सम्भवति। अत्रोच्यते—प्रपञ्चात्यन्ताभावस्य रूपद्वयं प्रपञ्चात्यन्ताभावत्वविशिष्टं केवलञ्चेति। तत्र केवलरूपेण ब्रह्मात्यन्ताभेदः। प्रपञ्चात्यन्ताभावत्वविशिष्टया च तस्य बोध्यत्वमेव। तथा च प्रपञ्चनिषेधः ब्रह्माभिन्नः सन् ब्रह्मस्वरूपमात्रं सत् न प्रपञ्चनिषेधत्वविशिष्टतया तत्तादात्म्येन भासते। अपि तु ब्रह्मस्वरूपेण सत्त्वादिनैव। प्रपञ्चप्रतियोगिकनिषेधत्वरूपेण भासमानो निषेधो व्यावहारिकः स च बाध्य एवेति भावः। अत एव सत्त्वादिना अधिष्ठानब्रह्माभिन्नरूपेण भासमानेऽपि निषेधे प्रपञ्चनिषेधत्वेनाभासमाने च न ब्रह्मणि प्रपञ्चभ्रमासम्भवः। अन्यथा ब्रह्मणि प्रपञ्चनिषेधत्वेन भासमाने ब्रह्माभिन्नेऽपि प्रपञ्चनिषेधे तत्र प्रपञ्चभ्रमोत्पत्तिः।

ननु प्रपञ्चनिषेधस्य ब्रह्मात्यन्ताभिन्नत्वे घटादिप्रतियोगिकात्यन्ताभाव-निषेधवद् अनुपलब्धिप्रमाणगम्यत्वेन ब्रह्मणो भावरूपत्वाभावप्रसङ्गः स्याद् इति। तथा च ब्रह्मात्यन्ताभिन्नः प्रपञ्चनिषेधो न भावरूपः, अनुपलब्धिप्रमाणगम्यत्वात् घटादिप्रतियोगिकाभाववद् इत्यनुमानेनोक्तनिषेधाभिन्नब्रह्मणो भावरूपत्वं न स्यात्। न हि अनुपलब्धिप्रमाणगम्यो भाव इति चेन्न, अभावसमसत्ताक-प्रतियोगिकाभावत्वस्योपाधित्वात्। तथा च ब्रह्मणि प्रपञ्चनिषेधस्य भिन्नसत्ताकत्वेन नानुपलब्धिगम्यत्वमिति नोक्तदोषः। अथवा प्रपञ्चात्यन्ताभावत्व-विशिष्टस्यैवाभावस्यानुपलब्धिगम्यत्वं न ब्रह्मरूपत्वापन्नस्येति बोध्यम्। एवञ्च ब्रह्माभिन्नप्रपञ्चनिषेधस्य त्रैकालिकत्वमपि न त्रिकालयोगात् कालापरिच्छिन्ने असङ्गे कालयोगाभावात्, अपि तु नित्यत्वमेव ग्राह्यम्। तच्च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वादिरूपम्।

एवञ्च प्रपञ्चनिषेधस्य तात्त्विकत्वेऽपि ब्रह्मात्यन्ताभिन्नत्वाङ्गीकारेण न कोऽपि दोषः। उपपादितश्चैतद् द्वितीयमिथ्यात्वप्रकरणे अद्वैतसिद्धौ चन्द्रिकायाञ्च विस्तरेण, संग्रहेणात्रोक्तम्।

एवमद्वैतं द्वैताभावः स च परमात्मैव। निर्विशेषोऽपि विशेषाभावो ब्रह्मैव। एवं निर्विकल्पनिर्गुणनिष्क्रियादिपदेष्वपि बोध्यम्। तत्र ब्रह्मणि न जातिरेकत्वात्।

न क्रिया, **निर्गुणं निष्क्रियं शान्तमित्यादिश्रुतेः**। न च हेयप्राकृतगुणनिषेधे तात्पर्यम्, संकोचे मानाभावात्, सर्वगन्धसर्वरस इत्यादीनामारोपादपि प्रतीतेः। नेह नानास्तीत्यादिश्रुतेः सर्वधर्मनिषेधः। सत्यत्वज्ञानत्वादयः स्वरूपपरा एव, त्वतलादिभावप्रत्ययानां स्वरूपबोधेऽपि व्युत्पत्तेः। किञ्च गुणादयो विशेषा विकल्पा वा किं सविशेषे सन्ति निर्विशेषे वा? आद्ये स्वस्मिन् स्वाश्रयतापत्तेरात्माश्रयात्। द्वितीये निर्विशेषत्वाङ्गीकारात्। सविशेषे विशेषा इति पक्षे अनवस्था चक्रकान्योन्याश्रयात्माश्रयदोषा आपतन्ति। तस्मान्निर्विशेषं चिन्मात्रं शास्त्रैक्यगम्यं ब्रह्मेति निश्चीयते।

ननु निर्गुणं निर्विशेषं सर्वप्रपञ्चोपशमं चिन्मात्रमेकमद्वितीयं ब्रह्म शास्त्रैकगम्यं चेत् प्रत्यक्षानुमानोपमानागमादिप्रमाणैः सन्निधापितस्य सकलविशेषविकल्पगुणक्रियाजात्यादिधर्मविशिष्टस्य द्वैतप्रपञ्चस्य का गतिरिति। किञ्च क्रियाकारकादिभेदमुपजीव्य प्रवर्तमानशास्त्रीयकर्मकाण्डभागानामपि वैयर्थ्यं स्यात्। किञ्च **'आराग्रमात्रोऽवरोऽपि दृष्टः, ममैवांशो जीवलोके जीवभूतः सनातनः'** इत्यादिस्मृतेः, **'द्वा सुपर्णा'** इति **पृथगात्मानं प्रेरितारं च मत्वेत्यादि**-श्रुतीनाम्, **नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्च, कर्तृकर्मव्यपदेशादि**त्यादिसूत्राणाञ्च का गतिरिति चेत्, अत्रोच्यते—निर्विशेषे ब्रह्मणि शास्त्रतात्पर्ये तात्पर्यलिङ्गैः निर्णीते सकलोऽपि लौकिको वैदिकश्च भेदव्यवहारः तत्प्रमाणगम्यः प्रबलाद्वैत-श्रुतेरनुरोधाद् अविद्यावद्विषय एव। न विद्या अविद्या, सा अस्यास्तीति अविद्यावान्, तमविद्यावन्तमाश्रित्य इमे भेदविशेषविकल्पव्यवहारा अनादिकालात् प्रवर्तन्ते। का नामाविद्येति चेत्, अध्यासः। तमेतमध्यासमविद्येति पण्डिता मन्यन्ते तद्विपरीताविद्यामाहुरिति भाष्यात्। तत्त्वज्ञानेन सर्वव्यवहाराविद्योच्छेदे सर्वव्यवहारोच्छेदे ब्रह्ममात्रमवशिष्यते। मायाविद्ययोर्नास्ति भेदः। मायाया एवाविद्या भेदविशेषः। सा चानिर्वचनीयानादिर्भावरूपाधिष्ठान-तत्त्वसाक्षात्कारनिवर्त्येति भाष्यभामतीकल्पतरुप्रभृतिषु ग्रन्थेषु खण्डनचित्सुख्य-द्वैतसिद्धिप्रकरणग्रन्थेषु च विस्तरेण प्रतिपक्षनिराकरणपूर्वकं वर्णिता। श्रुतिस्मृतिपुराणेतिहासादौ च मायाया वर्णनं तस्या अनृतत्वं मिथ्यात्वमसकृद् वर्णितम्।

तत्र नैवेह किञ्चनाग्र आसीत् तम आसीत्। अनृतेन प्रत्यूढम्। अतोऽन्यदार्तम्। 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतयः, 'मम माया दुरत्यया मायामेतं तरन्ति ते' इत्यादिस्मृतयः, मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्, मायायां सर्वसम्भवाद् इत्यादिसूत्राणि च प्रमाणम्।

एवम् अहमज्ञः मामहं न जानामीति प्रत्यक्षमपि प्रमाणम्। एवं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितप्रकाशकत्वाद् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावद् इति विवरणोक्तम्, देवदत्तप्रमा स्वप्रमाप्रागभावातिरिक्तानादिनिवर्त्तिका प्रमाणत्वात् यज्ञदत्तप्रमावद् इति तत्त्वप्रदीपिकायाम् उक्तमनुमानमपि प्रमाणम्।

ख्यातत्वे सति बाध्यत्वान्यथानुपपत्त्या मिथ्यात्वसिद्धिः। मिथ्या च मायैव सप्रपञ्चा। अत एव भामत्यां मङ्गले—

**"अनिर्वाच्याविद्याद्वितीयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोबवनयः"** इति। अद्वैतसिद्धौ च **"मायाकल्पितमावृतामुख-मृषाद्वैतप्रपञ्चाश्रयः"** इति चोक्तम्।

तथा च माया तत्कार्यभूतः सर्वोऽपि प्रपञ्चो मायिकत्वेन आविद्यिकत्वेन ब्रह्मणि अध्यस्तत्वेन अध्यासादेव लब्धसत्ताकत्वेन अन्ततो मिथ्या उच्यते, शुक्तिरजतादिवत्। प्रपञ्चितञ्चैतद् आरम्भणाधिकरणे भगवत्पादैः **वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति** श्रुतिव्याख्यानावसरे भामत्याञ्च सर्वप्रपञ्चस्य ब्रह्मविवर्तत्वमुक्तम्। एवञ्च असङ्गे ब्रह्मणि तद् विवर्तमेवैतत् माया-तत्कार्यादिकम्। ब्रह्म तु तादृशप्रपञ्चरहितं शुद्धबुद्धमुक्तस्वरूपमेव केवलम्। मायातत्कार्यप्रपञ्चस्य ब्रह्मणि तादात्म्येनाध्यासात् मिथ्यात्वमुक्तम्। एवञ्च अशेषाणां भेदानां मिथ्यात्वान्न पारमार्थिकत्वम्। अपि तु व्यावहारिकत्वमेव। चिद्भिन्नत्वे सति प्रतीयमानत्वे सति ब्रह्मप्रमातिरिक्ताबाध्यत्वं व्यावहारिकत्वं त्रिकालाबाध्यत्वं च पारमार्थिकत्वम्, प्रतिभासमात्रशरीरत्वञ्च प्रातिभासिकत्वमिति त्रिविधसत्ताङ्गीकारेण लोकव्यवहारनिर्वाहोपपत्तेः। न च सत्तारूपस्य ब्रह्मण एकत्वात् कुतस्तस्य त्रैविध्यमिति वाच्यम्, एकस्या एव महासत्ताया ब्रह्मस्वरूपाया उपाधिगतत्वेन प्रतीयमानत्वाद् व्यवह्रियमाणत्वाच्च भेदोपपत्तेः। न च भगवत्पादैः क्वचिदपि व्यावहारिकी सत्ता नोक्तेति वाच्यम्—आरम्भणाधिकरणे तस्याः स्पष्टमुक्तत्वात्। तथा हि 'ननु एकत्वैकान्ताभ्युपगमे नानात्वाभावात् प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन् निर्विषयत्वात्, स्थाण्वादिष्विव पुरुषज्ञानानि। तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात् तदभावे व्याहन्येत। मोक्षशास्त्रस्यापि शिष्यशास्त्रादिभेदापेक्षत्वात् तदभावे व्याघातः स्यात्। कथञ्चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वविज्ञानस्य सत्यत्वमुपपद्येतेति? अत्रोच्यते—नैष दोषः, सर्वव्यवहाराणामेव प्राग्ब्रह्मतात्मताविज्ञानात् सत्यत्वोपपत्तेः। स्वप्नव्यवहारस्येव प्राक्प्रबोधात्। यावद्धि न सत्यात्मैकत्वप्रतिपत्तिस्तावत् प्रमाणप्रमेयफललक्षणेषु विकारेषु

अनृतत्वबुद्धिर्न कस्यचिदुपपद्येत। विकारानेव तु अहं ममेत्यविद्यया आत्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा। तस्मात् प्राग् ब्रह्मात्मताप्रतिबोधाद् उपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः (ब्र.सू. आरम्भणाधिकरणे-२.१.४)।

असत्येनापि सत्यस्य प्रतिपत्तिर्भवति। असत्येन लिपिज्ञानेन वर्णज्ञानवत्। असत्येनापि शङ्काविषादिना मरणोपलब्धेः। एवञ्च न कोऽपि दोषः।

**तत्तु समन्वयादिति** सूत्रे (ब्र.सू. १.१.४) अन्ते—

**देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।**
**लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्।।** इत्युक्तम्।

आ आत्मनिश्चयादिति च्छेदः। आ ब्रह्मात्मैकविज्ञानात् लौकिकं प्रमाणं सर्वव्यवहारस्येति भावः। एवं च ब्रह्मातिरिक्तस्य सर्वस्यैव विकारजातस्य विवर्तस्य ब्रह्मव्यतिरेकेणाभावः आरम्भणाधिकरणे प्रतिपादितः। तस्मात् कार्यकारणयोरनन्यत्वमिष्यते। जीवस्य तु वस्तुतो ब्रह्मरूपत्वान्न कार्यत्वम्। अनन्यत्वं नाम नाभेदः, अपि तु तद्व्यतिरेकेणाभावः। ब्रह्मसत्तातिरिक्त-सत्ताकत्वाभाव इत्यर्थः। अत एव तत्रैव भामत्यामुक्तम्—**'न खल्वनन्यत्वमित्य-भेदं ब्रूमः किन्तु भेदं व्यासेधाम'** इति। ततश्च नाभेदाश्रयदोषः। अयं न्यायः सर्वप्रपञ्चाभावस्य ब्रह्माभिन्नत्वपक्षेऽपि योज्यः। एतेन एकविज्ञाने कारणरूपैकब्रह्मविज्ञानेन सर्वस्य विकारस्य विज्ञानं कारणातिरेकेण नास्तीत्युपपद्यते। वाचारम्भणमित्यस्यार्थः वाचारम्भणं वाचया केवलमारभते विकारजातं न तु तत्त्वतोऽपि यतो नामधेयमात्रमेतत्। यथा पुरुषस्य चैतन्यमिति, राहोः शिर इति विकल्पमात्रम्। तथा चावस्तुतया अनृतं विकारजातं मृत्तिकेत्येव सत्यम्। तस्माद् घटशरावादीनां तत्त्वं मृदेव। मृदि ज्ञातायां सर्वेषां तेषां घटशरावादीनां तत्त्वं ज्ञातं भवति। तथैव प्रपञ्चविकारोऽनृतो ब्रह्मैवैतस्य तत्त्वं तस्मिन् ज्ञाते ब्रह्मव्यतिरेकेण नास्तीति भवति बुद्धिः।

एवं सर्वप्रपञ्चस्य विकारस्यानृतत्वमुक्तम्। अनृतं मिथ्यैव। मिथ्यात्वञ्च पञ्चविधं विविधाचार्यमतेन व्युत्पादितमद्वैतसिद्धिग्रन्थे। सत्त्वासत्त्वात्यन्ता-भाववत्त्वम्, स्वप्रतिपन्नोपाधौ त्रैकालिकाभावप्रतियोगित्वं, ज्ञाननिवर्त्यत्वं स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं सद्विविक्तत्वं वेति पञ्चधा मिथ्यात्वं व्युत्पादितम्। मिथ्यात्वस्यापि मिथ्यात्वमुपादितं तत्रैव। न च मिथ्यात्वमिथ्यात्वे प्रपञ्चसत्यत्वापत्तिः, उभयोर्दृश्यत्वेन एकबाधकब्रह्मविज्ञानेन बाध्यत्वोपपत्तेः।

तथा हि अद्वैतसिद्धौ मिथ्यात्वमिथ्यात्वप्रकरणे मिथ्यात्वस्य मिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तेः। तत्र हि विरुद्धधर्मयोः एकमिथ्यात्वेऽपरसत्यत्वं यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत्। यथा परस्परविरहरूपयोः रजतत्वतद-भावयोः। यथा वा परस्परविरहव्यापकयोः रजतभिन्नत्वरजतत्वयोस्तत्रैव, तत्र निषेध्यतावच्छेदकभेदनियमात्। प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि। यथा गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यमिति नैकतरनिषेधे अन्यतरसत्त्वं तद्वत्। सत्यत्वमिथ्यात्वयोर्न परस्परविरहरूपत्वं न वा परस्परविरहव्यापकत्वमित्यपि प्रथममिथ्यात्वप्रकरणे अद्वैतसिद्धौ व्युत्पादितम्।

सत्त्वं च त्रिकालाबाध्यत्वरूपं तद्व्यतिरेको नासत्त्वमपि तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वमेव। तयोश्च व्यतिरेकः साध्यत्वेन विवक्षितः। सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं मिथ्यात्वं साध्यत्वेन विवक्षितम्। तच्च त्रिकालाबाध्यत्वविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वं साध्यं पर्यवसितम्। तथा च न साध्यवैकल्यादि शुक्तिरूप्यादौ। परस्परविरह-व्यापकत्वमपि नास्ति सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारात्। परस्परविरहव्याप्यत्वं तु न व्याघातकं गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोः उष्ट्रादावेकत्र सहोपलम्भात्। इत्थं प्रथममिथ्यात्वे विचारितम्।

एवञ्च सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वं परस्परविरहव्यापकत्वं नास्ति। अतः नैकाभावेऽपरस्य सत्त्वप्रसङ्गः। किञ्च परस्परविरहरूपत्वेऽपि विषमसत्ताकयोरविरोधात्। व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारात्। शुक्तिरूप्यादौ व्यावहारिकस्य मिथ्यात्वस्य प्रातीतिकस्य सत्यत्वस्य च दृष्टत्वेन प्रपञ्चेऽपि तादृशे ते कल्प्येते, तार्किकमतसिद्धसंयोगतदभाववत्। ननु कुत्र समा सत्ता कुत्र विषमेति किं नियामकम् इति चेत्? उच्यते, एकस्य साधकेन अपरस्य बाध्यत्वं विषमसत्ताकत्वे प्रयोजकम्। यथा शुक्तिरूप्यशुक्तिभिन्नत्वयोः। अस्ति च प्रपञ्चतन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वमतः समसत्ताकत्वात्। मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधानान्नाद्वैतक्षतिरिति मिथ्यात्वमिथ्यात्वप्रकरणेऽद्वैतसिद्धावुक्तम्, चन्द्रिकायाञ्च विस्तरेण व्याख्यातम्।

ननु प्रत्यक्षादिप्रमाणेन भेदप्रपञ्चस्य सत्यत्वे सिद्धे कथं श्रुत्या मिथ्यात्वं प्रतिपाद्यते? विपरीतमेव कुतो न, प्रत्यक्षस्य प्रमाणजस्य प्राधान्यात् प्रबलत्वाच्च, श्रुतेश्च प्रत्यक्षोपजीवित्वाद् दौर्बल्यम्। तथा चोपजीव्यस्य

प्रत्यक्षस्योपजीवकेनागमेन बाधने युक्त उपजीव्यविरोध इति चेन्न, सम्भवत्पुंगतदोषवत्त्वेन वर्तमानमात्रग्राहित्वेन लोकसिद्धभेदानुवादकत्वेन च दुर्बलप्रत्यक्षापेक्षया अपौरुषेयतया सकलपुंगतदोषराहित्येन ईश्वरादिपरिगृहीताया इतरसर्वप्रमाणानपेक्षत्वेन स्वतःप्रमाणभूतश्रुतेः प्राबल्यात्। प्रत्यक्षस्य व्यावहारिकत्वमेवोपजीव्यश्रुतेः प्रवृत्तेः। स्वोत्पत्तिं प्रत्येव श्रुतिः प्रत्यक्षमपेक्षते न स्वार्थज्ञप्तौ। तथा च यदुपजीव्य प्रवर्तते व्यावहारिकत्वं तन्न श्रुत्या प्रत्यक्षस्य बाध्यते। बाध्यते पारमार्थिकत्वम्। तन्नोपजीव्यम्। तथा च प्रत्यक्षस्य व्यावहारिकप्रामाण्यं नोपहन्ति श्रुतिः, अपि तु पारमार्थिकत्वमेव। प्रत्यक्षसिद्धो भेदो न व्यावहारिकोऽपीति न श्रुतिर्वदति अपि तु पारमार्थिको भेदो नास्तीति। तस्मान्न प्रत्यक्षबाधादिदोषः। प्रपञ्चमिथ्यात्वमित्यस्य परमार्थरूपेण प्रपञ्चो न सन्नित्यर्थः, न तु व्यावहारिकी सत्ता प्रतिषिध्यते। तस्माद् लौकिकवैदिकव्यवहारसिद्धिः।

एतत् जगन्मिथ्यात्वं षड्विधतात्पर्यलिङ्गोपेताद्वैतश्रुतिप्राबल्याद् व्यवस्थाप्यते। अन्यथा अद्वैतश्रुतेरनुपपत्तेः। एवञ्चाद्वैतश्रुत्यन्यथानुपपत्त्या लोकव्यवहारसिद्ध्यर्थश्चेयं व्यवस्था। खण्डनकाराणामपि सर्वलक्षणखण्डने इदमेव तात्पर्यं. व्यावहारिकं सर्वं तथास्तु पारमार्थिकं तु सर्वनिषेधशेषभूतं ब्रह्मैवेति। अत एवोक्तं—स्वप्रकाशत्वसाधनप्रसङ्गे खण्डने सर्वतो बलवती ह्यन्यथानुपपत्तिः तथा दृष्टतामात्रमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते—

**अन्यथानुपपत्तिश्चेद् अस्ति वस्तुप्रसाधिका।**
**पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका।।**
**वाच्यान्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः।**
**न ह्येकत्र समावेशः छायातपवदेतयोः।।** इति। (खण्डन., पृ. ६१)

**तदद्वैतश्रुतेस्तावद् बाधो न प्रत्यक्षतः क्षतः।**
**नानुमादि तं कर्तुं तवापि क्षमते मते।।** (खण्डन., श्लो. २०)

**अद्वैतागमनासीरे साधु वा धुन्वती परान्।**
**सेवाभेवार्जयत्यर्थापत्तिपत्तिपरम्परा।।** (खण्डन., श्लो. २१)

नासीरे = सेनाया अग्रे संगरे वा इत्यर्थः। पत्तिः पदातिः सेना।

एवमग्रे भेदस्य व्यावहारिकत्वे उक्तम्—'न वयं भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः। किं नाम परमार्थिकमसत्त्वम्। अविद्याविद्यमानत्वं तु तदीष्यत एव। तदेव कार्यकारणभावोपयोगि' इति।

एवं खण्डनकाराणां प्रपञ्चानिर्वचनीयतायां तात्पर्यम्। अनिर्वाच्यत्वञ्च सत्त्वासत्त्वोभयत्वेन निर्वक्तुमयोग्यत्वं तच्च प्रपञ्चस्याक्षतम्।

अपि च जीवब्रह्मणोरैक्यमेव श्रुतिसिद्धमद्वैतमतेऽङ्गीक्रियते।

ननु किमिदम् ऐक्यम्, आत्मस्वरूपम् उतान्यत्? प्रथमे एकतरपरिशेषापत्तेः। जीवो वा स्याद् ब्रह्म वेति। उभयोः स्वरूपमात्मस्वरूपमेव। किञ्च उभयसापेक्षस्यैक्यस्य निरपेक्षात्मत्वायोगात्। द्वितीये सत्यत्वेऽद्वैतहानिः, मिथ्यात्वे तत्त्वमसीत्यादेरतत्त्वावेदकतापत्तेरिति चेन्न, प्रथमपक्षे दोषाभावात्। ज्ञानानन्दयोरात्मैक्येऽपि यथा नैकतरपरिशेषादिकं कल्पितानन्दत्वादिधर्मात् तथा प्रकृतेऽपि सम्भवात्। जीवत्वादेः कल्पितत्वात्। न हि कल्पितेन भेदेन जीवत्वब्रह्मत्वादिना वास्तविकस्यैकतरपरिशेषस्य निवृत्तिरस्ति, तादृश-परिशेषस्येष्टत्वात्। एवमैक्यं ब्रह्मस्वरूपं प्रत्यगात्मस्वरूपं वेति। उभयोर्न ब्रह्मत्वेन जीवत्वेन वा कल्पितेन भेदेन एकस्वरूपस्य हानिः। ऐक्यस्यात्मस्वरूपत्वात् न सापेक्षत्वं स्वरूपस्य सापेक्षत्वाभावात्। न हि घटस्वरूपमन्यसापेक्षम्। संसारकाले चैक्यविषयकवृत्त्यभावाद् अज्ञाननिवृत्तेरभावात् तत्रात्मनि संसारोपपत्तिः।

आत्मस्वरूपातिरिक्तपक्षस्तु नाभ्युपगम्यते। ऐक्यं नात्मातिरिक्तम्। अत एव नैकत्वसंख्या, न वात्मनिष्ठः कश्चिद्धर्मविशेषो निर्धर्मकत्वादात्मनः। नाप्यभेदः, तस्य भेदाभावरूपत्वेऽन्योन्याश्रयाद् भेदस्य ऐक्यविरहरूपत्वेन ऐक्यस्य च भेदविरहरूपत्वेन चान्योन्याश्रयः। न च ब्रह्मावृत्तिधर्मानधिकरणत्वमैक्यम्, शून्यस्य वन्ध्यापुत्रादेः निःस्वरूपस्य ब्रह्मैक्यापत्तेः। अत ऐक्यं ब्रह्मस्वरूपम्। तच्च जीवावृत्तिधर्मानधिकरणत्वोपलक्षितात्मस्वरूपम्। एवं ऐक्यमभेदः जीवावृत्तिधर्मानधिकरणत्वोपलक्षितस्वरूपः। जीवेऽवृत्तयो ये धर्मा सर्वज्ञत्वादयः तद्धर्मानधिकरणोपलक्षितत्वं ब्रह्मणि, न तु तद्धर्मविशिष्टत्वम्। निर्धर्मकत्वात्। उक्तोपलक्षितत्वमपि न कश्चिद् धर्मः, अपि तु तत्स्वरूपमेव।

शून्यस्य निःस्वरूपत्वात् न तत्रैक्यम्। शून्यस्य वन्ध्यापुत्रादेः निःस्वभावस्य निःस्वरूपस्य च न केनचिद् धर्मेण विशिष्टत्वमुपलक्षितत्वञ्च। तादृशे जीवब्रह्मणोरैक्ये अभेदे जीवावृत्तिधर्मानधिकरणत्वोपलक्षितात्म-स्वरूपेऽङ्गीकृते न कोऽपि दोषः। ननु तत्राभेदे अभेदत्वं पारमार्थिकत्वमसद्-वैलक्षण्यमित्यादयो धर्माः सन्ति तत्त्वतो न वा, आद्ये द्वैतापत्तिः, द्वितीये अभेदत्वादिहानिः। अभेदे आत्मस्वरूपे अभेदत्वपारमार्थिकत्वादेः तत्त्वतोऽभावात् संसारवत् तद्धानिः स्यादेव। नहि अभेदत्वं धर्मं विना अभेदः, पारमार्थिकत्वधर्मं विना कश्चित् पारमार्थिको वा भवतीति चेन्न, स्वरूपभूतेऽभेदे ऐक्ये वा

अभेदत्वादयो न धर्माः, अपि तु वस्तुतो ब्रह्मस्वरूपभूता एव। एवञ्च वस्तुतः स्वरूपभूतैः तैः नाभेदहानिः, न च अद्वैतहानिरिति।

ननु अभेदस्तावत् त्वया अबाधितात्मस्वरूप एवाङ्गीकृतः एतावता परिष्काराडम्बरेण। स चात्मस्वरूपः केन नाङ्गीक्रियते। आत्मनः अन्यस्य वा स्वरूपमबाधितमङ्गीक्रियत एवेति का अपूर्वता इति चेन्न, जीवावृत्ति-धर्मानधिकरणत्वोपलक्षितात्मस्वरूपस्याभेदरूपस्य कैश्चिदप्यनङ्गीकारात्।

जीवब्रह्मणोरैक्ये तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतयः, क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत, अहमात्मा गुडाकेश सर्वभूताशयस्थित इत्यादिस्मृतयश्च प्रमाणम्।

न च तत्त्वमसीत्यादौ सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्माक्रान्तत्वात् कथं तयोरभेद इति वाच्यम्, तत्त्वंपदयोः भागत्यागलक्षणया विरुद्धांशपरित्यागेना-विरुद्धांशचैतन्यमात्रपरत्वात्।

एतत् सर्वमद्वैतसिद्धौ जीवब्रह्मणोरैक्यप्रकरणे विस्तरेण निरूपितम्। अनुमानमपि—जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मवात्, परमात्मवत्। आत्मत्वमेकत्वव्याप्यम् आत्ममात्रवृत्तित्वात् चैत्रत्ववद् इत्यादि। एवञ्च जीवब्रह्मणोरैक्यं सिद्धम्। तस्मिंश्च सर्वेषां वेदान्तानां तात्पर्यमिति सिद्धान्तः। अमुं प्रतिपादयितुं सुदीर्घा ग्रन्थानां परम्परा दार्शनिकवाङ्मयमलङ्करोति।

अयम् **अद्वैततत्त्वतरङ्गिणी**नामा ग्रन्थः श्रीमद्भिः महाविद्वद्भिर्न्याय-वेदान्तादिशास्त्रनिष्णातैः गुरुवर्यैः **श्रीराजारामशुक्लमहोदयैः** नैयायिकैरपि निरतिशयाद्वैतरसरसिकैः अद्वैतसिद्ध्यादिग्रन्थान् सूत्रभाष्यभामती-कल्पतरुविवरणाद्याकरग्रन्थांश्च सम्यगधीत्य लब्धपाण्डित्यैर्विरचितः। अत्र श्रमयत्नप्रतिभाप्रणीते ग्रन्थे लघुकलेवरेऽपि अद्वैतसिद्धान्ता आचार्यपरम्परानुप्राणिताः कौशलेन युक्तिभिः लाघवेन प्रदर्शिताः ग्रन्थकर्तॄणां प्रतिभां निपुणसूक्ष्मेक्षिकाञ्च प्रकटयन्ति। अतिगभीरमद्वैतशास्त्रं सम्यगालोड्य तस्मात् सुधामिव क्षीरसागरात् श्रीमद्भिः विद्वद्वरेण्यैः संगृह्य प्रकाशितं ग्रन्थरत्नं अद्वैततत्त्वजिज्ञासूनां छात्राणां विदुषाञ्च महोपकाराय भविष्यतीत्याशास्य ग्रन्थरत्नमिदं साम्बसदाशिवचरणारविन्दयोः सभक्तिश्रद्धमुपायनीकरोमि।

इत्थं विद्वद्विधेयः

**राजेश्वरद्विवेदी**

# अद्वैततत्त्वतरङ्गिणी

भगवत्पादपादाब्जद्वैततत्त्वमुपाश्रये।

अद्वैततत्त्वधीस्तस्मादकस्मादेव जायते।।१।।

पूर्वाचार्यप्रवचनलब्धानर्थानतीवगम्भीरान्।

विवृणोमि बालमतिमान् बालमतीनां कृते कुतुकात्।।२।।

परिशील्य शास्त्रनिचयं रचिता मयका तरङ्गिणी सैषा।

अद्वैतामृतसिन्धोर्द्वारास्तामस्मदादीनाम्।।३।।

**'सदेव सोम्येदमग्र आसीद्, एकमेवाद्वितीयम्'** (छा.उ. ६-२-१) इत्यादिश्रुत्यनुरोधेन अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वं सिध्यति। तथा हि— उक्तश्रुत्याऽद्वैतत्वोपलक्षितब्रह्मनिर्विकल्पकबोधो जायते, तत्र च द्वैताभावविशिष्ट-बुद्धिर्द्वारम्। सा चाभावबुद्धिः, अभावबुद्धेश्च प्रतियोगिविशिष्टज्ञानपूर्वकत्वनियमः। तथा च एकमेवाद्वितीयमित्यादिश्रुत्या जायमाना बुद्धिः द्वैतवद्ब्रह्मणि द्वैताभाव-विषयिणी। सदेव सौम्येदमग्र आसीदिति पूर्ववाक्येन द्वैतविशिष्टब्रह्मणो लाभ इत्युक्तबुद्धौ द्वैतवत्त्वमुद्देश्यतावच्छेदकम्। उद्देश्यतावच्छेदककालावच्छिन्नत्वस्य विधेये भाननियमेन द्वैताभावे द्वैतवत्त्वकालावच्छिन्नत्वं भासते। तथा च द्वैतवद् ब्रह्म द्वैतवत्त्वकालावच्छेदेन द्वैताभाववदिति बोधः। ननु एकवाक्यतापन्नाभ्यां पूर्वोत्तरवाक्याभ्यां द्वैतविशिष्टसतोऽग्रकालसत्त्वं द्वैताभाववत्त्वं चेति द्वयोर्विधाने वाक्यभेदः स्यादिति चेत्, सत्यं, तादृशवाक्यभेदस्येष्टत्वात्। ननु द्वैतवद्ब्रह्म द्वैताभाववदिति बुद्धिराहार्येति कथं तस्याः शाब्दबोधरूपत्वं, प्रत्यक्षातिरिक्तस्याहार्यस्यास्वीकारादिति चेत्? न, उद्देश्यघटकद्वैतबोधकेदंपदं दृश्यत्वेन रूपेण सकलदृश्यपरं, विधेयघटकञ्चात्मभिन्नत्वेनेति रूपभेदादाहार्यत्वाभावात्। द्वैतवत्त्वकालावच्छेदेनेति कथनस्यायमभिप्रायः–ब्रह्मणि कालान्तरावच्छेदेन द्वैताभावबोधनन्तु **'तरति शोकमात्मवित्, विद्वान् नामरूपाद्विमुक्तः'** (छा.उ. ७-१-३) इत्यादिश्रुत्या दृश्यत्वादिहेतुकानुमानेन च सिद्धमिति तदर्थं वाक्यवैयर्थ्यं स्यात्, अतो द्वैतवत्त्वकालावच्छेदेन द्वैताभावबोधनम्। एवञ्च एककालावच्छेदेनाभावप्रतियोगिनोरेकाधिकरणवृत्तित्व-ज्ञानरूपमिथ्यात्वनिश्चयः।

एवमेव **'यः सर्वज्ञः'** (मु.उ. १-१-९) इत्यादि-सार्वज्ञ्य-सर्वोपादान-कत्वादिबोधकश्रुतिजन्यनिर्विकल्पकबोधस्यापि द्वैतमिथ्यात्वसिद्धिपूर्वकत्वम्। तथा हि, उक्तश्रुत्या द्वैतवत्त्वोपलक्षितब्रह्मबोधनेन उपलक्ष्यविषयकज्ञाने उपलक्षणीभूत-धर्मविशिष्टज्ञानस्य हेतुतया तादृशबोधात्प्राग् द्वैततादात्म्यविशिष्ट-बुद्धिरवश्यमपेक्षिता। यद्यपि यः सर्वज्ञ इत्यादिलक्षणवाक्येन सर्वज्ञत्वोपलक्षित-ब्रह्मणो बोधस्तत्पूर्वञ्च उक्तन्यायेन सर्वज्ञत्वविशिष्टबुद्धिरेवापेक्षिता न तु द्वैततादात्म्यबुद्धिः, तथापि सर्वज्ञत्वं सर्वतादात्म्यञ्चैकमेव, ब्रह्मणि सर्वविषयकत्वस्य सर्वतादात्म्यरूपत्वात्। एवमेव सर्वोपादानत्वमपि स्वात्मक-सर्वजनकत्वमिति तदपि ब्रह्मनिष्ठद्वैततादात्म्यघटितमेव। तथा च **'यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्मनामरूपम्'** (मु.उ. १-१-७) इत्यादि-श्रुतिजन्यबोधाद् द्वैतवद्ब्रह्मनिष्ठावच्छिन्नवृत्तिकान्याभावप्रतियोगि द्वैतमिति मिथ्यात्वनिश्चयपूर्वकत्वं सार्वज्ञ्यादिबोधकश्रुतिजन्यनिर्विकल्पकबोधस्य सिद्धम्।

एवमेव **तत्त्वमस्यादि**-(छा.उ. ६-९-४) महावाक्यजन्याद्वैतनिश्चयस्यापि द्वैतमिथ्यात्वधी-(छा.उ. ६-९-४) पूर्वकत्वम्। तथा हि—**'नेह नानाऽस्ति किञ्चन नात्र काचन भिदाऽस्ति'** (बृ.उ. ४-४-१) इत्यादिना वर्तमानकालावच्छेदेन द्वैतवत्त्वकालावच्छेदेन च द्वैतविशिष्टे ब्रह्मणि अस्तित्वविशिष्टद्वैताभावो बोध्यते। यतः उक्तवाक्ये अस्तीति लट्प्रत्ययः वर्तमानार्थः, इहेति पदञ्च द्वैतविशिष्टब्रह्मरूपोद्देश्यसमर्पकम्। यदि च मिथ्यात्वघटकात्यन्ता-भावोऽवच्छिन्नवृत्तिकान्यस्तदा द्वैतविशिष्टब्रह्मणि निरवच्छिन्नविशेषणतासम्बन्धेन द्वैताभावनिश्चयरूपो मिथ्यात्वनिश्चयः। ननु श्रुतिघटकेहपदेन ब्रह्मरूपोद्देश्यस्य द्वैताभावे तद्वृत्तित्वरूपविधेयस्य च समर्पणे एकेनैव पदेनोद्देश्यविधेयोभयसमर्पणे एकप्रसरताभङ्गापत्तिरिति चेत्?, न, इहेत्यनेन ब्रह्मनिरूपितत्वरूपोद्देश्यस्य अस्तीत्यनेन चाधेयत्वस्य समर्पणेनोक्तापत्त्यभावात्। ननु इहेत्यनेन द्वैतवद्ब्रह्मरूपोद्देश्यस्य कथं समर्पणं, तस्याप्रक्रान्तत्वादिति चेत्? न, इतः पूर्वं **'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः'** इति वाक्ये **'प्राणस्य प्राणमुत चक्षुषश्चक्षुः'** (बृ.उ. ४-४-१८) इति वाक्ये च आकाशशब्दिता-व्याकृतप्राणादिसम्बन्धितया ब्रह्मण एवोक्तत्वादिति। यथा **'यस्य ब्रह्म च क्षत्रञ्चेति'** (कठो. १-२-२४) वाक्ये ब्रह्मक्षत्रपदयोः सर्वदृगुपलक्षणत्वं तथैव उक्तश्रुतौ पञ्चजनपदस्य प्राणस्येत्यादेश्च सर्वदृश्योपलक्षणत्वसम्भवात् द्वैतविशिष्टब्रह्मणः पूर्वमुक्तत्वाद् इहेतिपदेन तस्य परामर्शसम्भवात्।

एवं द्वैतमिथ्यात्वस्य प्रकृतोपयोगित्वे स्थिते विप्रतिपत्तिजन्यसंशयस्य विचाराङ्गतया प्रथमं सा प्रदर्शनीया। ननु विचारशब्दोऽत्रानुमितिपरः। तथा चानुमितिं प्रति संशयस्योपयोगित्वं संशयपक्षतापक्षे एव सम्भवति, संशयपक्षतायाश्च नव्यैरस्वीकारात्, यतः **'श्रोतव्यो मन्तव्य'** (बृ.उ. ४-२-५) इति श्रुत्या श्रवणान्तरं मननबोधनात् मननपदेन चानुमितेरेव विवक्षितत्वात् संशयपक्षतापक्षे उक्तश्रुतिविरोधः स्यात्, श्रुत्या आत्मविषयकशाब्दबोधानन्तरं तद्विषयकसंशयासम्भवेन पुनस्तद्विषयकानुमितिर्न स्यात् तत्कारणीभूतायाः संशयरूपपक्षतायास्तत्राभावात्। अतः सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वं स्वीकृतम्। तत्र च संशयस्याघटितत्वान्न तस्यानुमित्यङ्गत्वम्। किञ्च **'निश्चितौ हि वादं कुरुतः'** इति वाचस्पतिमिश्रोक्तरीत्या वादिप्रतिवादिनोः स्वस्वविषये निश्चयस्यैव सत्त्वेन तत्र संशयोदय एव न भवति। कथञ्चित् संशयस्वीकारे तु तादृशसंशयस्याहार्यत्वेनाहार्यपरामर्शादप्यनुमितिः स्यात्। अतोऽपि संशयस्य न विचाराङ्गत्वमिति चेत्?

अत्रोच्यते, यद्यप्युक्तरीत्या विप्रतिपत्तिजन्यसंशयस्यानुमित्यनङ्गत्वं तथापि व्युदसनीयतया तस्य विचाराङ्गत्वमस्त्येव। तथा हि—अत्र विचारसाध्याभावः- संशयाभावः, तत्प्रतियोगी संशयः, तज्जनकत्वं विप्रतिपत्तिवाक्यस्येति। तथा च विचारसाध्याभावप्रतियोगिसंशयजनकत्वेन विप्रतिपत्तिवाक्यस्य विचाराङ्गत्वम्।

अत्र विप्रतिपत्तिवाक्यस्य संशयं प्रति जनकत्वं स्वरूपयोग्यत्वरूपं ग्राह्यं न तु फलोपहितत्वरूपम्, अन्यथा वादिप्रतिवादिनोः क्वचित् स्वस्वविपयकनिश्चयेन तादृशसंशयस्य प्रतिबन्धाज्जनकत्वं न स्यात्।

निश्चितौ हि वादं कुरुतः इति वचनं तु निश्चयाभिमानपरं न तु वास्तविकनिश्चयपरम्, अन्यथा विपरीतनिश्चयवतोऽपि परपक्षखण्डनाय जल्पादौ प्रवृतिर्न स्यात्। अतः वादिप्रतिवादिनोः निश्चयवत्त्वे नियमाभावः। तस्मात् विचारात्पूर्वं विप्रतिपत्तिर्मध्यस्थेन प्रदर्शनीयैव। तथा चात्र विप्रतिपत्ती—

(१) ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वा?

(२) ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगि न वा?

पक्षे त्रैकालिकनिषेधप्रतियोगित्वतदभावरूपविरुद्धकोटिद्वयोपस्थापकत्वेनास्य वाक्यस्य विप्रतिपत्तिरूपत्वम्।

अत्र ब्रह्मप्रमातिरिक्ताबाध्यत्वं, सत्त्वेन प्रतीत्यर्हत्वं चिद्भिन्नत्वञ्चेति त्रयं धर्मितावच्छेदकम्। तत्र ब्रह्मप्रमातिरिक्ताबाध्यत्वरूपप्रथमधर्मितावच्छेदकानुपादाने शुक्तिरूप्ये सिद्धसाधनं, तत्र सत्त्वेन प्रतीत्यर्हत्वस्य चिद्भिन्नत्वस्य च सत्त्वेन तस्य पक्षान्तर्गतत्वात्तत्र च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य सिद्धत्वात्।

नन्वेवं साध्यसिद्धौ सत्यामपि का हानिः? पक्षतावच्छेदकसामानाधिकरण्येन सिद्धेः तत्सामानाधिकरण्येनानुमितावप्रतिबन्धकत्वेनादूषकत्वादिति चेत्? न, प्राचीनमते सामानाधिकरण्येनानुमितिं प्रति सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वेऽपि नवीनमते तस्याः प्रतिबन्धकत्वस्वीकारात्। तथा चोक्तस्थले प्राचीनमते दोषाभावेऽपि नव्यमते शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराबाध्यत्वविशेषणमावश्यकम्।

यदि चात्रावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्या तदा नव्यमते अवच्छेदकावच्छेदेनानुमितिं प्रति सामानाधिकरण्येन सिद्धेरप्रतिबन्धकत्वात् ब्रह्मज्ञानेतराबाध्यत्वविशेषणमनावश्यकमेव। प्राचीनमते तूक्तरीत्यांऽशतः सिद्धसाधनवारणाय तदावश्यकमिति भावः।

सत्त्वेन प्रतीत्यर्हत्वरूपविशेषणानुपादाने तुच्छे बाधः स्यात्, ब्रह्मप्रमातिरिक्ताबाध्यत्वचिद्भिन्नत्वयोस्तत्र सत्त्वेन तस्य पक्षान्तर्गततया तत्र उक्तसाध्यस्याभावात्। तदुपादाने च न तस्य पक्षान्तर्गतता।

चिद्भिन्नत्वानुपादाने ब्रह्मणि बाधः स्यात्।

वस्तुतस्तु उक्तविशेषणद्वयमवच्छेदकावच्छेदेनानुमितिपक्ष एवोपादेयम्। सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येनानुमितिं प्रति सामानाधिकरण्येन बाधस्याप्रतिबन्धकत्वादुक्तदोषस्याप्रसक्तौ तत्पक्षे एतद्विशेषणद्वयमनुपादेयमेवेति तात्पर्यार्थः।

इत्थं विप्रतिपत्तौ **विमतं मिथ्या दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वादिति** हेतुत्रयेण उक्तविप्रतिपत्तिविषयस्य मिथ्यात्वं सिध्यति।

अत्र हि सिषाधयिषितं मिथ्यात्वं कीदृशमिति जिज्ञासायां तत् पञ्चधा निरूपितम्—(१) सदसत्त्वानधिकरणत्वम् (२) प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् (३) ज्ञाननिवर्त्यत्वम् (४) स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वम् (स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वम्) (५) सद्विविक्तत्वञ्च। तत्रायं सङ्ग्रहश्लोकः—

**आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते।**

**चित्सुखीयं तुरीयं स्याद् अन्त्यमानन्दबोधजम्।।** इति।

तत्र 'मिथ्याशब्दः अनिर्वचनीयतावचनः' इति पञ्चपादिकानुसारं सदसत्त्वानधिकरणत्वरूपं प्रथमं मिथ्यात्वं लभ्यते।

ननु सदसत्त्वानधिकरणत्वं किं रूपं? सत्त्वविशिष्टासत्त्वाभावः, उत सत्त्वाभावासत्त्वाभाव इति धर्मद्वयम्, अथवा सत्त्वाभाववत्त्वे सत्यसत्त्वाभावरूपम्। तत्र प्रथमविकल्पस्वीकारे सिद्धसाधनं, तथा हि—द्वैतिमते जगतः सन्मात्ररूपत्वस्वीकारात् तत्र सत्त्वस्य सत्त्वेऽप्यसत्त्वस्यासत्त्वेन सत्त्वविशिष्टासत्त्वाभावः विशेष्याभावप्रयुक्तः सिद्ध एव।

द्वितीयविकल्पस्वीकारे सत्त्वाभावासत्त्वाभावरूपधर्मद्वयस्योक्तमतेऽपि जगत्यसिद्धत्वेन सिद्धसाधनवारणेऽप्युक्ताभावयोः परस्परं विरुद्धत्वेन सहानवस्थानात् तयोरेकत्र सत्त्वासम्भवेन व्याघातः स्यात्। किञ्च यथा निर्धर्मकत्वात् सत्त्वरहिते ब्रह्मणि सद्रूपत्वसत्त्वेऽप्यमिथ्यात्वं स्वीक्रियते तथैव सदसत्त्वानधिकरणस्य प्रपञ्चस्य अमिथ्यात्वमेव सिद्ध्येदित्यर्थान्तरमपि स्यात्।

एवं दृष्टान्तीभूते शुक्तिरूप्ये साध्यविकलताऽपि स्यात्, तथा हि सत्त्वं नाम अबाध्यत्वं, तदभावः सत्त्वाभावः, तस्य शुक्तिरूप्ये सत्त्वेऽपि बाध्यत्वरूपासत्त्वस्य अभावस्य अबाध्यत्वरूपस्य तत्रासत्त्वादिति।

अत एवोक्तदोषत्रयसत्त्वेन तृतीयविकल्पोऽपि न युक्त इति चेत्? न, तत्र द्वितीयपक्षस्यादुष्टत्वात्, द्वितीये तावत् दोषत्रयमुद्भावितं—व्याघातः, अर्थान्तरं साध्यविकलता चेति, ते न सङ्गच्छन्ते।

तथा हि, द्वितीयविकल्पे आपादितः व्याघातः किंरूपेण?, द्वयोः परस्परविरहरूपत्वेन? परस्परविरहव्यापकत्वेन? परस्परविरहव्याप्यत्वेन वा? तत्राद्यो विकल्पो न सम्भवति, तथा हि सत्त्वं यद्यपि त्रिकालाबाध्यत्वरूपं तथापि तदभावोऽत्र असत्त्वमिति नाङ्गीक्रियते, अपितु क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वरूपम्। तथा च त्रिकालाबाध्यत्वाभावः क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वञ्चेति धर्मद्वयं साध्यतया पर्यवसितम्। एवञ्च तयोः परस्परविरहरूपत्वाभावेन व्याघातो नास्ति।

इत्थञ्च अबाध्यत्वरूपस्य असत्त्वाभावस्य साध्यकुक्षावप्रवेशात् शुक्तिरूप्ये साध्यविकलतापत्तिरूपा तृतीयापत्तिरपि नास्ति।

द्वितीयविकल्पोऽपि न युक्तः, तथा हि परस्परविरहव्यापकत्वे यत्र सत्त्वाभावः तत्रासत्त्वं, यत्रासत्त्वाभावः तत्र सत्त्वम् इति व्याप्तिद्वयं लभ्यते। तथा च निरुक्तसत्त्वाभावाधिकरणशुक्तिरूप्यवृत्तित्वस्यैवासत्त्वाभावे सत्त्वेनोक्तद्वितीयव्याप्तेः व्यभिचारः स्यात्।

एवं तृतीयविकल्पोऽपि न सम्भवति, तस्य व्याघाताप्रयोजकत्वात्। अर्थात् परस्परविरहव्याप्यत्वसत्त्वेऽप्यव्याघात इष्यते। तथा हि—गोत्वमश्वत्वञ्च परस्परविरहव्याप्ये, किन्तु तदभावयोः उष्ट्रादौ एकत्र विद्यमानत्वं सिद्धम्।

द्वितीयापत्तिः अर्थान्तरमिति। सापि न सम्भवति। ब्रह्मवत् सत्त्वरहितस्य प्रपञ्चस्य सत्त्वरूपतां स्वीकृत्य आपत्तिर्दत्ता। किन्तु जगतः सत्स्वरूपत्वं नास्त्येव। सन् घटः, सन् पटः इत्याद्यनुगतप्रतीतीनाम् एकेनैव सद्रूपब्रह्मगतसत्त्वेन निर्वाहे सम्भवति प्रत्येकं प्रपञ्चस्य सद्रूपताकल्पने गौरवं स्यात्। विषयभेदेन प्रतीतिभेदस्याङ्गीकारात् प्रत्येकं प्रपञ्चस्य तत्तत्प्रतीतिविषयत्वाङ्गीकारे उक्तप्रतीतीनामवैलक्षण्यमपि न सिद्ध्येत्। तस्मात् उक्तप्रतीतिषु सर्वत्र उपहितचैतन्यमेव विषयतया भासत इत्येव वक्तव्यमिति नोक्तरीत्यार्थान्तरम्।

अथवा सत्प्रतियोगिकभेद-असत्प्रतियोगिकभेदद्वयं साध्यं करणीयम्। तथा च निर्धर्मकत्वाद्ब्रह्मणः सत्त्वराहित्येऽपि सद्भेदस्य तत्राविद्यमानत्वेन नोक्तरीत्याऽर्थान्तरमिति।

यस्मात् क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपस्यासत्त्वस्य स्वीकारेण द्वितीये विकल्पे व्याघात-अर्थान्तर-साध्यवैकल्यरूपदोषत्रयं वारितं, तस्मात् तादृशस्यैवासत्त्वस्याभावस्य साध्यकोटिप्रविष्टत्वेन तृतीयोऽपि विकल्पः—सत्त्वाभाववत्त्वे सत्यसत्त्वाभावरूपः साधुः, निरुक्तस्यैव दोषत्रयस्य तत्रापादितत्वात् निरुक्तरीत्यैव च तद्वारणस्यापि सम्भवादिति।

**विवरणकृ**न्मतानुसारेण द्वितीयं मिथ्यात्वं प्रतिपन्नौपाधौ त्रैकालिकनिषेध-प्रतियोगित्वरूपम्। अथायं त्रैकालिकनिषेधः अलीकः। तथा हि—कस्यापि वस्तुनः त्रिविधैव सत्ता सम्भाव्यते पारमार्थिकी, प्रातिभासिकी व्यावहारिकी चेति। तत्र यदि उक्तनिषेधस्य पारमार्थिकी सत्ता स्वीक्रियते तदा पारमार्थिकवस्तुद्वय-(ब्रह्म उक्तनिषेधश्च) स्वीकारेण अद्वैतहानिः स्यात्। यदि निषेधस्य प्रातिभासिकत्वं स्वीक्रियते तदा प्रातिभासिकनिषेधस्य प्रतियोगिभूत-प्रपञ्चगतसत्यत्वाविरोधितया प्रपञ्चे सत्यत्वाविरोधिनिषेधप्रतियोगित्वसाधने द्वैतमतसिद्धस्य साधनमेव स्यात्, तेन हि प्रपञ्चे प्रातिभासिकनिषेध-

प्रतियोगित्वस्य स्वीकारात्। अतस्तस्य प्रातिभासिकत्वमपि न स्वीकर्तुं शक्यम्। यदि चोक्तनिषेधस्य व्यावहारिकत्वं स्वीक्रियते तर्हि व्यावहारिकमात्रस्य ब्रह्मप्रमाबाध्यत्वेनोक्तनिषेधस्यापि बाध्यत्वात् तेन प्रपञ्चगतपारमार्थिक-सत्त्वाविरोधः, व्यावहारिकेण निषेधेन प्रपञ्चस्य व्यावहारिकसत्यत्वापहारेऽपि पारमार्थिकसत्यत्वानपहारात्प्रपञ्चस्य मिथ्यात्वं न सिध्येदित्यर्थान्तरं स्यात्। किञ्च तादृशनिषेधस्य **नेह नाने**त्यादि श्रुत्यैव प्रतिपादितत्वेन श्रुतेरतत्त्वावेदकत्वमपि स्यात्, तादृशनिषेधस्य व्यावहारिकत्वेन मिथ्यात्वात्। तस्मात्सत्तात्रयरहितस्या-सत्त्वमेवेति चेत्?

असङ्गतमेतत्, तादृशनिषेधस्य तात्त्विकत्वमङ्गीकृत्य असत्त्वापत्तेर्निराकर्तुं शक्यत्वात्। यच्च तात्त्विकत्वपक्षेऽद्वैतहानिरापादिता सा न युक्ता, यतः प्रपञ्चनिषेधस्य ब्रह्मण्येव स्वीकारात्, अभावस्य चाधिकरणात्मकत्वेन तादृशनिषेधाधिकरणीभूताद् ब्रह्मणस्तादृशनिषेधस्याभिन्नत्वेनाद्वैतहानेरभावात्। किञ्चोक्तनिषेधस्य व्यावहारिकत्वस्वीकारेऽपि दोषो नास्त्येव। यच्च व्यावहारिक-निषेधेन प्रपञ्चस्य पारमार्थिकत्वानपहारेऽर्थान्तरमुक्तं, तन्न युक्तं, तथा हि यत्र बाध्यनिषेधत्वं तत्र प्रतियोगिगतपारमार्थिकसत्त्वाविरोधित्वमिति व्याप्त्यभिमानेनेदमर्थान्तरमुपस्थास्थितम्। किन्तु इयं व्याप्तिः न युक्ता, प्रातिभासिकेनापि स्वाप्नेन निषेधेन स्वाप्नार्थस्य पारमार्थिकत्वस्याप्यपहार-दर्शनादुक्तव्याप्तेस्तत्र बाधात्। अतः यत्र निषेधस्य निषेध्यापेक्षया न्यूनसत्ताकत्वं तत्र प्रतियोगिगतपारमार्थिकसत्त्वाविरोधित्वम् इति व्याप्तिः स्वीकार्या। प्रकृतानुमाने च निषेध्यनिषेधकयोः व्यावहारिकत्वेन समसत्ताकत्वान्नोक्त-व्याप्तिविषयता। तथा चात्र विरोधे बाधकाभावः।

ननु तादृशनिषेधस्य व्यावहारिकत्वाङ्गीकारे व्यावहारिकप्रपञ्चमात्रस्य पक्षत्वेन तादृशनिषेधस्यापि पक्षान्तर्गततया तस्यापि निषेधे प्रतियोगिसत्त्वापत्तिः। यथा नेदं रजतमिति ज्ञानोत्तरं जायमानेन इदं नारजतमिति ज्ञानेन रजतसत्त्वं व्यवस्थाप्यते इति चेत्? न, निषेधस्य निषेधे तत्रैव प्रतियोगिसत्त्वमायाति यत्र केवलं निषेधस्यैव निषेधः क्रियते। यथा नेदमरजतमित्यत्र। यत्र तु पुनः निषेधस्य तत्प्रतियोगिनश्चोभयोरपि निषेधस्तत्र प्रतियोगिसत्त्वं नायाति, तत्र प्रतियोगिनोऽपि निषेधात्। यथा घटध्वंससमये कपालादौ प्रागवर्तमानयोः घटतदत्यन्ताभावयोर्निषेधः। तत्र घटाभावनिषेधेऽपि न घटध्वंसकाले कपालादौ घटसत्त्वमायाति घटस्यापि निषिद्धत्वात्। एवमेव दृश्यत्वादिहेतुना व्यावहारिक-प्रपञ्चमात्रस्य निषिध्यमानत्वेन तादृशनिषेधस्य तत्प्रतियोगिनश्चोभयोरपि निषेधान्न

प्रतियोगिसत्त्वापत्तिरिति। किञ्च नेह नानेति श्रुत्या दृश्यत्वावच्छिन्नमात्रस्य मिथ्यात्वबोधनेन प्रपञ्चतदभावयोरुभयोरपि निषेधात् प्रतियोगितद-भावयोरुभयोरपि निषेधे प्रतियोगिसत्त्वापत्त्यभावात्।

ननूक्तश्रुत्या प्रपञ्चतदभावयोः कथं मिथ्यात्वं बोध्यते, प्रपञ्चाभावे प्रपञ्चसामानाधिकरण्यस्य प्रपञ्चान्यूनसत्ताकत्वस्य च बोधने एव तया मिथ्यात्वबोधनं सम्भवति, तच्च न तया बोध्यते तद्वाचकपदाभावादिति चेत्? न, उक्तश्रुत्या तदुभयस्यापि बोधनात्। तथा हि—श्रुतिघटक **'इह'** इति पदस्य प्रपञ्चविशिष्टब्रह्मणीत्यर्थः **'सदेव सौम्येदमग्र आसीत्'** (छा.उ. ६-२-१) इति पूर्ववाक्येन इदं-शब्दार्थद्वैतसामान्यतादात्म्यस्य लब्धत्वात्। 'किञ्चन' इति पदस्य **अतोन्यदार्त** (बृ. ३-४-९) मित्यादिश्रुत्यादिमानेन विनाशितया प्रमितं दृश्यमात्रमर्थः। तथा च विनाशिप्रपञ्चविशिष्टे ब्रह्मणि विनाशिप्रपञ्चाभावः उक्तश्रुत्या बोध्यते। नन्वेवं श्रुत्या प्रपञ्चाभावे प्रपञ्चसामानाधिकरण्यस्य लब्धत्वेऽपि न तया प्रपञ्चाभावे प्रपञ्चान्यूनसत्ताकत्वं बोध्यते, प्रपञ्चसमानाधिकरणत्वे प्रपञ्चाभावस्य प्रातिभासिकत्वमेवेति चेत्?, न, तादृशाभावस्य श्रुतिप्रमितत्वादेवाप्रातिभासिकत्वात्। एवञ्च विनाशिदृश्यत्वा-वच्छेदेनाप्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वनिश्चयस्यानुमितिद्वारा नेह नानेति श्रुतिविषयत्वम्। ननु दृश्यवति दृश्याभावनिश्चयस्याहार्यत्वेन कथं शाब्दत्वं प्रत्यक्षातिरिक्तस्याहार्यस्यास्वीकारादिति चेत्? न, उक्तश्रुतिघटक-**'नाना'** इति पदं भेदार्थकं तस्य च ब्रह्मार्थकेहपदसमभिव्याहारात् ब्रह्मप्रतियोगिकभेदोऽर्थः। श्रुतिजन्यबोधस्याहार्यत्वापत्तिभिया दृश्याधिकरण-वृत्त्यभावो दृश्यनिष्ठप्रतियोगिताकोऽपि न तु दृश्यत्वावच्छिन्नप्रतियोगिताकः, दृश्यत्वस्य प्रतियोगिनि विशेषणत्वमात्रत्वात्। किन्तु 'इह' पदसमभि-व्याहृतनानेतिपदप्राप्तब्रह्मभिन्नत्वावच्छिन्नप्रतियोगिताक एवाभावो विवक्षितः। तथा च विनाशिदृश्यविशिष्टे ब्रह्मणि ब्रह्मभिन्नत्वावच्छिन्नप्रतियोगिताकाभावनिश्चय-स्यानाहार्यत्वान्नोक्तापत्तिः। अथवा आहार्यशाब्दबोधोऽपि स्वीक्रियते। तदुक्तं **'अत्यन्तबाधितेऽप्यर्थे ज्ञानं शब्दः करोति हि'** इति।

नन्वेवमपि मिथ्यात्वस्य प्रतियोग्यवच्छेदकदेशकालावच्छिन्नत्व-अवच्छिन्नवृत्तिकान्यत्वैतदन्यतरघटितत्वात् तस्य चोक्तश्रुत्याऽबोधनात् कथं मिथ्यात्वबोध इति चेत्? न, प्रसक्तं प्रतिषिध्यते इति न्यायेन निषेधस्य प्रतियोगिप्रसक्तिपूर्वकत्वनियमेनाभावे प्रतियोगिप्रसक्त्यवच्छेदकीभूतदेशकालाव-च्छिन्नभाननियमात् प्रकृते प्रपञ्चाभावे प्रपञ्चप्रसक्त्यवच्छेदकदेशकालाव-

च्छिन्नत्वभानस्यावश्यकत्वात्। एवमेव इहेति सप्तम्याऽनवच्छिन्नविशेषणता-सम्बन्धावच्छिन्नाधेयतया तादृशाभावस्य बोधः सम्भवतीति श्रुत्या प्रपञ्चतदभावयोर्मिथ्यात्वबोधः उपपन्नः। यच्च तादृशनिषेधस्य व्यावहारिकत्वपक्षे श्रुतेरतत्त्वावेदकत्वेनाप्रामाण्यमापादितं, तदपि न युक्तं, श्रुत्या अतात्त्विक-स्यातात्त्विकत्वेनैव बोधनात्। तथा चातात्त्विकमतात्त्विकत्वेन बोधयन्ती श्रुतिः कथमप्रमाणं स्यादिति।

ननूक्तनिषेधस्य प्रतियोगिता केन रूपेणावच्छिन्ना, स्वरूपेण उत पारमार्थिकत्वेन?। तथा च स्वरूपावच्छिन्नप्रतियोगिताकनिषेधः पारमार्थिकत्वा-वच्छिन्नप्रतियोगिताकनिषेधो वा साध्यघटकः? प्रथमे स्वपदग्राह्यप्रपञ्चस्य यद्रूपं=स्वरूपं, तत् द्विविधं साधारणमसाधारणञ्च। साधारणं दृश्यत्वादि, असाधारणं घटत्वादि। तथाच तेन रूपेण प्रपञ्चस्य निषेधे उच्यमाने प्रपञ्चस्यालीकत्वं स्यात्। न हि प्रतिपन्नोपाधौ कपालादौ घटत्वेन घटस्य त्रैकालिकनिषेधः सम्भवति, तथात्वे तस्यालीकत्वमेव स्यात्। तथैवाकाशादेरपि। न ह्याकाशादेरलीकत्वं वक्तुं युक्तम्, **'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः'** इत्यादिना आकाशोत्पत्तेः श्रुतिसम्मतत्वात्। घटादेश्चार्थक्रियाकारित्वं सिद्धमेव। तथाच सर्वस्यापि प्रपञ्चस्य स्वज्ञानकाले विद्यमानत्वेन त्रैकालिकनिषेधो न सम्भवतीति न स्वरूपेण तादृशनिषेधप्रतियोगित्वपक्षो युक्तः। एवं पारमार्थिकत्वमपि नोक्तनिषेधप्रतियोगितावच्छेदकं, तद्धि अबाध्यत्वरूपम्। तस्य बाध्यत्वरूपमिथ्यात्वघटकत्वादन्योन्याश्रयः स्यात्। किञ्च पारमार्थिकत्वं रजतादिनिष्ठप्रतियोगिताया व्यधिकरणो धर्मः। तथा च व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वासम्भवेन पारमार्थिकत्वेन रजतं नास्तीत्यस्य रजते पारमार्थिकत्वं नास्तीत्येवार्थो वक्तव्यः। एवं स्थिते पारमार्थिकत्वस्याभावः केन रूपेण ग्राह्यः, स्वरूपेण पारमार्थिकत्वेन वा। स्वरूपेणेत्युच्यमाने तस्यालीकत्वापत्तिः पूर्ववत् स्यात्। पारमार्थिकत्वेनेत्युच्यमानेऽनवस्था स्यादिति त्रैकालिकनिषेधप्रतियोगितावच्छेदकधर्मस्यासम्भवेन नैतत्साध्यं युक्तमिति चेत्?

अत्रोच्यते—शुक्तिरूप्यस्थलेऽधिष्ठानतत्त्वसाक्षात्कारे जाते रूप्यं नास्ति, नासीत्, न भविष्यतीत्येव प्रतीतिः न तु पारमार्थिकत्वेन रूप्यं नास्तीत्यादि। तथा चोक्तानुभवानुरोधेन स्वरूपेणैव निषेधप्रतियोगित्वस्य रूप्ये सिद्धान्तितत्वेन दृष्टान्तानुरोधादेव पक्षेऽपि स्वरूपेणैव निषेधप्रतियोगित्वमङ्गीकरणीयम्। किञ्च नेह **नानेति** श्रुत्याऽपि स्वरूपेणैव प्रपञ्चनिषेधो बोध्यते। तस्मात् स्वरूपणैव निषेधप्रतियोगित्वं साध्यघटकं वक्तव्यम्।

ननु यत्र स्वाश्रये स्वरूपेण निषेधाप्रतियोगित्वरूपमनिषिद्धस्वरूपत्वं तत्रोत्पत्तिविनाशशालित्वम्, एवं यत्रोत्पत्तिविनाशशालित्वं तत्रोक्तानिषिद्ध-स्वरूपत्वं, यथा न्यायनये घटः इति व्याप्तिद्वयबलादनिषिद्धस्वरूपत्व-मुत्पत्तिविनाशशालित्वसमनियतम्। तथा च तादृशानिषिद्धस्वरूपत्वस्य शुक्तिरूप्येऽभावात् तस्योत्पत्त्यादिकं न स्यादिति चेत्? न, यतः न्यायमते अनिषिद्धस्वरूपत्वेऽपि गगनादावुत्पत्त्यादेरदर्शनान्न तदुत्पत्त्यादिमत्त्वे प्रयोजकं भवितुमर्हति। उत्पत्त्यादिमत्त्वे तु वस्तुस्वभावादिकं किमपि प्रयोजकं वक्तव्यम्। तच्च शुक्तिरूप्येऽस्तीति नोक्तापत्तिः।

ननूक्तरीत्या रूप्यं नास्तीत्यत्र स्वरूपेण प्रातिभासिकस्य प्रतियोगित्व-स्वीकारे 'त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं, पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगि' इति पूर्वाचार्योक्तिविरोधः स्यात् इति चेत्? न, तत्रापणस्थरजतादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रतियोगीत्यस्यैव पूर्वाचार्योक्तेराभिमतत्वात्। तथा च रजतं पुरोवर्तिवस्तुतादात्म्येनेव आपणस्थरजततादात्म्येनापि प्रतीयते इति प्रतिपादने पूर्वाचार्याणामभिप्रायो मन्तव्यः, अन्यथा रजतार्थिनस्तत्र प्रवृत्तिरेव न स्यात्।

वस्तुतस्तु यत्र नेदं रजतमिति शाब्दप्रतीतौ धर्मिप्रतियोगिनोः समानविभक्तिकत्वं तत्र नञः अन्योन्याभावबोधकत्वमिति नियमः, एवं प्रत्यक्षप्रतीतेः शाब्दप्रतीतितुल्यत्वात् शाब्दप्रतीतिवत् नेदं रजतमिति प्रत्यक्षप्रतीतावप्यन्योन्याभाव एव विषयः। तथा च धर्मिणि प्रातीतिकरजते प्रतियोगिनो व्यावहारिकरजतस्यान्योन्याभावं प्रतीतिरियमवगाहते। तथा चानया प्रतीत्या प्रातिभासिकरजतस्य मिथ्यात्वं ज्ञाप्यते। नात्र रजतमित्यत्र तु विरुद्धविभक्तिकत्वान्नञाऽन्त्यन्ताभावस्य बोधने प्रातीतिकरजते व्यावहारिकरजतात्यन्ताभावस्यैवानया प्रतीत्या बोधनादनया प्रातीतिकरजस्य मिथ्यात्वं गृह्यत एव मिथ्यात्वघटकनिषेधस्यात्यन्ताभावरूपत्वादतो नोक्तरीत्या सिद्धान्तविरोधादिकमुद्भावयितुं शक्यमिति विवेकः।

नन्वन्यत्रासत एव घटादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वे तस्य मिथ्यात्वं स्यात्। एवञ्चेत् अन्यत्रावर्तमानस्य स्वाश्रयेऽप्यवर्तमानत्वे सर्वथा अवर्तमानत्वमेव सिद्धमिति शशशृङ्गादिवत्तस्यासत्त्वमेव सिध्येदिति चेत्? न, नह्यसत्त्वं निरुपाख्यत्वम्, अप्रतीयमानत्वम् अपरोक्षतया अप्रतीयमानत्वं वा वक्तव्यं, नित्यातीन्द्रियगुरुत्वादौ व्यभिचारात्, अपितु क्वचिदप्युपाधौ सत्त्वेन

प्रतीत्यनर्हत्वमसत्त्वं वाच्यं, तस्य च बाधात् पूर्वं प्रपञ्चे शुक्तिरूप्ये चाभावात् नोक्तदोषः।

ज्ञाननिवर्त्यत्वं मिथ्यात्वमिति विवरणाचार्योक्तस्य मिथ्यात्वलक्षणस्य ज्ञानप्रयुक्तावस्थितिसामान्यविरह इत्यर्थः। तस्य चतुर्धाऽर्थवर्णनमस्ति। तथा हि, ज्ञानमित्यस्य अधिष्ठानतत्त्वज्ञानमित्यर्थः, प्रयुक्तत्वं व्यापकत्वम्, अवस्थितिसामान्यविरहः—स्वस्वीयसंस्कारान्यतराभावः, तथा च अधिष्ठान-तत्त्वज्ञानव्यापक-स्वस्वीयसंस्कारान्यतराभावप्रतियोगित्वं ज्ञाननिवर्त्यत्वम्। स्वपदेनाज्ञानम्। अज्ञानतत्संस्कारयोरभावेऽधिष्ठानतत्त्वसाक्षात्कारव्यापकत्व-निर्वाहकव्याप्तिप्रकारस्तु इत्थम्—या याऽप्रामाण्यज्ञानादिशून्यसाक्षात्कारप्रमा सा स्वसमानविषयकाज्ञानक्षणावृत्तिः (इयम् अज्ञानविरहे ज्ञानव्यापकत्वनिर्वाहिका व्याप्तिः), या या स्वजन्यपटुतमसंस्कारसहिताप्रामाण्यज्ञानादिशून्यसाक्षात्कार-प्रमा सा स्वसमानविषयकाज्ञानतत्संस्कारक्षणावृत्तिः (इयं संस्काराभावस्यापि साधिका)। पटुतमसंस्कारासहिता तु अप्रामाण्यज्ञानादिशून्यसाक्षात्कारप्रमा अज्ञानविरोधिन्यपि न संस्कारविरोधिनीति तस्य निवेशः। अत एव जीवन्मुक्त-निष्ठोक्तप्रमायाः नाज्ञानसंस्कारविरोधित्वम्, अन्यथा देहाद्यनुवृत्तिर्न स्यात्।

यदि चैतेन ज्ञानस्य अज्ञान-तत्संस्कारविरोधित्वमेव सिध्यति न तु तत्कार्यवियदादिविरोधित्वमपि, तथा च कथं तत्रोक्तव्याप्तिबलात् ज्ञाननिवर्त्यत्वं सिध्येदिति चेत्?, तदा व्याप्त्यन्तरमुच्यते-या या स्वजन्यपटुतमसंस्कार-सहिताप्रामाण्यज्ञानादिशून्या साक्षात्कारप्रमा सा स्वविषयविषयकाज्ञान-प्रयुक्तत्संस्कारवत्कालपूर्वभिन्ना इति। तथा च यदा अज्ञानतत्संस्कारान्यतराभावः प्रतियोगिता-व्यापकः तदा स्वाधिकरणक्षणवृत्तित्वसम्बन्धः व्यापकीभूताभावप्रतियोगिता-वच्छेदकसम्बन्धः। यदा तु अज्ञानप्रयुक्ततत्संस्कारान्यतराभावः व्यापकः तदा स्वाधिकरणकालपूर्वक्षणवृत्तित्वं व्यापकीभूताभावप्रतियोगितावच्छेदकसम्बन्धः। व्याप्यतावच्छेदकसम्बन्धश्चोभयत्र तादात्म्यमेव। तादृशाभावप्रतियोगित्वं मिथ्यात्वं, तच्च अज्ञाने, तत्प्रयुक्तवियदादौ तत्संस्कारे च वर्तत इति लक्षणसमन्वयः। स्वसमानविषयकत्वादिकञ्च सम्बन्धकुक्षौ निवेश्य व्याप्तिद्वयमपि लाघवेन वक्तुं शक्यते—यत्र तादाम्यसम्बन्धेन तादृशप्रमा तत्र स्वसमानविषयकत्वकालिकोभयसमबन्धावच्छिन्नप्रतियोगिताकाज्ञानतत्संस्कारान्यतराभावः, एवं यत्र तादात्म्यसम्बन्धेनोक्तप्रमा तत्र स्वप्रयोजकाज्ञानसमानविषयकत्व-स्वाश्रयकालपूर्वत्वोभयसम्बन्धेन अज्ञानप्रयुक्ततत्संस्कारान्यरस्याभाव इति। नानाऽज्ञानपक्षे तु उक्तप्रमायामज्ञाने च तत्तत्पुरुषीयत्वमपि निवेशनीयम्।

ननु ज्ञाननिवर्त्यत्वस्य मुद्‌गरपातजन्यनाशप्रतियोगिनि घटादावव्याप्तिः, तत्र ज्ञानजन्यनाशप्रतियोगित्वाभावात्। न च घटनाशस्य मुद्‌गरपात-पूर्वभाविकपालरूपत्वेन न मुद्गरपातजन्यत्वं तत्तत्कालावच्छिन्नकपालादेरेव घटनाशरूपत्वादिति वाच्यं, कपालादिरूपस्य घटनाशस्य मुद्‌गरपातेनेव तत्त्वज्ञानेनाप्यजननादव्याप्तेस्तदवस्थत्वादिति चेत्? न, यद्यपि ज्ञानकालीनकपालरूपो घटनाशो न ज्ञानजन्यः, तथापि ज्ञानोत्तरभाविनः स्वेतरसकलप्रतियोगिकस्य नाशस्य ज्ञानजन्यत्वस्य **विद्वान् नामरूपाद्विमुक्तः** इति श्रुतिसिद्धतया कपालनाशस्य ज्ञानजन्यत्वे सिद्धे तद्‌घटनाशरूपकपालनाशस्य तद्‌घटनाशरूपत्वमवश्यं वाच्यं, तदानीमपि तद्‌घटो नष्ट इति प्रत्ययात्, तथा च कपालनाशस्य ज्ञानजन्यत्वे तदभिन्नघटनाशस्यापि ज्ञानजन्यत्वसिद्धेर-प्रत्यूहत्वात्। तस्मात् मुद्गरपातेन घटस्य स्वरूपेणैवावस्थितिविरहः न तु कारणात्मनाऽपि, कारणात्मनावस्थितिविरहस्तु ब्रह्मज्ञानप्रयुक्त एवेति नोक्तरीत्या घटेऽव्याप्तिः। एवञ्च स्वप्रयोजकाज्ञानेत्याद्युभयसम्बन्धेन अज्ञानप्रयुक्त-तत्संस्कारान्यतराभाव एव ज्ञानव्यापकः, न तु तादृशज्ञानकालीनकपालादिरूपो घटनाशः। यदि सोऽपि ज्ञानजन्यः स्यात्, तर्हि तस्य नाशकाभावेन तन्निवृत्तिर्न स्यात्, यदि च तस्य स्वनाशत्वमेवेत्युच्यते तर्हि ज्ञाननाश्यत्वाभावेन मिथ्यात्वं न सिध्येदिति भावः।

नन्वेवं ध्वंसपक्षेऽपि योजयितुं शक्यम्, अवस्थितिसामान्याभाव इव कपालादिप्रपञ्चनाशेऽपि प्रपञ्चसमानकालीनत्वस्य स्वीकर्तुं शक्यतया ज्ञानप्रयुक्तत्वसम्भवादिति चेत्?, न, नाशस्य प्रतियोगिसमानकालीनत्वा-सम्भवात्। नाशस्य चरमक्षणरूपत्वस्वीकारेऽपि न निस्तारः, तस्य स्वेतरसकलदृश्यनाशरूपत्वेऽपि स्वस्य स्वनाशरूपत्वासम्भवेन तस्य ज्ञाननिवर्त्यत्वासम्भवात्। अतः ज्ञानेन सर्वं दृश्यं नष्टमिति प्रतीतिः उक्तावस्थितिसामान्याभावविषयकतया व्याख्येया। तस्मात् ज्ञानकालीनः उक्तावस्थितिसामान्याभावो ज्ञानाधीन इति फलितम्। ननु प्रपञ्चनाशस्येव उक्तावस्थितिसामान्याभावस्यापि न ब्रह्मज्ञानप्रयुक्तत्वं, ब्रह्मज्ञानात्पूर्वमपि प्रलये तस्य सत्त्वादिति चेत्? न, स्वरूपेण घटविरहस्य मुद्‌गरपातादि-(आदिपदाददृष्टादिपरिग्रहः) प्रयुक्तत्वेऽपि कारणात्मनावस्थितिविरहस्य ब्रह्मज्ञानान्यप्रयुक्तत्वाभावात् ब्रह्मज्ञानप्रयुक्तत्वानपायात्।

एवं स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वं सद्विविक्तत्वञ्चेति लक्षणद्वयमपि निर्दुष्टम्। इत्थं मिथ्यात्वस्य सुनिरूप्यत्वे दृश्यत्वादिहेतवोऽप्यदुष्टाः।

ननु दृश्यत्वं हि (१) वृत्तिव्याप्यत्वं (२) फलव्याप्यत्वम् (३) उभयसाधारणं (४) कदाचित् कथञ्चिच्चिद्विषयत्वं (५) स्वव्यवहारे स्वातिरिक्त-संविदन्तरापेक्षानियतिः (६) अस्वप्रकाशत्वम् वेति। इमे षडपि विकल्पा न युक्ताः। तथाहि—वृत्तिव्याप्यत्वं दृश्यत्वमिति स्वीकारे ब्रह्मणि व्यभिचारः। तद्धि वृत्तिविषयत्वम्। तथा च वेदान्तजन्यवृत्तिविषयत्वस्य ब्रह्मणि सत्त्वात्तत्र मिथ्यात्वाभावेन व्यभिचारः। फलव्याप्यत्वं दृश्यत्वमिति स्वीकारे नित्यातीन्द्रिये गुरुत्वादौ भागासिद्धिः स्यात्, अपरोक्षे एव फलव्याप्यत्वसत्त्वेन पक्षान्तर्गते गुरुत्वादौ तदभावात्। एवं शुक्तिरूप्यादेरपि फलव्याप्यान्तर्गतत्वेन परिगणनाभावात् तत्र हेतोरसत्त्वेन साधनवैकल्यमपि।

यस्माद् वृत्तिव्याप्यत्वं न दृश्यत्वं तस्मात्तदुभयसाधारणं वृत्तिव्याप्यफल-व्याप्यान्यतरत्वमपि न दृश्यत्वम्, आत्मनि व्यभिचारादिति।

ब्रह्म वेदान्तवाक्येन ज्ञातमित्यनुभवानुरोधेन तत्र कथञ्चित् कदाचिच्चिद्विषयत्वस्य सत्त्वात् चतुर्थोऽपि पक्षो न युक्तः।

स्वव्यवहारे स्वातिरिक्तसंविदन्तरापेक्षानियतिरपि दृश्यत्वं न सम्भवति, ब्रह्मण्येव व्यभिचारात्, तथाहि स्वं ब्रह्म तद्व्यवहारः अद्वितीयत्वादिव्यवहारः, तत्र संविदन्तरस्य विशेषणज्ञानस्यापेक्षासत्त्वात्।

अस्वप्रकाशत्वमपि न दृश्यत्वम्। तथाहि अस्वप्रकाशत्वं नाम अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वाभावः। एवञ्च दृष्टान्ते शुक्तिरूप्येऽपरोक्षव्यवहार-योग्यत्वस्यैव सत्त्वेन साधनवैकल्यमिति चेत्? न,

फलव्याप्यत्वपक्षं विहाय सर्वस्यापि पक्षस्य युक्तत्वात्। तथाहि—वृत्तिव्याप्यत्वपक्षे दत्तः ब्रह्मणि व्यभिचारो नास्त्येव, यतः वृत्तिविषयत्वरूपं दृश्यत्वं कुत्रास्ति? शुद्धे ब्रह्मणि उपहिते वा? तत्र नाद्यः, **यत्तदद्रेश्यम्** (मु. १-१-६) इति श्रुत्यनुसारमनुपहितस्यादृश्यत्वस्वीकारात् शुद्धे वृत्तिविषयत्वं नास्त्येव। न द्वितीयः, उपहितस्य मिथ्यात्वस्वीकारेण तत्र दृश्यत्वसत्त्वे क्षत्यभावात्। ननु शुद्धस्य वृत्त्यविषयत्वस्वीकारे **'सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते'** इति मण्डनमिश्रवचनविरोधः स्यादिति चेत्? न, तत्रापि ब्रह्मपदेनोपहितस्यैवोक्तत्वात्।

शुद्धस्य स्वत एव प्रकाशत्वेन वृत्त्यविषयत्वेऽपि न तस्यासिद्धिः।

ननु वृत्त्यविषयस्याज्ञातत्वेन ज्ञाते एव च धर्मिणि कस्यचिद्धर्मस्य विधानं निषेधो वा सम्भवतीति कथमज्ञाते शुद्धे दृश्यत्वनिषेधः सम्भवति।

स्वप्रकाशत्वेन स्वतः सिद्धे तस्मिन् **यत्तदद्रेश्यम्** (मु. १-१-१६) इत्यादिश्रुत्या दृश्यत्वनिषेधे बाधकाभाव इत्यपि न साम्प्रतं, यतः शुद्धं स्वप्रकाशमिति प्रतीतिविषयत्वादेव शुद्धस्य स्वप्रकाशत्वं सिध्येत्, तदपि शुद्धस्य वृत्त्यविषयत्वस्वीकारे सिद्धं न स्यादिति चेत्? न, वृत्त्युपधानकाले ब्रह्मणः शुद्धत्वं न सम्भवतीत्यतो हेतोः शुद्धं स्वप्रकाशमित्यस्य अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथा च यत्र अस्वप्रकाशत्वं तत्र अशुद्धत्वमितिवत् व्यतिरेकव्याप्तौ यत्र अशुद्धत्वाभावः तत्र अस्वप्रकाशत्वाभाव इत्युक्तौ शुद्धे अशुद्धत्वाभावेन अस्वप्रकाशत्वाभावरूपं स्वप्रकाशत्वं सिध्यत्येव।

ननु वेदान्तजन्याखण्डवृत्तिविषयत्वमुपहितस्य न सम्भवति, तादृशवृत्तिकाले तादृशवृत्त्यतिरिक्तोपाधेरभावात्। यदि च तस्या एव वृत्तेरुपाधित्वमपि स्वीक्रियते तदा स्वस्य स्वविषयत्वापत्तिः, तत्रापीष्टापत्तौ शाब्दबोधस्य शब्दानुपस्थिताविषयकत्वनियमव्याघातः स्यात्, वृत्तेः शब्दानुपस्थितत्वात्, तादृशनियमे सङ्कोचस्वीकारेऽपि तादृशवृत्त्या अज्ञानतत्कार्यप्रतिबन्धो न स्यात् अज्ञानतत्कार्याविषयकज्ञानस्यैव अज्ञानतत्कार्यविरोधित्वनियमात्, तादृशनियमास्वीकारे अहमज्ञः, अयं घट इत्यादिज्ञानानामपि अज्ञानतत्कार्यनिवर्तकत्वं स्यादिति।

न च अहमज्ञः, अयं घटः इत्यादिज्ञानानामज्ञानतत्कार्यनिवर्तकत्वापत्तिभिया अन्यविषयत्वानिरूपितात्मविशेष्यताकज्ञानस्याज्ञानविरोधित्वं स्वीक्रियतां किमर्थमज्ञानतत्कार्याविषयकज्ञानस्यैव तादृशविरोधित्वस्वीकारः। यथा इदं रजतमित्यादौ इयं शुक्तिः एतद्विषयकाज्ञानतत्कार्ये इति समूहालम्बनस्य शुक्त्यज्ञानविरोधित्वं तथैव अहं ब्रह्म अज्ञानतत्कार्ये इत्यादिसमूहालम्बनस्याज्ञाननिवर्तकत्वं युक्तमेव। परेणापि उपाध्यविषयकोपहितविषयकज्ञानस्यैवाज्ञानविरोधित्वस्वीकारादिति वाच्यम्, उक्तरीत्या वक्तुं शक्यत्वेऽपि लाघवात् तथा स्वीकारात्। उक्तसमूहालम्बनं तु आहार्यत्वादविरोधि येन तद्बलात् गुरुभूतमपि तत्स्वीक्रियेत। तथाहि, यथा घटो न घटः इति बुद्धिराहार्या तथैवोक्तसमूहालम्बने द्वैताद्वैतविषयितयोः सत्त्वात् तयोश्च एकस्मिन्ननाहार्यज्ञाने विरुद्धत्वात्।

न च विशेष्यतावच्छेदकत्वसम्बन्धेन घटभेदप्रकारकानाहार्यज्ञानं प्रति घटत्वनिष्ठविषयतासम्बन्धेन ज्ञानं प्रतिबन्धकमिति नियमात् घटो न घटः इत्यस्य स्यादाहार्यत्वम्, अहं ब्रह्म अज्ञानतत्कार्ये इति ज्ञानस्य तु कथमाहार्यत्वमिति वाच्यम्, अहं ब्रह्मेति ज्ञानस्योत्पत्तिः अद्वैतत्वेन

ब्रह्मज्ञानोत्तरमेव, तथा च तादृशज्ञानकालेऽद्वैतत्वेन ब्रह्मणः उद्बुद्धसंस्कारसत्त्वेन तादृशसंस्कारस्य द्वैतबुद्धिविरोधित्वेन उक्तधियोऽप्याहार्यत्वमुपपद्यत एव। यथा शुक्तित्वं रजतभेदव्याप्तमित्याकारकोद्बुद्धसंस्कारसत्त्वे शुक्तिः रजतमिति ज्ञानं नोत्पद्यते तथैव द्वितीयाभावो ब्रह्मनिष्ठः अज्ञानाभावो ब्रह्मनिष्ठ इत्याकारकोद्बुद्धसंस्कारसत्त्वे ब्रह्मरूपसदात्मकं द्वितीयं सदात्मकमज्ञान-मित्यादिबुद्धिः नोत्पद्यते। इदन्तु द्वैतज्ञानेऽद्वैतत्वेन ब्रह्मज्ञानस्य प्रतिबन्धकत्वे उक्तम्। ज्ञानस्य तत्त्वज्ञानोत्तरभोगासाधनसकलदृश्यध्वंसरूपत्वे तु ज्ञाननाशः जीवन्मुक्तिस्वीकारपक्षे ज्ञानोत्तरोत्पन्नमनःपरिणामरूपः, जीवन्मुक्त्यस्वीकारे तु तादृशज्ञानोपक्षित आत्मैव।

ज्ञानोत्तरकालीनभोगासाधनाज्ञानतत्प्रयुक्तभ्रमतद्विषयाणां दृश्यानां नाशः ज्ञानमिति स्वीकारे तादृशभ्रमपदेन वृत्तिज्ञानविषयकसाक्षिणोऽपि ग्रहीतुं शक्यतया तन्नाशरूपत्वं ज्ञानस्य कथं स्यादिति चेत्? न, तत्र भ्रमपदेन स्वेतरविषयकभ्रमस्यैव धर्तव्यत्वात्। स्वविषयकभ्रमस्य स्वकालत्वव्यापकत्वेन तन्नाशरूपत्वस्य स्वस्मिन्नसम्भवात्।

ननु जीवन्मुक्तिस्वीकारे ज्ञाननाशस्य मनःपरिणामरूपत्वं यदुक्तं तत्कथं सङ्गच्छते, ज्ञानस्य सकलदृश्यनाशरूपत्वेन तादृशमनःपरिणामजनकादृष्टस्यापि नष्टत्वात् इति चेत्? न, **तावदेवास्य चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये** इति श्रुत्यनुसारं भुज्यमानादृष्टान्यदृश्यनाशरूपत्वं ज्ञानस्य वाच्यं, तथा च तादृशादृष्टबलात् देहादिरूपमनःपरिणामस्योत्पत्तौ बाधकाभावात्। एवञ्च ज्ञाने तादृशदृश्यनाशरूपत्वस्वीकारे तस्य अज्ञानाद्यविषयकत्वेनोक्तसमूहालम्बनरूपत्वं न सम्भवति। अतएव इयं शुक्तिः इदं रजतमित्याकारकं समूहालम्बनमप्रसिद्धम्।

नन्वेवमपि ज्ञानोत्तरभोगसाधनभ्रमरूपत्वं तत्त्वज्ञानस्य सम्भवेदेव ज्ञानोत्तरभोगासाधनभ्रमादिनाशकत्वस्य ज्ञाने स्वीकारादिति चेत्?, न, तथा सति तत्त्वज्ञानस्य बन्धसाधनत्वप्रसङ्गात्।

**मनो हि द्विविधं प्रोक्तं कारणं बन्धमोक्षयोः।**
**बन्धाय विषयासक्तं मोक्षे निर्विषयं मतम्।।**

इत्यादिना मोक्षसाधनमनःपरिणामस्य बन्धसाधनत्वोक्तत्वात्। मोक्षसाधनत्वेन परिणतं मनः अनात्माविषयकमिति निर्विषयमित्यनेन सूचितम्।

अथवा इतरविषयत्वानिरूपितात्मविषयताशालिज्ञानमज्ञानतत्कार्यविरोधीत्येव नियमः। अतएव जातित्वेन शुक्तित्वावगाहि इयं जातिमतीति ज्ञानं न इदं

रजतमिति ज्ञानविरोधि। एवञ्चोक्तरीत्या अहं ब्रह्मास्मि अज्ञानतत्कार्ये इति समूहालम्बनस्यापि तत्त्वज्ञानरूपत्वम् अज्ञाननिवर्तकत्वञ्च युज्यते। अज्ञान-निवृत्तावात्मविषयकत्वस्यैव तन्त्रत्वेन आत्मान्याविषयकत्वस्याप्रयोजकत्वात्। **तमेव विदित्वाऽतिमृत्युमेति** (श्वे. ६-१५) इति श्रुत्याऽपि **एकधैवानुद्रष्टव्यमिति** श्रुत्यैकवाक्यतानुरोधेन केवलात्मज्ञानस्यैवाज्ञानविरोधित्वमुच्यते, उक्तश्रुतेः केवलवाचकैकपदघटितत्वात्। तदुक्तं ध्यानदीपिकायां—

**न बुद्धिं मर्दयन् दृष्टो घटवत्त्वस्य वेदिता।**
**उपमृद्नाति चेद् बुद्धिं ध्याताऽसौ न तु तत्त्ववित्।।** इति।

बुद्धेर्मर्दनं नाम ज्ञानस्यान्याविषयकत्वसम्पादनं, तत्तु ध्यातुरेवोचितं, यतः ध्येयान्यविषयकज्ञानासहितज्ञानधारैव ध्यानं, तच्च ज्ञानस्यान्याविषयकत्व-सम्पादनं विनाऽशक्यम्। तत्त्वज्ञाने तु न तदपेक्षेति चेत्? न, शाब्दवृत्त्यविषयीभूताया अपि वृत्तेरुपाधित्वस्वीकारेण दोषाभावादित्यास्तां विस्तरः। यस्मात् शुद्धे वृत्तिव्याप्यत्वं नास्ति तस्मात् उक्तान्यतरत्वमपि तन्त्रं नास्तीति तृतीयेऽपि कल्पे न व्यभिचारः।

कदाचिच्चिद्विषयत्वं दृश्यत्वमिति स्वीकारेऽपि न पूर्वोक्तरीत्या आत्मनि व्यभिचारः, उक्तरीत्यैव शुद्धे चिद्विषयत्वस्याभावात् उपहितस्य च मिथ्यात्वाभ्युपगमात्। एवञ्च चतुर्थोऽपि पक्षो युक्त एव।

स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरूपं दृश्यत्वमपि न दुष्टम्। तथाहि—स्वगोचरयावद्व्यवहारे स्वातिरिक्तसंविदपेक्षाकत्वं तदर्थः पर्यवस्यति। ब्रह्मणः पूर्णानन्दरूपव्यवहारे वेदान्तवाक्यजन्यायाः सविदोऽपेक्षितत्वेऽपि यावद्व्यवहारान्तर्गते नित्यसिद्धे स्फुरणरूपव्यवहारे स्वातिरिक्तसंविदपेक्षायाः अभावेन न पूर्वोक्तो ब्रह्मणि व्यभिचारः।

एवम् अस्वप्रकाशत्वं दृश्यत्वमिति षष्ठे पक्षेऽपि न दोषः। तथा हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वं स्वप्रकाशत्वम्। अन्यानधीनापरोक्षत्वं तदर्थः। तद्भिन्नत्वञ्च अस्वप्रकाशत्वरूपं दृश्यत्वम्। तथाच **'यत्साक्षादपरोक्षात्'** इत्यादिश्रुतिसिद्धे ब्रह्मणः अपरोक्षत्वे अन्यानधीनत्वेन दृश्यत्वाभावान्न व्यभिचार इति।

वस्तुतस्तु शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वं, तथा च तुच्छे ब्रह्मणि च न दोषः।

एवमज्ञानमप्युपहितविषयकं नतु उपाधिभूतस्वविषयकमिति ज्ञानाज्ञानयोः उपाध्यविषयकत्वे सत्युपहितविषयकत्वेन समानविषयकत्वात्तयोः प्रतिबध्य-प्रतिबन्धकभावोऽपि सुघटः।

**द्वितीयो** हेतुः जडत्वम्। ननु जडत्वं हि—१. अज्ञातृत्वम् २. अज्ञानत्वम् ३. अनात्मत्वं वेति। तत्र अज्ञातृत्वं जडत्वमिति स्वीकारे प्रपञ्चान्तर्गत्वेन पक्षकुक्षिप्रविष्टस्य अहमर्थस्य ज्ञातृत्वस्वीकारात् तत्र अज्ञातृत्वरूपहेतोरभावेन स्वरूपासिद्धिः स्यात्। अज्ञानत्वं जडत्वमित्यपि न युक्तं, शुद्धे व्यभिचारात्। तथाहि, वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वस्वीकारेण शुद्धे तदभावेन अज्ञानत्वरूपहेतोः सत्त्वात् तत्र च मिथ्यात्वस्याभावाद् व्यभिचारः। एवमनात्मत्वं जडत्वमित्यपि न युक्तम्, आत्मत्वस्यैव निरूपयितुमशक्यत्वात्। तथाहि— आत्मत्वं जातिरिति वक्तुं न शक्यते, अद्वैतिमते एकस्यैवात्मनः स्वीकारात् एकव्यक्तिमात्रवृत्तेश्च जातित्वानङ्गीकारात्। विशिष्टात्मनां नानात्वेन तद्वृत्तित्वादात्मत्वं जातिरित्युच्यते चेत्? विशिष्टात्मनां मिथ्यात्वेन तत्र तादृशात्मत्वस्यैव पक्षे सत्त्वेन तदभावस्यासत्त्वात्स्वरूपासिद्धिरेव स्यात्। आनन्दत्वमात्मत्वमित्यपि न युक्तं, पक्षान्तर्गते वैषयिकानन्देऽपि आनन्दत्वस्य सत्त्वेन तदभावरूपहेतोरभावात्स्वरूपासिद्धेः। वस्तुतस्तु वृत्त्युपरक्तचैतन्यस्यैव यथा ज्ञानरूपत्वं तथा आनन्दरूपत्वमपि। तथा च अनानन्दत्वरूपजडत्वहेतोः शुद्धे पूर्वोक्तरीत्या व्यभिचारः स्यात्। अतो जडत्वं न हेतुरिति चेत्? न, अज्ञानत्वानात्मत्वयोः जडत्वरूपत्वसम्भवात्। तथाहि, न हि वृत्त्यवच्छिन्नचैतन्यस्य ज्ञानरूपत्वमपितु वृत्त्युपलक्षितस्यैवेति स्वीक्रियते। तथा च मोक्षदशायामपि चैतन्ये वृत्त्युपलक्षितत्वस्य सत्त्वे बाधकाभावेन शुद्धेऽज्ञानत्वं नास्त्येव। एवमानन्दभिन्नत्वरूपमनात्मत्वमपि युक्तं वैषयिकानन्दस्यापि ब्रह्मात्मकतया पक्षानन्तर्गतत्वेनासिद्ध्यभावात्, वृत्तिरूपोपाधेरेव तथात्वादिति।

**एवम्** अत्यन्ताभावप्रतियोगित्वरूपं देशतः परिच्छिन्नत्वं, ध्वंस-प्रतियोगित्वरूपं कालतः परिच्छिन्नत्वम् अन्योन्याभावप्रतियोगित्वरूपं वस्तुतः परिच्छिन्नत्वमपि च मिथ्यात्वसाधको हेतुर्बोध्यः। एवमेवांशित्वहेतुनाऽपि प्रपञ्चमिथ्यात्वं साधयितुं शक्यमिति **चित्सुखाचार्याणामाशयः**। तदुक्तम्—

**अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः।**

**अंशित्वादितरांशीव दृगेषैव गुणादिषु।।** इति।

तथा चानुमानाकारः—अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात्, इतरांशिवत् इति। साध्यघटकतन्तुपदमुपादानपरम्। तथा च

स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वं स्याध्यं पर्यवसितम्। कार्यमात्रस्य स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वे सिद्धे तस्य मिथ्यात्वं सिध्यति।

अथ अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात्, यन्नैवं तन्नैवं यथा पटान्तरमिति सत्प्रतिपक्षः। नचैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावरूपसाध्यमप्रसिद्धमिति वाच्यम्, एतन्निष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, संसर्गाभावप्रतियोगित्वव्याप्यत्वात् प्रागभावप्रतियोगित्ववदिति सामान्यतः साध्यसिद्धिसम्भवात्। तथा चैतदनुमानेन सामान्यतः साध्यसिद्ध्या पूर्वोक्तानुमानेन विशिष्य सत्प्रतिपक्ष इति चेत्? न, साध्यप्रसिद्ध्यनुमाने तादात्म्येन संसर्गाभावप्रतियोगित्वस्य हेतुत्वेनाप्युपपत्तौ व्याप्यत्वांशदलवैयर्थ्यात्। एंवमुक्तप्रतिरोधानुमाने यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तौ एतन्निष्ठप्रागभावाप्रतियोगित्वमुपाधिः। तथाहि, एतत्तन्त्वारब्धत्वाभाव-एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वयोः द्वयोरपि पक्षावृत्तितया तदन्यत्रोपाधेः साध्य (व्यापक) व्यापकत्वम्। एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य पक्षे सन्दिह्यमानतया पक्षवृत्तितया सन्दिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियागित्वाव्यापकत्वमप्युपाधेरिति साधन (व्याप्य) अव्यापकत्वम्। तथा च प्रतिरोधानुमानस्य हीनबलतया स्थापनानुमानं युक्तमिति। एवञ्च स्वव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमिति प्रकृते एतदारब्धत्वाभावव्यापकस्य एतन्निष्ठप्रागभावाप्रतियोगित्वस्य व्यभिचारेण एतन्निष्ठात्यन्ताभावप्रतियोगित्वे एतदारब्धत्वाभावव्यभिचारित्वमनुमीयत इति भावः।

ननु प्रागभावाप्रतियोगित्वरूपोपाध्यभाववति पक्षे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वरूपहेतोः संशये तादृशहेतौ तादृशोपाधिव्यभिचारित्वस्याप्यनिश्चय इति चेत्? न, एतत्पटोपादानीभूतं यत् तन्त्ववच्छिन्नचैतन्यं तत्रारोपिते सर्पादौ एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वरूपोपाध्यभाव—एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमित्यनयोः द्वयोरपि निश्चितत्वेनोपाधिव्यभिचारनिश्चयस्य हेतौ सत्त्वात् तत्र साध्यव्यभिचारनिश्चयस्य सम्भवात्। अथवा सन्दिग्धोपाधिसत्त्वेऽपि हेतौ साध्यव्याप्यताग्रहप्रतिबन्धात् यथाश्रुतमपि युक्तमेव।

नन्वेवं व्यतिरेकव्याप्तौ उपाध्युद्भावने व्यतिरेकिमात्रोच्छेदापत्तिः। तथाहि, पथ्वी इतरेभ्यो भिद्यते पृथ्वीत्वादित्यत्र यत्र पृथ्वीत्वरत्वं तत्र पृथ्वीत्वाभाव इति व्यतिरेकव्याप्तौ पाकजरूपाभावस्योपाधित्वं स्यात्, जले साध्यव्यापकत्वात्, पृथ्वीतरत्ववत्तया सन्दिह्यमानपृथिव्यादौ पाकजरूपाभावस्यात्त्वेन साधना-

व्यापकत्वाच्चिति चेत्? न, साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमत-व्यापकत्वमित्युपाधिलक्षणस्य तत्र गतत्वेऽपि साध्यासमानाधिकरणधर्मवत् यत् साधनवत् तन्निष्ठाभावप्रतियोगितावच्छेदकः साध्यसमानाधिकरणवृत्तिर्यो धर्मस्तद्वत्त्वमिति **दीधितिकारो**क्तोपाधिलक्षणस्य तत्रासमन्वयात्, पृथ्वीत्वाभावासमानाधिकरणधर्मवतः साधनवतोऽप्रसिद्धत्वात्। अत्र च साध्योपाध्योर्व्याप्तिग्राहकतर्कासत्त्वात् न सन्दिग्धोपाधित्वमपि, साध्योपाध्योः हेतुसाध्ययोश्च व्याप्तिग्राहकतर्कसाम्ये एव सन्दिग्धोपाधित्वस्वीकारात्। प्रागभावाप्रतियोगित्वे तु दीधितिकारोक्तोपाधिलक्षणस्य समन्वयोऽस्त्येव, तथाहि, एतत्तन्त्वारब्धत्वाभाव-(एतत्तन्तूपादानकत्वाभाव) रूपसाध्यासमानाधि-करणधर्मवत् यत् साधनवत् एतत्तन्त्वच्छिन्नचैतन्यारोपितसर्पादि, तन्निष्ठात्यन्ताभावः एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वाभावः, तत्प्रतियोगिता-वच्छेदकधर्मः एतत्तन्तुनिष्ठप्रागभावांप्रतियोगितात्वं, तच्च साध्यसमानाधिकरण-वृत्त्यपीति तद्वत्त्वस्य तादृशप्रागभावाप्रतियोगित्वरूपोपाधौ सत्त्वात्।

ननु सत्कार्यवादस्य स्वीकारेण कार्यकारणयोरभेदेन कार्यस्य स्वोपादाने अनाश्रिततया स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वस्य सिद्धत्वेन सिद्ध-साधनमेव। स्वोपादानातिरिक्तनिष्ठात्यन्ताभावप्रतियोगित्वे साधिते तु तेन प्रपञ्चस्य मिथ्यात्वासिद्ध्या अर्थान्तरञ्च स्यादिति चेत्? न, नहि कार्यकारणयोरत्यन्तमभेदः तथात्वे कार्यकारणभाव एव न स्यात्, अपितु भेदसहिष्णुरेवाभेदोऽङ्गीकार्यः। तथा च सिद्धसाधनाद्यनवकाशः।

एवं पटे स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यस्य प्रत्यक्षादिना बाधोऽपि नास्ति, **नेह नानेत्यादि**श्रुत्या तदभिधानात्, प्रत्यक्षाद्यपेक्षया च श्रुतेर्बलीयस्त्वात्।

न च संयोगसम्बन्धेनैतत्तन्तौ वर्तमाने पटे एतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगित्वस्यासत्त्वाद्यभिचार इति वाच्यं, तत्रापि एतत्तन्तुनिष्ठाभाव-प्रतियोगित्वस्यैवाभ्युपगमेन तस्यापि पक्षसमत्वात्।

एवं तादृशात्यन्ताभावे एतत्तन्तुत्वावच्छिन्नवृत्तित्वमपि विशेषणं देयं, तेन पटस्याव्याप्यवृत्तित्वाभ्युपगमे तत्र संयोग इव स्वोपादाननिष्ठात्यन्ताभाव-प्रतियोगित्वसत्त्वेऽपि स्वोपादानवृत्तित्वे बाधकाभावादर्थान्तरमपि नास्ति। तथैव कालान्तरीयाभावमादाय अर्थान्तरवारणाय एतत्कालवृत्तित्वमप्यभावे विशेषणं देयम्। तथा चैतत्तन्तुत्वावच्छिन्नवृत्तिः एतत्कालवृत्तिश्च यः स्वोपादान-निष्ठात्यन्ताभावः तत्प्रतियोगित्वं साध्यं पर्यवसितम्।

वस्तुतः संयोगस्यैवाव्याप्यवृत्तित्वं सिद्धान्तासम्मतं किमु पटस्य, पटतदभावयोरैकाधिकरण्ये विरोधस्य सर्वजनसिद्धत्वादिति आद्यं विशेषणम् एतत्तन्तुत्वावच्छिन्नवृत्तित्वमभावे नोपादेयम्।

ननु पटः एतत्तन्तुसमवेतः अन्यासमवेतत्वे सत्यंशित्वाद् अन्यासमवेतस्य पटस्यांशित्वमेतत्तन्तुसमवेतत्वं विनाऽनुपपन्नमित्यादिरीत्या पटस्यैतत्तन्तु-समवेतत्वमेव सिध्यतीति चेत्? न, तदैवेदं युक्तं स्यात् यदा तन्निष्ठाभावाप्रतियोगित्वमेतत्समवेतत्वे प्रयोजकं स्यात्। नचैतदस्ति, तार्किकमते केवलान्वयिधर्मे सामान्यादिनिष्ठात्यन्ताभावाप्रतियोगित्वसत्त्वेऽपि सामान्यादि-समवेतत्वानङ्गीकारात्।

**ननु** मिथ्यात्वानुमानं सोपाधिकं, तथाहि, उक्तानुमाने स्वबाधकाभिमता-बाध्यदोषप्रयुक्तभानत्वमुपाधिः। स्वं शुक्तिरजतं, तद्बाधकाभिमतं शुक्तिज्ञानं, तदबाध्यो दोषः—चाकचिक्यादि, तत्प्रयुक्तभानत्वं मिथ्याभूते शुक्तिरूप्येऽस्तीति साध्यव्यापकत्वम्। एवं हेतूकृतं दृश्यत्वादिकमाका-शादावप्यस्ति तत्रायमुपाधिर्नास्तीति साधनाव्यापकत्वमपि। तथाहि, स्वमाकाशं, तद्बाधकाभिमतं ब्रह्मज्ञानं, तदबाध्यत्वं कुत्रापि दोषे नास्तीति स्वपदेन तस्याग्रहणासम्भवेन शुक्तिरूप्यमादाय तद्बाधकाभिमताबाध्यदोषप्रयुक्त-भानत्वस्याकाशादावभावात्। एवं स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वमप्युपाधिः। तथाहि, स्वं शुक्तिरूप्यं तद्बाधकं शुक्तिज्ञानं, तदबाध्यबाधकं नेदं रजतमिति ज्ञानं, तत्प्रति निषेध्यत्वेन विषयत्वं शुक्तिरूप्ये वर्तत इति साध्यव्यापकत्वम्। एवमाकाशादौ तन्नास्तीत्युक्तरीत्या साधना-व्यापकत्वमपि। एवमुपाध्योः सत्योः नोक्तहेतूनां मिथ्यात्वसाधकत्वमिति चेत्? न, एतयोर्द्वयोरप्युपाध्योः साध्यव्यापकत्वाभावात्। तथाहि—मिथ्यात्वं तावद् ब्रह्मज्ञानैकबाध्ये देहात्मैक्येऽपि वर्तते तत्रोक्तोपाधिद्वयं नास्ति। स्वपदेन देहात्मैक्यं नैव धर्तुं शक्यते तद्बाधकब्रह्मज्ञानाबाध्यबाधकस्याप्रसिद्धेः। अतः शुक्तिरूप्यमेव स्वपदेन ग्राह्यम्। तद्बाधकाभिमताबाध्यदोषप्रयुक्तभानत्वस्य तद्बाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वस्य च देहात्मैक्येऽभावान्न साध्यव्यापकत्वमिति न तयोरुपाधित्वम्।

एवं यथा पर्वतो वह्निमान् धूमादित्यत्र पर्वतेतरत्वं नोपाधिः तद्वदेव पर्वतावयववृत्त्यन्यत्वमपि नोपाधिः, तत्तुल्यत्वात्, प्रकृतेऽपि स्वबाधकाभिमता-बाध्यदोषप्रयुक्तभानत्वं स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं वा

नोपाधिः। अयमाशयः—वह्निधूमयोः व्याप्तिग्राहकानुकूलतर्कसद्भावेन पर्वतेऽपि वह्नेर्निश्चितत्वेन तत्रैव पर्वतेतरत्वादेः साध्यव्यापकत्वभङ्गः। एवं प्रकृतेऽपि अनुकूलतर्केण श्रुत्या च प्रपञ्चे मिथ्यात्वे निश्चिते तत्रैवोक्तद्वयस्य साध्यव्यापकताभङ्ग इति न तयोरुपाधित्वम्।

यद्यपि पर्वतेतरत्वं सपक्ष इव विपक्षेऽपि वर्तते किन्तूक्तद्वयं सपक्ष एवेति न तयोः पक्षेतरतुल्यत्वं, तथापि साधनवत्पक्षमात्रव्यावर्तकत्वेन तयोः साधनवतः पक्षस्यैव व्यावर्तकत्वम्। विपक्षस्तु न साधनवान्। एवं पर्वतावयववृत्त्यन्यत्वमपि यद्यपि पर्वतावयववृत्तेः रूपादेर्व्यावर्तकं तथापि रूपादेः साधनवत्त्वाभावात् साधनवत्पक्षमात्रव्यावर्तकमस्त्येवेति सर्वेषां पक्षेतरतुल्यत्वं सुघटम्।

ननु ह्रदो वह्निमान् जलादित्यादौ बाधोन्नीतत्वात् पक्षेतरत्वस्योपाधित्वं स्वीक्रियते तथैव प्रकृतेऽपि स्यादिति चेत्? न, ह्रदो वह्निमानित्यादौ हि पक्षे साध्याभावनिर्णये एव पक्षेतरत्वस्य साध्यव्यापकत्वं सुघटम्। पक्षे साध्याभावस्य निर्णयस्तावत् प्रत्यक्षादिप्रमाणैरेव सम्भवति। प्रकृते च तदभावात् नात्र बाधोन्नीतता।

किञ्च तयोरनुपाधित्वे बीजान्तरं—यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वम्, इतरांशेऽनुकूलतर्काप्रसरादिति प्रकृते दोषप्रयुक्तभानत्वस्य निषेध्यत्वेन विषयत्वस्य च साध्यव्यापकत्वं, तद्व्यतिरेकस्यैव साध्याभावसाधकत्वात्। अत्रायं भावः—स्वाभावेन पक्षे साध्याभावसाधकत्वं तावदुपाधेः प्रयोजनम्। तथा च यथा क्षित्यकुरादिकं कर्तृजन्यं कार्यत्वादित्यत्र शरीरजन्यत्वमुपाधिं प्रदर्श्य तदभावेन पक्षे साध्याभावः साध्यते पूर्वपक्षिणा—क्षित्यकुरादिकं कर्त्रजन्यं शरीराजन्यत्वादाकाशवदिति। अत्र तावत् सिद्धान्तिनामयमाशयः—पक्षे कर्त्रजन्यत्वसाधने जन्यत्वव्यतिरेकः अजन्यत्वमात्रमलम्, अतो जन्यत्वस्यैव कर्तृजन्यत्वव्यापकत्वं नतु शरीरजन्यत्वस्येति शरीरपदं व्यर्थम्। जन्यत्वमात्रन्तु साध्यव्यापकं सदपि न साधनाव्यापकमिति नोपाधित्वं तस्य। तथा प्रकृतेऽपि प्रपञ्चे मिथ्यात्वाभावसाधने दोषप्रयुक्ताभानत्वं निषेध्यत्वेन अविषयत्वं वा अलमिति दोषप्रयुक्तभानत्वस्य निषेध्यत्वेन विषयत्वस्य च साध्यव्यापकत्वमितरांशस्य वैयर्थ्यात्। तथा च दोषप्रयुक्तभानत्वस्य निषेध्यत्वेन विषयत्वस्य च साधनाव्यापकत्वाभावात् दृश्यत्वाद्यनुमितदोषप्रयुक्तत्वादेः वियदादौ निश्चितत्वादिति न तयोरुपाधित्वम्।

**नन्वेव**मपि यदि दृश्यत्वं मिथ्यात्वं विनाऽनुपपन्नं स्यात् तदैव दृश्यत्वस्य मिथ्यात्वसाधकत्वं स्यात्। तत्तु नास्ति मिथ्यात्वं विनाऽपि दृश्यत्वसम्भवादिति चेत्?, न, प्रपञ्चस्य मिथ्यात्वं विना दृग्दृश्यसम्बन्धानुपपत्तेः। तथाहि, ज्ञानं विषयेण सम्बद्धमेव प्रकाशकं वक्तव्यम्, असम्बद्धस्य प्रकाशकत्वेऽतिप्रसङ्गः स्यात्, सम्बद्धत्वेऽपि ज्ञानज्ञेययोः प्रसिद्धसंयोगसमवायादिसम्बन्धाः न सम्भवन्ति, तदतिरिक्तश्च अनाध्यासिकसम्बन्धो नास्त्येवेत्याध्यासिक एव दृग्दृश्ययोः सम्बन्धो वाच्यः। नच दृग्दृश्ययोः विषयविषयिभावः सम्बन्धोऽस्त्विति वाच्यं, तस्य सम्बन्धत्वासम्भवात्। तथाहि—विषयविषयिभावो हि नहि स्वतन्त्रः सम्बन्धः, किन्तु विषयत्वविषयित्वरूपः, तयोश्च एकैकमात्रनिष्ठतया द्विष्ठत्वाभावेन सम्बन्धत्वाभावात्। अपि च विषयत्वस्य निरूपणमपि न सम्भवति। तथा हि—ज्ञानजन्यफलाधारत्वं विषयत्वं न सम्भवति, तत्र हि फलं ज्ञातता, तस्या अनङ्गीकारात्। किञ्च ज्ञाततायाः अतीते भाविनि चासम्भवेन तत्र विषयत्वं न स्यात्। नापि हानादि फलत्वेन विवक्षितं, गगनादेरविषयत्वप्रसङ्गात् तस्य सर्वव्यापित्वेन हानादिरूपफलानाश्रयत्वात्। किञ्च ज्ञानजन्यहानादिरूपफलाधारत्वस्य रजतमलेऽपि सत्त्वेन तस्य रजतज्ञानविषयत्वापत्तिः स्यात्। प्रत्यभिज्ञा व्यवहारो वाऽपि तत्फलं न भवितुमर्हति, तयोर्ज्ञातृनिष्ठत्वेन ज्ञेयवृत्तित्वाभावात्। तस्मात् ज्ञानजन्यफलाधारत्वं न विषयत्वम्। ज्ञानजन्यहानादिरूपबुद्धिगोचरत्वं विषयत्वमित्यपि न, गोचरत्वस्य विषयत्वरूपत्वेन तस्यैव च निरूपणीयतयाऽऽत्माश्रयः स्यात्। ज्ञानकर्मत्वमपि विषयत्वं न सम्भवति, नित्यस्येश्वरज्ञानस्य कर्मकारकाजन्यत्वेन तद्विषये घटादावव्याप्तेः। ज्ञानाकारार्पकत्वमपि विषयत्वं न युक्तं, ज्ञानादतिरिक्तस्याकारस्यासत्त्वात् सर्वेषां ज्ञानहेतूनामपि विषयत्वप्रसङ्गात्। दृश्यमानत्वे सति ज्ञानाकारार्पकत्वमपि विषयत्वं न युक्तं, यतो दृश्यमानत्वं हि दृग्विषयत्वमिति विषयत्वगर्भत्वेनात्माश्रयः स्यात्। ज्ञानजन्यव्यवहारयोग्यत्वमपि न विषयत्वं, योग्यताया अविषयत्वप्रसङ्गात् योग्यतायां योग्यतान्तराभावात्। ननु प्रपञ्चमात्रस्य दृश्यत्वस्वीकारे दृश्यत्वस्यापि दृश्यत्वं स्वीक्रियते, तच्च न दृश्यत्वान्तरमपेक्षतेऽनवस्थानात्। किन्तु दृश्यत्वं स्वत एव दृश्यम्। तथैव योग्यताऽपि स्वयमेव योग्येति चेत्? न, योग्यतावच्छेदकरूपस्याग्रहणे योग्यताया ग्रहासम्भवात्, तद्धि रूपं ज्ञानविषयत्वं स्यात्, तथाचात्माश्रयः। सन्निकृष्टकरणेन यज्ज्ञानमुत्पाद्यते तत्त्वमपि विषयत्वं न सम्भवति, ईश्वरज्ञानस्य

नित्यत्वेन करणाजन्यतया तद्विषये घटादावव्याप्तिः स्यात्। संविदि भासमानत्वमपि न विषयत्वं, संविदीत्यत्र अधिकरणसप्तम्या असम्भवात्, ज्ञानस्य ज्ञेयानधिकरणत्वात्। विषयत्वस्यैव निरूप्यमाणत्वेन विषयसप्तम्या अप्यसम्भवात्। किञ्च भासमानत्वं हि भानविषयत्वमित्यन्योन्याश्रयापात इति सति सप्तमीपक्षोऽपि न युक्त इति। नापि सम्बन्धान्तरमन्तरा ज्ञानावच्छेदकत्वमपि विषयत्वं सम्भवति, तथा हि मत्समवेतं रूपज्ञानमित्यत्र रूपज्ञानसमवायः सम्बन्धान्तरं विनैव रूपज्ञानस्यावच्छेदक इति इदं रूपमित्यादिरूपज्ञाने रूपज्ञानसमवायस्यापि विषयत्वं स्यात्।

ननु ज्ञानविषयः इत्यभियुक्तप्रयोग एव ज्ञानविषययोः सम्बन्धः। ज्ञानविषयपदप्रयोगविषयत्वमित्यर्थः। एवञ्च पूर्वपूर्वप्रयोगमपेक्ष्योत्तरोत्तरप्रयोग-स्वीकारेणान्योन्याश्रयोऽपि न, अन्यथा तादृशविषयत्वरूपप्रवृत्तिनिमित्तत्वज्ञाने सति तादृशप्रयोगः, तादृशप्रयोगसिद्धौ च तद्घटिततादृशविषयत्व-ज्ञानमित्यन्योन्याश्रयः स्यात्। लक्षणान्तर्गतः प्रयोगः पूर्वतनानां, तमपेक्ष्य च लक्षणसाध्योऽस्मदीयप्रयोग इत्युभयोः प्रयोगयोर्भिन्नत्वेन नान्योन्याश्रयः इति चेत्?, न, यतोहि एतावता सामान्यतो ज्ञेयत्वं निरुक्तं भवति न त्वेतज्ज्ञानविषयत्वं सिध्यति। तदेव च निर्वक्तव्यम्। यदुक्तं पूर्वप्रयोगमपेक्ष्योत्तर-प्रयोग इति तदपि केवलमनादिविषये एव सम्भवति न तु अद्योत्पन्ने। अन्यच्च प्रयोगो नाम स्वजन्यप्रतिपत्तिविषये स्वस्य सम्बन्धः, स च विषयत्वघटित इत्यात्माश्रयोऽपि स्यात्।

अथ यज्ज्ञानं यदभिलपनरूपव्यवहारकारणं स तस्य विषयः। तथा च यज्ज्ञानजन्यः यस्याभिलपनरूपव्यवहारः स तस्य ज्ञानस्य विषय इत्यर्थः। एडमूकादीनामभिलपनरूपव्यवहाराभावेन तत्फलोपधायकत्वस्यासत्त्वेऽपि तज्जननस्वरूपयोग्यत्वस्य सत्त्वान्न एडमूकादिज्ञानविषयेऽव्याप्तिः। अत्र जननस्वरूपयोग्यत्वञ्च सहकारिविरहकार्याभाववत्त्वरूपम्। यद्यपि निर्विकल्प-ज्ञानविषये व्यवहारजनकत्वं नास्ति तथापि सिद्धान्तिमते तार्किकाभिमतनिर्विकल्पकस्यानङ्गीकारेण न क्षतिः। कस्य को विषय इत्यननुगतस्यैव प्रश्नविषयत्वेन यत्तदोरननुगमो न दोषाय। नन्वेवं कृते यत्र घटज्ञानानन्तरं प्रमादात् पट इति व्यवहारस्तत्र पटव्यवहारजनके घटज्ञाने पटस्य विषयत्वापत्तिरिति चेत्? न, तत्र पट इति व्यवहारे न घटज्ञानस्य कारणत्वं किन्तु पूर्वतनपटज्ञानस्य तज्जन्यसंस्कारस्य वा, ज्ञानव्यवहारयोः समानविषयकत्वेनैव कार्यकारणभावादिति चेत्?

अत्रोच्यते—अभिलपनव्यवहारजननयोग्यताया अवच्छेदकरूपापरिचये ग्रहीतुमशक्यतया तद्विषयत्वस्यैव चावच्छेदकरूपतयाऽऽत्माश्रयः स्यात्। अतएव ज्ञानकर्मत्वं विषयत्वं कर्मत्वञ्च क्रियाधीनव्यवहारयोग्यत्वरूपातिशयवत्त्वमित्याद्यपास्तं, योग्यताया ह्यवच्छेदकरूपज्ञानं विना ग्रहीतुमशक्यत्वात्, अवच्छेदकञ्च रूपं तद्विषयत्वादन्यन्नास्तीति।

ननु सम्बन्धान्तरमनपेक्ष्य यज्ज्ञानावच्छेदकत्वे सति यज्ज्ञानानवच्छिन्नस्वभावत्वं तज्ज्ञानीयविषयत्वमिति। न च अहमित्यात्मविषयके ज्ञाने आत्मनोऽवच्छेदकत्वेऽपि तत्र सम्बन्धान्तराभावो नास्ति, तत्र आत्मनः स्वज्ञानेन सह समवायसम्बन्धस्य सत्त्वादिति वाच्यं, तत्र समवायस्य सत्त्वेऽप्यामनो ज्ञानावच्छेदकत्वे तदपेक्षाभावेनादोषात्। ज्ञानानवच्छिन्नस्वभावत्वदलानुपादाने रूपज्ञानं मत्समवेतं, रूपज्ञानं ध्वस्तं, रूपज्ञानमिष्टमित्यादौ आत्मसमवायध्वंस-इच्छादीनामपि रूपज्ञानविषयत्वापत्तिः स्यात्, तेषामपि सम्बन्धान्तरमनपेक्ष्य ज्ञानावच्छेदकत्वात्। तद्दलोपादाने तु तेषां रूपज्ञानावच्छिन्नस्वभावत्वात् सम्बन्धेच्छादीनां सम्बन्धीष्यमाणाद्यवच्छिन्नस्वभावादिति नोक्तदोषः। ननु विषयो हि न ज्ञानावच्छिन्नस्वभावः, ज्ञानन्तु पुनः विषयावच्छिन्नस्वभावमेव। ज्ञानविषयकानुमित्यनुव्यवसायादावपि ज्ञानं विषयतयैवावच्छेदकमिति तत्रापि विषयावच्छिन्नस्वभावत्वमेवेति चेत्? न, मत्समवेतं रूपज्ञानमिति ज्ञाने आत्मसमवायस्य ज्ञानावच्छिन्नस्वभावत्वेन तत्राव्याप्तिः स्यात्, सम्बन्धस्य सम्बन्ध्यवच्छिन्नस्वभावत्वनियमेन सम्बन्धभूतस्यात्मसमवायस्य सम्बन्धिभूत-स्वज्ञानावच्छिन्नस्वभावत्वात् रूपज्ञानं मत्समवेतम् इति ज्ञाने रूपज्ञाने रूपावच्छिन्नत्वं भासते मत्समवेतं रूपज्ञानमिति ज्ञाने तु रूपमसमवायोभयावच्छिन्नत्वमिति द्वयोर्वैषम्यम्। किञ्च घटस्य ज्ञानमिति प्रतीतिबलात् ज्ञानस्य यथा घटावच्छिन्नस्वभावत्वमवगम्यते तथैव ज्ञातो घट इति प्रतीत्या घटस्यापि ज्ञानावच्छिन्नस्वभावत्वसम्भवात्।

ननु यज्ज्ञानं यदीयस्वभावं स तस्य विषयः। मत्समवेतं रूपज्ञानमित्यत्रात्मसमवायस्य रूपज्ञानावच्छिन्नस्वभावत्वमिति न तत्र दोषः इति चेत्?, न, यदीयस्वभावमिति तद्धितस्य यद्विषयकस्वभावमित्यर्थः, तथाचात्माश्रयात्।

ननु ज्ञानजनककरणसन्निकर्षाश्रयत्वं विषयत्वं, करणत्वञ्च असाधारणज्ञानकारणत्वम्। तेन ज्ञानकरणमनःसन्निकर्षाश्रयत्वस्यात्मनि सत्त्वेऽपि नातिव्याप्तिः। सन्निकर्षपदेनाप्यत्रासाधारणज्ञानजनकसन्निकर्षो विवक्षितः, तेन

ज्ञानकरणेन्द्रियसन्निकर्षाश्रयत्वस्य मनसि सत्त्वेऽपि न तत्रातिव्याप्तिरिति चेत्? न, चक्षुर्मनःसंयोगोऽपि चाक्षुषज्ञानासाधारणकारणमिति तदाश्रयस्य मनसोऽपि चाक्षुषज्ञानविषयत्वापत्तेः। किञ्च अनुमित्यादिविषये उक्तलक्षणागमनादव्याप्तिश्च स्यात्। अथ अनुमितौ लिङ्गज्ञानं करणं, तद्व्याप्तत्वसम्बन्धेन तदाश्रयत्वं साध्ये वर्तत एवेति चेत्? तद्वदेव लिङ्गज्ञानाश्रयत्वस्य लिङ्गेऽपि सत्त्वेन लिङ्गस्यानुमितिविषयत्वं स्यात्। यदि तद्व्याप्तत्वरूपसम्बन्धस्यैवानुमितौ विषयतानियामकत्वमिति उच्यते तदा व्यापकतावच्छेदकव्यापकसम्बन्धादीना-मनुमित्यविषयत्वापत्तिः स्यात्, तत्र स्वव्याप्तत्वसम्बन्धेन लिङ्गज्ञानस्याभावात्।

न च स्वरूप एव ज्ञानज्ञेययोः सम्बन्धोऽस्त्विवति वाच्यं, तस्यासिद्धेः। स्वरूपसम्बन्ध इत्यस्य स्वरूपं सम्बन्ध इत्यर्थस्तदा संयोगसमवाययोरपि स्वरूपसम्बन्धत्वं स्यात्। तद्वारणाय तदन्यत्वविशेषणेऽपि हिमवतः विन्ध्यस्यापि च स्वरूपसम्बन्धत्वापत्तिः।

ननु सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वमेव स्वरूपसम्बन्धः इति चेत्? न, तथा सति आत्मानं जानामीत्यत्राऽत्मनो विषयत्वं न स्यात्, तत्र ज्ञानस्य आत्मना सह सम्बन्धान्तरस्य समवायस्य सत्त्वात्। एवम् अतीन्द्रियाभावादौ विशिष्टप्रतीतिजननयोग्यत्वस्याभावात्तत्राव्याप्तिः स्यात्। नह्यतीन्द्रियाभावादिविषयिणी विशिष्टप्रतीतिरस्ति। किञ्चोक्तलक्षणे स्वीकृतेऽभाव-भ्रमोऽनुपपन्नः स्यात्। तथाहि—अभावभ्रमोऽपि विशिष्टप्रतीतिरेव तादृशभ्रमे भासमानस्याभावस्य विशिष्टप्रतीतिजननयोग्यत्वेन तत्र स्वरूपसम्बन्धस्य सत्त्वात्। तथाचारोप्यस्य सम्बन्धसत्त्वे आरोपानुपपत्तिरिति। विशिष्टप्रमाजन-योग्यत्वोक्तावपि न निस्तारः, भ्रमानुपपत्तेरिव प्रमात्वापत्तेरप्यापाद्यत्वात्।

सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यतावच्छेदकावच्छिन्नस्य सम्बन्धत्वमित्यपि न सम्भवति, अतीन्द्रियाकाशात्यन्ताभावादावव्याप्तेः, नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमेन ततो विशिष्टप्रतीत्युत्पत्ति-प्रसङ्गात्।

तस्माद् दृग्दृश्ययोर्मध्ये कस्याप्यनध्यासिकस्य सम्बन्धस्या-सम्भवेनाध्यासिक एव सम्बन्धो वाच्य इति दृग्दृश्यसम्बन्धानुपपत्तेरपि मिथ्यात्वसिद्धिः।

ननु दृश्यत्वाद्यनुमानसाध्यं मिथ्यात्वं यदि सत्यं स्यात् तर्हि सत्यद्वयस्वीकारेणाद्वैतहानिः स्यात्। किञ्च मिथ्यात्वस्यापि प्रपञ्चान्तर्गतत्वेन

तत्सत्यत्वे प्रपञ्चसत्यत्वापत्तेः। यदि च प्रपञ्चमिथ्यात्वस्य मिथ्यात्वं तदा सिद्धसाधनम्। किञ्च प्रपञ्चः सन् मिथ्याभूतमिथ्यात्वकत्वादित्यनुमानेन प्रपञ्चस्य सत्यत्वमेव साधितं स्यात्। एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्ध-धर्मयोरेकमिथ्यात्वेऽपरसत्यत्वमिति नियमेन प्रपञ्चे प्रसक्तयोः परस्परविरुद्धयोः सत्यत्वमिथ्यात्वयोः एकस्य=मिथ्यात्वस्य मिथ्यात्वे अपरस्य सत्यत्वस्य सत्यत्वमिति पक्षद्वयेऽपि प्रपञ्चसत्यत्वमेवेत्युभयथाऽप्यद्वैतव्याघात इति चेत्? न, मिथ्यात्वस्य मिथ्यात्वेऽपि प्रपञ्चसत्यत्वापत्तेरभावात्। यतोहि एकस्मिन् धर्मिणीति नियमस्तत्रैव प्रवर्तते यत्र निषेध्यतावच्छेदकं भिन्नं भिन्नं भवति। यत्र तु निषेध्यतावच्छेदकमेकमेव उभयवृत्ति तत्र नास्य नियमस्य प्रसरः। यथा शुक्तिरूप्ये एकस्मिन् धर्मिणि परस्परविरुद्धयोः रजतत्वतदभावयोः परस्परविरहव्याप्ययोर्वा रजत्वरजतभेदयोः एकमिथ्यात्वे अपरसत्यत्वं भवत्येव, तत्र निषेध्यतावच्छेदकं भिन्नं रजतत्वत्वरजतत्वाभावत्वादिकमिति तत्रायं नियमः प्रसरति। किन्तु एकस्मिन् धर्मिणि गजे परस्परविरुद्धयोः गोत्वाश्वत्वयोः प्रसक्तयोः एकतरनिषेधे अन्यतरस्य सत्यत्वं न भवति, तत्र निषेध्यतावच्छेदकं गजत्वात्यन्ताभावव्याप्यत्वमुभयत्रैकमेवेति नात्रायं नियमः प्रसरति। प्रकृते च सत्यत्वमिथ्यात्वयोः निषेध्यतावच्छेदकमेकमेव दृश्यत्वादीत्युक्तनियमस्याप्रसक्तौ न प्रपञ्चसत्यत्वापत्तिः। नच गोत्वाश्वत्वयोः परस्परविरुद्धयोरपि न परस्परविरहरूपत्वं नापि परस्परविरहव्यापकत्वमिति तत्रोक्तनियमस्य प्रसक्तिर्मास्तु, किन्तु शुक्तिस्थलवत् सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वात् परस्परविरहव्यापकरूपत्वाद् वा उक्तनियमः प्रवर्तिष्यत एवेति वाच्यं, त्रिकालाबाध्यत्वरूपसत्यत्वस्य क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधि-करणत्वरूपमिथ्यात्वस्य च स्वीकृतत्वात्, तयोः परस्परविरहरूपत्वं परस्परविरहव्यापकत्वञ्च नास्तीति सदसत्त्वानधिकरणत्वरूपप्रथममिथ्यात्व-निर्वचनावसरे प्रतिपादितप्रायमेव।

अस्तु वा तयोः परस्परविरहरूपत्वमेव तथापि विषमसत्ताकयोः सत्यत्वमिथ्यात्वयोर्न विरोधः। तथा च प्रपञ्चे व्यावहारिकमिथ्यात्वकाल्पनिक-सत्यत्वयोर्द्वयोरप्युपपत्तिः। अथवा तार्किकैः यथा संयोगस्याव्याप्यवृत्तित्व-मङ्गीकृत्य एकस्मिन्नेव धर्मिणि संयोगतदत्यन्ताभावौ स्वीक्रियेते तथैव सत्यत्वमिथ्यात्वयोः एकस्मिन् धर्मिणि सम्भवस्वीकारेण नोक्तदोषः। तथा च एकत्र गोत्वगोत्वाभावयोः विरोधस्य सिद्धत्वेऽपि तार्किकैः यथा परस्परविरह-रूपयोरपि संयोगतदभावयोः प्रमाणबलादविरोधः स्वीक्रियते तथैव सत्यत्वमिथ्यात्वयोरपि परस्परविरहरूपत्वेऽप्यविरोधः स्वीक्रियत इति भावः।

एवं मिथ्यात्वानुमानम् 'एकमेवेत्यादि' श्रुत्याऽपि समर्थ्यते। ननूक्त श्रुत्या स्वस्वरूप-स्वप्रामाण्य-स्वयोग्यतादेरपि मिथ्यात्वं साध्यते न वा? साध्यते चेत् शब्दबोध्यार्थस्य शब्दतत्प्रामाण्ययोग्यतादिना समानसत्ताकत्वनियमात् श्रुतिप्रतिपादिताद्वैतरूपार्थस्यापि मिथ्यात्वापत्तिः स्यात्। अतस्तया तेषां मिथ्यात्वं न साध्यते इति वक्तव्यम्। यतः श्रुतिरियं स्वस्वरूपादिकमुपजीव्य प्रवृत्ता न तद्विघाताय प्रवर्तिष्यते। तथा च सति न ब्रह्मेतरसकलमिथ्यात्वसिद्धिरिति चेत्?

अत्रोच्यते—श्रुत्या स्वस्वरूपादीनामपि मिथ्यात्वं साध्यत एव। यच्चोक्तं शब्दबोध्यस्य शब्दतत्प्रामाण्यादिना समानसत्ताकत्वनियम इति, तन्न युक्तं, तादृशनियमस्य स्वाप्नदेवतादिवाक्ये व्यभिचारात्। तथाहि, यत्र शब्दत्वं तत्र स्वस्वरूपादिसमसत्ताकार्थबोधकत्वमिति व्याप्तेराकारः, स्वाप्नदेवतावाक्ये शब्दत्वस्य सत्त्वेऽपि स्वस्वरूपादिसमानसत्ताकार्थबोधकत्वं नास्ति। किञ्चोक्तव्याप्त्यनुसारम् अद्वैतश्रुतिबोधितोऽर्थो मिथ्या कल्पितशब्दप्रतिपादितत्वात् प्रतारकवाक्यवदित्यनुमानाकारो निष्पद्यते। अत्र चानुमाने परोक्षत्वमनित्यत्वञ्चोपाधिः। दृष्टान्तीभूते प्रतारकवाक्ये परोक्षत्वानित्यत्वयोः सत्त्वात्, पक्षे च चैतन्ये तयोरसत्त्वात् साध्यव्यापकत्वसाधनाव्यापकत्वयोः सत्त्वात्। तस्मादुक्तनियमे प्रमाणाभावेन स्वस्वरूपादेर्मिथ्यात्वबोधनेऽपि श्रुत्यर्थस्य न मिथ्यात्वं, तत्र मिथ्यात्वप्रयोजकदृश्यत्वादेरभावादिति।

एवमद्वैतश्रुतिः प्रत्यक्षगतार्थक्रियाकारित्वरूपव्यावहारिकप्रामाण्यमुपजीव्य प्रवृत्ता, किन्तु न हि तया प्रत्यक्षादेः व्यावहारिकप्रामाण्यं बाध्यते, अपितु तात्त्विकत्वमेव बाध्यते। तच्च नोपजीव्यमिति प्रकृते उक्तन्यायावतारो नास्ति। स्वोपजीव्यविरोधे एवैतन्न्यायप्रवृत्तिः। तथा च प्रत्यक्षादेर्यदि अमिथ्याभूतत्वेन निमित्तता स्यात् तर्ह्युक्तन्यायावतारः स्यात्। अत्र तु प्रत्यक्षादेर्निमित्तता स्वरूपत एवास्तीति।

ननु प्रत्यक्षादिविरोधो माभूदित्येतदर्थं तत्त्वमस्यादिवाक्येन यथा तत्त्वम्पदयोः चैतन्यमात्रे लक्षणा क्रियते तथैव अत्रापि घटादिव्यावहारिकप्रपञ्चस्य प्रत्यक्षादिप्रमाणसिद्धतया तदविरोधाय मिथ्यात्वश्रुत्या तदतिरिक्तकल्पितपदार्थानामेव मिथ्यात्वं बोध्यतामिति चेत्? न, मिथ्यात्वबोधकश्रुतेः प्रत्यक्षादिना विरोधाभावात्। प्रत्यक्षेण हि प्रपञ्चस्य व्यावहारिकसत्त्वं प्रतिपाद्यते तच्च न श्रुत्या निषिध्यते, श्रुतेः प्रपञ्चस्य तात्त्विकाकारतानिषेधे तात्पर्यादिति प्रकृते नोक्तरीत्या सङ्कोचस्यावश्यकता। तत्त्वमस्यादिस्थले तु

सर्वज्ञत्वादिविशिष्टचैतन्यस्य अल्पज्ञत्वादिविशिष्टचैतन्येन सहाभेदोक्तौ विशिष्टयोरैक्ये विशेषणयोरप्यैक्यनियमेन सर्वज्ञत्वाल्पज्ञत्वयोरप्यैक्यप्रसक्तिः स्यादिति तद्भिया लक्षणाऽङ्गीकार इति वैषम्यम्।

अथाद्वैतश्रुतेः चैतन्यमात्रपरत्वे तया विश्वमिथ्यात्वाबोधनात् न प्रपञ्चसत्यत्वहानिः, चैतन्यस्य च स्वप्रकाशतया स्वतःसिद्धत्वेन तत्परकश्रुतेः वैयर्थ्यञ्च। यदि च श्रुतिः द्वितीयाभावविशिष्टचैतन्यपरा तदाऽखण्डार्थत्वहानिः, विशिष्टबोधकवाक्येऽखण्डार्थत्वाभावात्,

**संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।**
**उक्ताऽखण्डार्थता यद्वा तत्प्रादिपदिकार्थता।।**

इत्यादिना संसर्गागोचरप्रमितिजनकवाक्यस्यैव अखण्डार्थकत्वस्वीकारात्।

अत एव द्वितीयाभावोपलक्षितेऽपि चैतन्ये न श्रुतितात्पर्यम्, उक्तरीत्यैवाखण्डार्थत्वहानेः। किञ्च उपलक्ष्यवस्त्वभावे नोपलक्षणत्वम्। काकवन्तो देवदत्तगृहा इत्यत्र यथा काकेनोपलक्ष्यमुत्तृणत्वादि भवतीति तस्योपलक्षणत्वं युक्तम्। प्रकृते तु उपलक्षणीभूतद्वितीयाभावेनोपलक्ष्यस्य कस्याप्यभावेनात्र नोपलक्षणत्वसम्भव इति कुत्र श्रुतेः तात्पर्यमिति चेत्?

अत्रोच्यते—द्वितीयाभावोपलक्षिते एव श्रुतेस्तात्पर्यात्। यच्चोक्तम् उपलक्ष्याभावे नोपलक्षणत्वमिति तत्सत्यं, प्रकृतेऽपि द्वितीयाभावस्योपलक्ष्यं चैतन्यस्वरूपमिति नोक्तापत्तिः। नहि स्वरूपातिरिक्तोपलक्ष्यसत्त्वमुपलक्षणत्वे तन्त्रं किन्तु उपलक्ष्यसत्त्वमात्रम्। यच्चोक्तं श्रुतेश्चैतन्यपरत्वे द्वैतमिथ्यात्वं न सिध्येदिति, तन्न, द्वितीयाभावोपलक्षितचैतन्ये महातात्पर्यस्य सत्त्वेऽप्यवान्तरतात्पर्यस्य द्वैताभावबोधनेऽपि सत्त्वात्।

ननु उपलक्षणीभूतद्वितीयाभावो यदि ब्रह्मणि अस्ति तर्हि अद्वैतहानिः स्यात्। यदि च नास्ति तथापि तद्वत्तया चैतन्यस्य श्रुत्या बोधनात् तदभाववति तत्प्रकारकबोधजनकत्वेन श्रुतेर्भ्रमजनकत्वं स्यादिति चेत्? न, पक्षद्वयेऽपि दोषाभावात्। तथाहि, द्वैताभावस्य ब्रह्मणि सत्त्वेऽप्यभावस्याधिकरणात्मकत्वेन तस्य ब्रह्माभिन्नतया नाद्वैतहानिः। तस्यासत्त्वेऽपि विशेष्यांशमुपलक्षितांशं वा आदाय श्रुतेस्तत्त्वावेदकत्वोपपत्तिः, तस्यैव श्रुतेर्मुख्यतात्पर्यविषयत्वात्, मुख्यतात्पर्यविषयस्यैवासत्यतायामतत्त्वावेदकत्वस्वीकारात्। तस्मात् चिन्मात्रे श्रुतेस्तात्पर्याभ्युपगमेऽपि न दोष इति।

ननु द्वैताभावे श्रुतेर्महातात्पर्यं नास्तीत्युक्तम्। तत्किं द्वैताभावस्य प्रमाणान्तरप्राप्त्या तस्य न महातात्पर्यविषयत्वम्। यथा **वायुर्वै क्षेपिष्ठा देवता** इत्यत्र वायोः शीघ्रगामित्वस्य प्रमाणान्तरप्राप्त्या श्रुतेरन्यपरत्वम्। तच्च प्रकृते न सम्भवति, द्वैताभावस्य अद्वैतश्रुत्यतिरिक्तप्रमाणेनासिद्धत्वात्। अथ द्वितीयाभावः प्रमाणान्तरेण विरुद्ध इति कृत्वा तत्र श्रुतेर्महातात्पर्यविषयत्वं नास्ति, यथा **'स आत्मनो वपामुदखिदत्'** इत्यत्र आत्मवपोत्खननस्य प्रत्यक्षादिप्रमाणविरुद्धतया न तत्र श्रुतेस्तात्पर्यम्। तदपि अत्र न सम्भवति, द्वैतग्राहिप्रत्यक्षादेः श्रुत्यैव बाधात्। एवं **'ग्रहं समार्ष्टि'** इत्यादौ यथा उद्देश्यविशेषणीभूतग्रहगतैकत्वसंख्याऽविवक्षिता तथैवात्रापि द्वितीयाभावोऽविवक्षित इत्यपि न युक्तं, विधेयद्वयस्य प्राप्तौ वाक्यभेदभिया अन्यतरस्य विधेयस्याविवक्षा भवति। 'ग्रहं सम्मार्ष्टि' इत्यत्र एकत्वं सम्मार्जनञ्च द्वयं विधेयतया प्राप्तमिति एकत्वस्याविवक्षा उचिता। प्रकृते तु द्वितीयाभावातिरिक्तस्य कस्यापि विधेयस्याप्राप्तौ अविवक्षाऽनुचितेति। किञ्च ग्रहस्य प्रमाणान्तरप्राप्ततया उद्देश्यत्वसम्भवेऽपि चिन्मात्रस्य प्रमाणान्तराप्राप्त्या उद्देश्यत्वमपि नास्ति येन तद्विशेषणस्य द्वैताभावस्याविवक्षा स्यात् इति चेत्?

अत्रोच्यते—स्वविरोधादेव श्रुतेः द्वैताभावे न महातात्पर्यविषयत्वम्। द्वितीयमात्रं निषेधन्ती श्रुतिः द्वैताभावमपि निषेधति। तस्मात् यदि श्रुतेर्द्वैताभावेऽपि महातात्पर्यं स्यात् तर्हि तया तन्निषेधो न स्यादिति स्वविरोधादेव तत्र महातात्पर्याभावः।

अथ प्रमाणान्तरेण प्राप्तस्यैव निषेध इति द्वितीयाभावस्याप्राप्तत्वेन कथं तन्निषेधः? यदि चाद्वैतश्रुत्यैव द्वैताभावः प्राप्तस्तर्हि तयैव तस्य निषेधः कथमुपपद्यते इति चेत्? उच्यते, येन यत् येन रूपेण प्राप्यते तेन तस्य तेनैव रूपेण निषेधो न सम्भवति। प्रकृते तु श्रुत्या द्वैताभावो द्वैताभावत्वेन प्राप्यते निषिध्यते च द्वितीयत्वेनेति न कोऽपि विरोधः। प्राप्यतावच्छेदकनिषेध्यतावच्छेदकयोरैक्ये एवोक्तविरोधः, प्रकृते तु न तथा। यत्र तु प्राप्यतावच्छेदकं निषेध्यतावच्छेदकं चैकं तत्र यदि प्राप्तिशास्त्रनिषेधशास्त्रयोस्तुल्यविषयकत्वं, यथा **'मा हिंस्यात् सर्वा भूतानि'**, **'अग्नीषोमीयं पशुमालभेत'** इत्यनयोः, अत्र प्राप्तिशास्त्रम् अग्नीषोमीयेति, निषेधशास्त्रञ्च मा हिंस्यादित्यादि, प्राप्यतावच्छेदकं निषेध्यतावच्छेदकञ्चैकमेव हिंसात्वं, तत्र विशेषशास्त्रस्य अग्नीषोमीयेत्यादेर्यो विषयः तं विहाय मा हिंस्यादित्यादिसामान्यशास्त्रस्य प्रवृत्तिः। यदि च प्राप्तिशास्त्रनिषेधशास्त्रयोस्तुल्यविषयत्वं, यथा **'अतिरात्रे**

**षोडशिनं गृह्णाति', 'नातिरात्रे षोडशिनं गृह्णाति'** इत्यत्र, अत्र प्राप्यतावच्छेदकं निषेध्यतावच्छेदकञ्चैकमेव षोडशिग्रहत्वम्, अतस्तत्र प्राप्तिशास्त्रनिषेध-शास्त्रयोस्तुल्यविषयकत्वेन विकल्प एव। प्रकृते च नोभयोरप्यवकाश इति।

ननु यया श्रुत्या द्वैताभावो निषिध्यते तयैव पुनः तस्य उपलक्षणत्वेन विशेषणत्वेन वा उपादानं कथं सम्भवतीति चेत्? न, यथा घटाभावबुद्धौ निषिद्धोऽपि घटः विशेषणं तद्वदत्रापि सम्भवात्। तस्माद् **एकमेवाद्वितीय-मित्यादिश्रुतिः** द्वितीयाभावोपलक्षितचैतन्यं बोधयन्ती विश्वमिथ्यात्वे प्रमाणम्। ननु श्रुत्या ययोरभेदो बोध्यते तयोरुपस्थितिरावश्यिका, अन्यथाऽनुपस्थितत्वे निषेध एव न स्यात्। एवञ्च तस्या उपस्थितेः श्रुतिजन्यत्वं न सम्भवति, श्रुतेः प्रमाणान्तरागोचराभेदमात्रपरत्वात् घटाद्युपस्थितेस्तदजन्यत्वात्। नापि तस्या उपस्थितेः प्रत्यक्षजन्यत्वं सम्भवति, तथासति तयोर्भेदस्यापि प्रत्यक्षसिद्धत्वेनाद्वैतश्रुतेरनवकाशापत्तेः, वस्तुनोः प्रत्यक्षसिद्धत्वे तद्भेदस्यापि प्रत्यक्षसिद्धत्वादिति चेत्? न, प्रत्यक्षसिद्धयोः वस्तुनोः भेदोऽपि प्रत्यक्षसिद्ध इति नियमे मानाभावात्, अन्यथा पदार्थस्वरूपज्ञानमेव भेदज्ञानं स्यात्, तथाचाभेदभ्रम एव न स्यात्। तत्रापि वस्तुस्वरूपस्य ज्ञातत्वात्। भेदं वस्तुस्वरूपमेवेति मन्वानाः स्वरूपभेदवादिनोऽपि न तयोर्ज्ञानयोरैक्यमङ्गीकुर्वन्ति। अन्यथा भेदो न गृहीत इति प्रतीतिः कदापि न स्यात्। वस्तुनोः स्वरूपज्ञाने जाते तदुत्तरमवश्यं भेदज्ञानं जायत इत्युक्तौ तु अनवस्था स्यात्। तथाहि— घटपटौ भिन्नौ जानामीति बुद्धिः घटपटयोर्भेदमवगाहमानाऽपि न तयोः स्वस्याः भेदमवगाहते प्रतियोगिज्ञानसापेक्षत्वाद् भेदज्ञानस्य। तयोर्भेदावगाहनार्थं प्रतीत्यन्तरकल्पने तस्या अपि स्वप्रतियोगिकभेदाविषयकत्वे तद्भेदावगाहनार्थं प्रतीत्यन्तरकल्पने अनवस्था स्यात्। अतस्तादृशभेदधीधारायाः क्वचिदवश्यं विश्रान्तिर्वाच्या। यत्र तु विश्रामः तत्रैव लब्धावकाशा अद्वैतश्रुतिः क्रमशः सर्वाद्वैते पर्यवस्यति। तदुक्तं खण्डनकृता

**सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा।**
**निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते।।** इति। (का.सं. ८)

ननु ज्ञानयोरभेदे तद्विषययोरपि अभेद इति नियमः। तथा च घटपटौ भिन्नौ इति प्रत्यक्षस्य अद्वैतज्ञानेनाभेदे उच्यमाने घटपटयोः द्वैताभावेन सह अभेदोऽङ्गीकर्तव्यः स्यात्। इष्टापत्तौ तुल्यवदेव घटपटयोरप्यभेदः स्वीकार्यो भवेदिति घटपटौ भिन्नौ इति प्रत्यक्षमद्वैतज्ञानस्य भेदं विनाऽनुपपन्नमिति

तयोर्भेदस्तेन आक्षिप्यते इति अद्वैतश्रुतेः न सावकाशत्वमिति चेत्? न, आक्षेपो हि 'विवादाध्यासिता बुद्धिः सर्वतो भिन्ना' इत्यनुमानरूपो न सम्भवति, पक्षे सर्वभेदसाधने पक्षभेदोऽपि साध्यः स्यादिति बाधात्। तथैव दृष्टान्ते दृष्टान्तभेदाभावेन सर्वभेदाभावे साध्यवैकल्यमपि। यत्किञ्चिद्भेदसाधने तु ययोर्भेदो न साध्यते तत्रैवाद्वैतश्रुतेरवकाशः। अतएव सर्वं सर्वस्माद् भिन्नमित्याद्यनुमानं न युक्तं, सर्वस्य पक्षत्वे हेतुदृष्टान्ताद्यभावः स्यात् पक्षातिरिक्तानामेव तेषामङ्गीकारात्। किञ्चानुमाने पक्षस्य ज्ञातत्वावश्यकत्वेन सर्वज्ञत्वापत्तिः स्यात्। यदि च किञ्चिद् विहाय सर्वस्य पक्षत्वं तदा तत्रैव अद्वैतश्रुतिः सावकाशा। तदुक्तं खण्डने—

**हेत्वाद्यभावसार्वज्ञे सर्वं पक्षयताऽऽस्थिते।**
**किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः।।** इति। (का.सं. ९)

एवमर्थापत्तिरपि नाक्षेपः, तस्या अपि स्वविषयकत्वाभावेन सर्वभेदाविषयकत्वादिति नाद्वैतश्रुतेरनवकाशत्वम्। तद्भेदग्रहेऽनुपपत्त्यन्तरस्वीकारे तु अनवस्था स्यादिति अनुपपत्तिधाराविश्रान्तिरवश्यं वाच्या, यत्र तु विश्रामस्तत्राद्वैतश्रुतिः सावकाशेति। तदुक्तम्—

**आद्यधीवेद्यभेदीयान्यथाऽनुपन्नता।**
**स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम्।।** इति। (का.सं. १०)

**एवं** प्रपञ्चमिथ्यात्वे ज्ञाननिवर्त्यत्वान्यथानुपपत्तिरपि प्रमाणम्। तथाहि, **'तरति शोकमात्मवित्'** (छा. ७-१-३) **'तथा विद्वान् नामरूपाद्विमुक्तः' 'भिद्यते हृदयग्रन्थिः'** (मु. २-२-८) इत्यादिश्रुतिस्मृतिबोधितं प्रपञ्चस्य ज्ञाननिवर्त्यत्वं तस्य मिथ्यात्वं विनाऽनुपपन्नमिति ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिः प्रपञ्चमिथ्यात्वे प्रमाणम्। प्रपञ्चो यदि सत्यः स्यात्तर्हि ब्रह्मवदनिवर्त्यः स्यात्, निवर्तते, तस्मान्न सत्य इति भावः। शुक्तिरूप्यं शुक्तिज्ञाननिवर्त्यं, तत्र निवर्त्यतावच्छेदकं मिथ्यात्वं नत्वननुगतं तत्तद्व्यक्तित्वादिकम्। तथैव निवर्तकतावच्छेदकं न तत्तज्ज्ञानत्वं किन्त्वधिष्ठानप्रमात्वम्। एतदनुरोधेन यत्र ज्ञानस्याधिष्ठानप्रमात्वेन निवर्तकता तत्र मिथ्यात्वेनैव निवर्त्यतेति नियमसिद्धिः। तदाधारेण प्रकृतेऽपि प्रपञ्चस्य अधिष्ठानसाक्षात्कारनिवर्त्यत्वे मिथ्यात्वमेव प्रयोजकम्। तथा च शुक्त्यादिज्ञानं येन रूपेण निवर्तकम् आत्मज्ञानमपि तेनैव रूपेण निवर्तकम्। रूप्यस्य येन रूपेण निवर्त्यता प्रपञ्चे तद्रूपं विनाऽनुपपद्यमाना निवर्त्यता स्वोपपादकतया प्रपञ्चे मिथ्यात्वं कल्पयतीति मिथ्यात्वं सिद्धम्।

ननु ज्ञाननिवर्त्यत्वमात्रेण मिथ्यात्वोक्तौ सेतुदर्शननिवर्त्यदुरितस्यापि मिथ्यात्वं सिध्येत्, तत्रापि ज्ञाननिवर्त्यत्वसत्त्वात्। यदि च तत्र सेतुदर्शनस्य ज्ञानत्वेन न निवर्तकता किन्तु विहितक्रियात्वेनेति न व्यभिचार इत्युच्यते तदा प्रकृतेऽपि निवर्तकतावच्छेदकं किञ्चिदन्यदेव रूपमस्तु न त्वधिष्ठानज्ञानत्वम्। श्रुतिरपि द्वैतप्रपञ्चस्य निवर्तकत्वमेव आत्मज्ञानस्य वदति न तु अधिष्ठानज्ञानत्वेन रूपेण तस्य निवर्तकत्वमिति। तस्माद् अधिष्ठान-ज्ञानत्वेनात्मज्ञानस्य निवर्तकत्वासिद्धौ न प्रपञ्चस्य मिथ्यात्वसिद्धिः। नहि सर्वत्र ज्ञानस्याधिष्ठानप्रमात्वेन ज्ञानत्वेनैव वा निवर्तकता, ज्ञानप्रागभावं प्रति ज्ञानस्य प्रतियोगित्वेन, पूर्वज्ञानं प्रति उत्तरवर्तिविशेषगुणत्वेनेत्येवं रीत्या तेन तेन रूपेण निवर्तकत्वदर्शनादिति चेत्? न, आत्मज्ञानस्य प्रपञ्चनिवर्तकत्वे निवर्तकतावच्छेदकस्याधिष्ठानज्ञानत्वातिरिक्तस्य कस्याप्यसम्भवात्। उदाहृतस्थलेषु प्रतियोगित्वादयो ये धर्माः प्रदर्शितास्तेऽत्रावच्छेदका न भवितुमर्हन्ति। तथाहि, प्रतियोगित्वमत्र नावच्छेदकम्, अभावं प्रत्येव ज्ञानस्य तेन रूपेण निवर्तकत्वसम्भवात् प्रपञ्चस्य च भावरूपत्वात्। नाप्युत्तरवर्तिविरोधिगुणत्वमवच्छेदकं, तेन रूपेण ज्ञानस्य पूर्ववर्त्यात्मविशेषगुणं प्रत्येव निवर्तकत्वात् घटादिप्रपञ्चस्य चात्मविशेषगुणत्वाभावात्। एवं रीत्या तेन तेन रूपेण निवर्तकत्वासिद्धौ अधिष्ठानप्रमात्वमेव निवर्तकतावच्छेदकं सिध्यतीति प्रपञ्चमिथ्यात्वसिद्धिः।

यत्तु ईश्वरज्ञानस्य कार्यमात्रं प्रति जनकत्वेन घटादिनिवृत्तिं प्रत्यपि जनकत्वम्। तथा च ईश्वरज्ञाननिवर्त्यत्वेऽपि न घटस्य मिथ्यात्वमिति, तन्न, ईश्वरज्ञानस्य कार्यमात्रं प्रति कारणत्ववादिनां तार्किकाणामपि मते ईश्वरज्ञानं स्वोपादानगोचरापरोक्षज्ञानत्वेनैव कारणमिति द्रव्यगुणकर्माणि प्रत्येव तस्य कारणत्वात्। घटनिवृत्तिस्तु ध्वंसरूपा, ध्वंसस्य च समवायिकारणासम्भवेन न तं प्रति ईश्वरज्ञानस्य कारणत्वम्। किञ्च कार्यमात्रं प्रति कारणीभूतस्य ईश्वरज्ञानस्यास्माभिरनभ्युपगमान्न दोषावकाशः। तस्मादधिष्ठानज्ञानत्वेन रूपेणात्मज्ञानस्य प्रपञ्चनिवर्तकत्वे सिद्धे तस्य च मिथ्यात्वं विनाऽनुपपद्यमानत्वेन प्रपञ्चे मिथ्यात्वं सिद्धमिति।

**एवं** दृष्टिसृष्ट्यन्यथानुपपत्त्याऽपि प्रपञ्चस्य मिथ्यात्वं सिध्यति। ननु दृष्टिसृष्टिरेव न सम्भवति, तथाहि—दृष्टिरेव सृष्टिः इति पक्षे दृष्टेः वृत्तिरूपत्वाङ्गीकारे चरमवृत्तिविषयत्वस्य ब्रह्मण्यपि सत्त्वेन तस्यापि दृष्टिसृष्ट्यापत्तिः। यदि च दृष्टिश्चैतन्यरूपा तदा तस्य सर्वदा विद्यमानत्वेन सर्वदा

सृष्ट्यापत्तिः। सृष्टिव्यतिरेकेण दृष्ट्यभावोऽपि न दृष्टिसृष्टिः, अनुभवविरोधात् चैत्रेण सृष्टो घटो मया दृष्ट इत्यादौ सृष्टिव्यतिरेकेणैव दृष्टेर्दर्शनात्। तद्वदेव दृष्टिव्यतिरेकेण सृष्ट्यभावोऽपि न दृष्टिसृष्टिः, ज्ञातो घटः घटज्ञानन्तु न ज्ञातमित्यादौ तयोर्व्यतिरेकेण दर्शनात्। एवमन्येऽप्यनेके पक्षाः तत्तद्दोषदुष्टास्त्याज्या एवेति चेत्?

अत्रोच्यते, दोषप्रयुक्तज्ञातैकसत्त्वं दृष्टिसृष्टिः। सुखादौ ज्ञातैकसत्त्वस्य सत्त्वेऽपि तस्य दोषप्रयुक्तत्वाभावेन सिद्धसाधनाभावात्।

ननु जीव ईश इत्यादिना षण्णामनादित्वस्वीकारात् तेन सह दृष्टिसृष्टिपक्षस्य विरोध इति चेत्? न, दृष्टिसृष्टेरनाद्यतिरिक्ते एव स्वीकारात्। ननु दृष्टिकाले एव सृष्टेः स्वीकारे वस्तुनो नियतकारणजन्यत्वास्वीकारे च स्वर्गाद्यर्थं जोतिष्टोमादिविधायकस्य ब्रह्मसाक्षात्कारार्थं श्रवणादिविधायकस्य च श्रुतिवाक्यस्य अप्रामाण्यं स्यात्। एवमेव तस्माद् वा एतस्मादात्मन आकाशः इत्यादि कार्यकारणभावप्रतिपादकानां वाक्यानामयुक्तता स्यादिति चेत्? न, इष्टापत्तेः, अस्मिन् मते तेषां वाक्यानां स्वाप्नकार्यकारणभावबोधकवाक्य-समानयोगक्षेमत्वात्।

ननु दृष्टिसृष्टिपक्षे रूप्यादिवद्बाधस्यापि दृष्टिसृष्टिकत्वेन तेन रूप्यादेः मिथ्यात्वं कथं सिध्येत्, समानसत्ताकयोर्बाध्यबाधकभावानभ्युपगमादिति चेत्? न, अन्धकारप्रकाशयोः व्यावहारिकसमानसत्ताकयोर्बाध्यबाधकभावदर्शनात् अधिकसत्ताकत्वं न बाधकत्वे प्रयोजकं, किन्तु बाध्यान्यूनसत्ताकत्वमेवेत्यदोषात्।

ननु दृष्टेर्वृत्तिरूपत्वे तस्याश्चानित्यत्वेन तत्सृष्टिरूपा काचिदन्या दृष्टिः कल्पनीया, तत्सृष्टिरूपाऽपि चान्या दृष्टिरित्यनवस्था स्यादिति चेत्? न, वृत्त्युपहितचैतन्यस्य दृष्टिरूपत्वात्। न च तस्याप्यनित्यत्वेनोक्तरीत्याऽनवस्था स्थिरैवेति वाच्यं, तत्र स्वस्या एवोपाधित्वेन दृष्ट्यन्तरानपेक्षणात्।

यत्तु दृष्टिसृष्टिपक्षे सोऽयमित्याद्यैक्यप्रत्यभिज्ञा कथं स्यात्, इदानीं दृष्टस्य पूर्वकालेऽभावात्। सेयं दीपकलिकेतिवत् अस्मिन् मते प्रत्यभिज्ञामात्रं भ्रान्तिः इति तु न साम्प्रतं, बाधकं विना भ्रान्तित्वासम्भवात्, दीपकलिकास्थले ऐक्ये परिणामभेदो बाधक इति तत्र भ्रान्तित्वं युक्तं, घटादिस्थले तु बाधकस्याभावेन प्रत्यभिज्ञायाः भ्रान्तित्वस्य वक्तुमशक्यत्वादिति, तन्न, अत्रापि बाधकस्य सत्त्वात्, प्रपञ्चस्य प्रतिभासमात्रशरीरत्वमेव तस्य प्रतिभासकालान्यकालवृत्तित्वे बाधकमिति। तस्मादस्मिन् पक्षे प्रत्यभिज्ञामात्रं भ्रान्तिरेव। तदपि भिन्नकालीना-

नामनित्यानामेवैक्यप्रत्यभिज्ञा ऐक्यप्रतीतिर्वा भ्रान्तिः, एककालावच्छेदेन घटादौ एक्यप्रत्यभिज्ञा, आत्मन्यैकप्रतीतिश्च न भ्रान्तिरिति विवेकः। प्रतिभासभेदे त्वेककालावच्छेदेनापि घटादावैक्यप्रत्यभिज्ञा भ्रान्तिरेव। अतएव एकेन पुरुषेण प्रतीतेन घटेन सह पुरुषान्तरप्रतीतस्य घटस्यैक्यप्रत्यभिज्ञा सर्वथा भ्रमः। ननु अस्मिन् पक्षे चरमसाक्षात्कारोऽपि दृष्टिकाले एव सृष्टो नतु प्रमाणजन्य इति तस्य तत्त्वज्ञानरूपत्वाभावेन कथं तस्मात् मोक्ष इचि चेत्? न, आत्मसाक्षात्कारस्याबाधितविषयकत्वेन तत्त्वज्ञानत्वोपपत्तेस्तस्मात् मोक्षे बाधकाभावात्।

ननु दृष्टिसृष्टौ किं मानमिति चेत्? **'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि सर्व एतदात्मनो व्युच्चरन्ति'** इत्यादिश्रुतेरेव तत्र मानत्वात्, अत्र हि सुप्तोत्थितात् जीवात् प्राणादिसृष्टेः प्रतिपादनात्। ननु सप्तोत्थिताज्जीवात् प्राणादिसृष्टिः कथमुपपद्यते, सुषप्तिकालेऽपि प्राणादिप्रपञ्चस्य सत्त्वादिति चेत्? न, **'न तु तद्द्वितीयमस्ती'**त्यादिना सुषुप्तिकाले कार्यमात्रलयस्योक्तत्वात्।

अविद्यायाः विचित्रशक्तिकत्वेन एककर्तृकत्वेऽपि जगतो न वैचित्र्यानुपपत्तिः। तदुक्तम्—

**अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव।**
**क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम्।।** इति।

तस्माद् ब्रह्मभिन्नस्य ज्ञानज्ञेयात्मकस्य सर्वस्यापि प्रपञ्चस्य आविद्यिकत्वेन प्रतीतिकालमात्रसत्यत्वं सिद्धम्।

**ननु** तथापि मिथ्यात्वसाधकानुमानं 'सन् घटः' इति प्रत्यक्षेण बाधितमिति उक्तहेतोः बाधितविषयत्वान्न साधकत्वमिति चेत्? न, 'सन् घटः' इत्यत्र मिथ्यात्वविरोधितया प्रतिपाद्यमानस्य सत्त्वस्य चक्षुराद्ययोग्यत्वेन निरूपयितुमशक्यत्वात्। तथाहि—प्रमाविषयत्वं न सत्त्वं, प्रमायाश्चक्षुराद्य-योग्यत्वेन तद्घटितसत्त्वस्यापि चक्षुराद्ययोग्यत्वात्। एवं प्रमाणप्रवृत्तिस्तावदसति न भवतीति प्रमाविषयत्वात् प्रागेव वस्तुनः सत्त्वं वक्तव्यमिति सत्त्वप्रमाविषयत्वयोरेक्यं न सम्भवति। एवं सदर्थविषयत्वं प्रमात्वं तादृशप्रमाविषयत्वञ्च सत्त्वमित्यन्योन्याश्रयोऽपि। एवं प्रमाविषयत्वं शुक्तिरजत-संसर्गेऽप्यस्तीति तस्यापि सत्त्वापत्तिः। शुक्तिरजतसंसर्गस्यासत्त्वेऽपि व्यवसायद्वाराऽनुव्यवसायविषयत्वेन प्रमाविषयत्वाङ्गीकारात्। अनुव्यवसाये हि

सर्वोऽपि व्यवसायविषयः विषयतया भासते। भ्रमानुव्यवसायस्यापि प्रमात्वस्वीकारेण तद्विषयस्य शुक्तिरजतसंसर्गस्य सत्त्वापत्तिः। साक्षात्प्रमाविषयत्वं सत्त्वमित्युक्तावुक्तदोषपरिहारेऽपि शुक्तिरजतसंसर्गो नास्तीति प्रमायां निषेध्यत्वेन विषयत्वस्य शुक्तिरजतसंसर्गे सत्त्वात्तद्दोषस्तदवस्थ एव स्यात्।

अनिषेध्यत्वेन साक्षात्प्रमाविषयत्वस्वीकारे तु उक्तापत्तिवारणेऽपि नेह नानेति वाक्यजन्यप्रतीतावनिषेध्यत्वेन विषयत्वस्य प्रपञ्चेऽप्यभावादसिद्धिरेव स्यादतः प्रमाविषयत्वं सत्त्वमित्युक्तं न युक्तम्।

नापि प्रमाविषयत्वयोग्यत्वं सत्त्वमित्यपि साधु, योग्यतायाः निरूपयितुमशक्यत्वात्।

भ्रमाविषयत्वमपि न सत्त्वं, बौद्धाङ्गीकृतक्षणिकत्वादिना भ्रमविषयत्वस्यैव सर्वत्र सत्त्वेन भ्रमाविषयत्वस्यासिद्धेः।

एवम् असत्त्वाप्रकारकप्रमाविषयत्वं सत्त्वप्रकारकप्रमाविषयत्वम्, असत्त्व-प्रकारकभ्रमाविषयत्वं, प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधविरहः इत्यादिकमपि सत्त्वं न भवितुमर्हति, एतेषां स्वरूपाणां सत्त्वघटितत्वेनान्योन्याश्रयात्।

सत्ताजातिः, अर्थक्रियाकारित्वम्, असद्वैलक्षण्यम् इत्यादिकमपि सत्त्वं न वक्तुं शक्यम्, तेषां मिथ्यात्वाविरोधित्वात्।

एवमेव तुच्छेऽतिव्याप्तिभिया वेदान्त्यभिमतमिथ्यात्वाभावो न सत्त्वम्। क्षणिकत्वादिना सर्वस्याप्यारोपविषयत्वेनासिद्धिभिया असद्विलक्षणत्वे सत्यनारोपितत्वमपि न सत्त्वम्। एवमन्येऽपि सत्त्वप्रकाराः यथायथं निरसनीयाः।

वस्तुतः स्वसमानाधिकरणयावदत्यन्ताभावाप्रतियोगित्वं सत्त्वम्। तत्र यावदभावानां चक्षुराद्ययोग्यत्वेन तद्घटितसत्त्वस्यापि चक्षुराद्ययोग्यत्वात्, सामान्यलक्षणादेश्चास्वीकारेण तदाधारेणापि यावदत्यन्ताभावप्रत्यक्षं न सम्भवतीति न 'सन् घटः' इत्यादि प्रत्यक्षेण मिथ्यात्वानुमानस्य बाध इति।

अथ सन् घट इत्यादौ घटगतैव सत्ता भासते, तथा च तादृशसत्ताविषयकत्वेन सन् घट इति प्रत्यक्षेण मिथ्यात्वानुमानविरोध इति चेत्? उच्यते, यथा इदं रजतमित्यत्र इदमधिष्ठानतया भासते तथैव सन् घटः सन् पटः इत्यादौ सर्वत्र सदित्यधिष्ठानभूतं ब्रह्मैव भासते।

न च सन् घटः इत्यादि ज्ञानं चाक्षुषं, तत्प्रति च रूपादेर्हेतुतया तत्र नीरूपस्य ब्रह्मणः कथं स्फुरणमिति वाच्यं, यत्र हि नियतेन्द्रियग्राह्यत्वं तत्रैव

रूपादिमत्त्वस्य प्रयोजकत्वात्। कथमन्यथा रूपादिहीनायाः सत्ताजातेः सर्वेन्द्रियग्राह्यत्वम्। ब्रह्म हि न नियतेन्द्रियग्राह्यं येन तत्प्रत्यक्षे रूपाद्यपेक्षा स्यात्।

अथ यदि सन् घटः इत्यादौ सद्रूपस्य ब्रह्मणः अधिष्ठानत्वेनानुवेधः स्वीक्रियते तदा नीलो घटः, मिथ्या रूप्यम्, असन्नृशृङ्गमित्यादौ नील-मिथ्या-असताम् अधिष्ठानत्वेनानुवेधः कथं न स्यात्। घटे नैल्यमस्ति सत्त्वं नास्तीत्येव हेतुस्तत्रेति तु वक्तुं न शक्यते, यतो हि सन् घटः इत्यत्र प्रतीयमानस्य सत्त्वस्याभावो घटेऽस्तीति तदैव वक्तुं शक्यते यदा ब्रह्मणि घटादेरारोपितत्वं सिद्ध्येत्। घटे सत्त्वाभावसिद्ध्युत्तरमेव च घटादेरारोपितत्वं सिद्धं स्यादित्यन्योन्याश्रय इति चेत्?

उच्यते—सन् घटः इत्यत्र सता घटेन सह प्रतीयमानं तादात्म्यरूपं सामानाधिकरण्यं प्रमाणबाधितमतोऽधिष्ठानसद्रूपस्यानुवेधः घटादौ स्वीक्रियते न तु अरोपितत्वसिद्ध्याऽधिष्ठानानुवेध इति नान्योन्श्रयः। सता घटेन सह सामानाधिकरण्यं कुतो बाधितमिति चेदित्थं—तादृशसामानाधिकरण्यं किं निबन्धनं स्वीक्रियते? न तावत्सत्ताजातिस्फुरणनिबन्धनं सामानाधिकरण्यं, तस्य घटादौ सम्भवेऽप्यभावादावसम्भवात्, तत्र सत्ताजातेरस्वीकारात्। स्वरूपसत्त्वनिबन्धनमपि सामानाधिकरण्यं नैव वक्तुं शक्यते, स्वरूपसत्त्वस्य प्रतिव्यक्तिविश्रान्तत्वेनाननुगततयाऽनुगतव्यवहारो न स्यात्। अननुगतेनापि चेदनुगतव्यवहारस्तदा सर्वत्र तथैवोपपत्तौ जातिमात्रोच्छेदप्रसङ्गः स्यात्, अनुवृत्तिप्रत्ययहेतुत्वस्यैव जातिस्वरूपत्वाभ्युपगमात्।

कालत्रयाबाध्यत्वनिबन्धनमपि सामानाधिकरण्यं नैव वक्तुं शक्यं, तस्य कालत्रयघटितत्वेन चक्षुराद्यगम्यत्वात्। किञ्च 'सदिदं रजतम्' इति भ्रमे तदभावेन सामानाधिकरण्यं न प्रतीयेत।

अतः सन् घटः, सन् पटः इत्यादि निखिलप्रतीतिषु एकं ब्रह्मैवाधिष्ठानतयाऽनुभूयत इत्येव सिद्धान्तः।

नीलो घट इत्यादौ तु घटादिना नीलादेः सामानाधिकरण्ये न किमपि बाधकम्। अधिष्ठानत्वमपि प्राग्वर्तमानस्यैव। नीलादेस्तु न प्राक्सत्त्वमतो न तेषामधिष्ठानत्वशङ्काऽपि।

किञ्चाधिष्ठेयविषमसत्ताकत्वमधिष्ठानस्यावश्यकम्। यथा व्यावहारिकस्य घटादेरधिष्ठानं पारमार्थिकं ब्रह्म। नीलघटयोस्तु समसत्ताकत्वान्नाधिष्ठेयाधिष्ठानभावः।

'मिथ्या रूप्यम्' 'असन्नृशृङ्गम्' इत्यादावपि मिथ्याऽसतोरधिष्ठानत्वं वक्तुं न युक्तं, द्वयोरधिष्ठानाधिष्ठेययोर्बाध्यत्वे शून्यवादप्रसक्तिः स्यात्।

**अथैवमपि** प्रत्यक्षस्य जात्यैवानुमानं प्रति बाधकत्वम्। वह्निः अनुष्णः कृतकत्वादित्यनुमानस्य वह्न्यौष्ण्यप्रत्यक्षेण बाधाद्यथाऽनुष्णत्वानुमानस्याभासत्वं तथैव प्रकृतेऽपि प्रपञ्चसत्यत्वप्रत्यक्षेण बाधात् प्रपञ्चमिथ्यात्वानुमानस्याभासत्वमेव। तदुक्तं न्यायभाष्ये—'यदनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः सः' इति।

न च दृष्टान्ते वह्निरूपधर्मिग्राहकतयोपजीव्यत्वेन प्रत्यक्षस्यानुमानापेक्षया प्रबलत्वं न तु जात्या, प्रकृते च न तथेति वाच्यं, दृष्टान्तेऽपि वह्निरूपधर्मिणो ग्रहणस्य चक्षुरादिनैव सम्भवे त्वगिन्द्रियस्यानुमानोपजीव्यत्वाभावात्। औष्ण्प्रत्यक्षं हि त्वाचम्। तथा च तस्यात्र जात्यैव प्राबल्यं वक्तव्यं न तूपजीव्यत्वेन।

किञ्चानुमानाद्यगृहीतग्राहित्वादपि प्रत्यक्षस्य जात्या प्राबल्यं वक्तव्यम्। यथाऽनुमानादिना घटादौ गृह्यमाणेऽपि तद्गतरेखोपरेखादिरूपचिह्नविशेषस्य ग्रहणं तावच्चक्षुरादिनैव सम्भवतीति प्रत्यक्षं प्रबलम्।

अपि चानुमानेन वस्तुनि गृहीतेऽपि तत् कस्मिन् देशविशेषे वर्तत इति दिङ्मोहस्यानुमानेन व्यावर्तयितुमशक्यत्वात्तदर्थं प्रत्यक्षापेक्षाऽस्त्येवेत्यतोऽपि हेतोः प्रत्यक्षस्य जात्या प्राबल्यं स्वीकार्यमिति चेत्?

अत्रोच्यते—अनुमानस्य धर्मिग्रहणे त्वाचप्रत्यक्षस्यानुपजीव्यत्वेऽपि त्वाचप्रत्येक्षेणैवानुमानापेक्षितसाध्यसिद्धिः सम्भवति, साध्यस्य त्वाचप्रत्यक्षं विना सिद्ध्यसम्भवात्। न केवलं धर्मिग्राहकमेवानुमानोपजीव्यमपितु अनुमानापेक्षितसाध्यग्राहकमपि। त्वाचप्रत्यक्षं विना साध्यस्यानुष्णत्वस्य सिद्धिर्न भवितुमर्हतीति त्वाचप्रत्यक्षस्याप्युपजीव्यत्वेनैव प्राबल्यं न तु जात्या।

किञ्च अनुमानागृहीतग्राहित्वमपि प्रत्यक्षस्य प्राबल्ये न प्रयोजकम्। तदगृहीतग्राहित्वस्य तदपेक्षया प्राबल्ये प्रयोजकत्वे तुल्यरीत्या प्रत्यक्षागृहीतानां धर्माधर्माद्यतीन्द्रियपदार्थानां ग्राहकतया आगमानुमानयोरपि प्रत्यक्षापेक्षया प्राबल्यं स्यात्।

यच्च अनुमानाद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वेन प्रत्यक्षस्य प्राबल्यमुक्तं, तदपि न युक्तं, नहि तदनिवर्तितनिवर्तकत्वं प्राबल्ये प्रयोजकमपि तु प्रमाणयोर्वैधर्म्यमात्रं तत्। अन्यथा त्वाचप्रत्यक्षाद्यनिवर्तितवंशोरगभ्रम-

निवर्तकत्वाच्चक्षुरिन्द्रियस्य त्वगिन्द्रियापेक्षया प्राबल्यं स्यात्। न चेष्टापत्तिः, तथासति चक्षुरिन्द्रियजन्यस्य चित्रगतनिम्नोन्नतादिज्ञानस्य त्वाचप्रत्यक्षेण बाधो न स्यात्। अतः प्रत्यक्षस्य जात्या प्राबल्यं नैव वक्तुं शक्यं, प्रत्युत आगमस्यैव जात्या प्राबल्यं स्वीकर्तव्यम्।

**ननूपक्रमन्यायेनैवास्तु** प्रत्यक्षस्य प्राबल्यम्, तथाहि, उपक्रमोपसंहारयोर्विरोधे प्राप्तेऽसञ्जातविरोधित्वात् उपक्रमस्यैव प्राबल्यमुक्तम्। यथा—**'अग्नेः ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः'** इत्युपक्रम्य श्रूयते **'उच्चैः ऋचा क्रियते'** इत्यादि। तथाचात्र अर्थवादवाक्यघटितम् ऋग्वेदपदम् ऋक्परमुत विधिवाक्यघटितम् ऋक्पदम् ऋग्वेदपरमिति सन्देहे जाते यद्यपि विधेरर्थवादापेक्षया बलीयस्त्वेनार्थवादवाक्यघटितपद एव लक्षणा कर्तव्या तथाप्यत्रोपक्रमोपसंहारन्यायेनार्थवादस्य प्राबल्यमङ्गीकृत्य विधिवाक्यघटित-ऋगादिपदस्यैव ऋग्वेदादौ लक्षणा शास्त्राभिमता। तद्वदत्रापि प्रत्यक्षस्य पूर्वभावित्वेनासञ्जातविरोधित्वादुपक्रमन्यायेनागमाद्यपेक्षयाऽपि प्राबल्यमङ्गीकार्यमिति चेत्? न, उपक्रमोपसंहारयोः साम्ये एतन्यायप्रवृत्तेः। दृष्टान्ते हि एकवाक्यस्थितत्वेनोभयोः समप्रामाण्यं भवति। प्रकृते तु न तथा, प्रत्यक्षागमयोः न समप्रामाण्यं, गृहीतप्रमाणभावा हि श्रुतिः, प्रत्यक्षञ्च न भ्रमविलक्षणत्वेन निश्चितमिति न तयोः समबलत्वमिति नात्रोपक्रमाधिकरणन्यायस्य प्रसरः। पूर्वभावित्वमात्रेण प्राबल्येऽङ्गीकृते तु इदं रजतमिति पूर्ववर्तिनो भ्रमस्येयं शुक्तिरिति ज्ञानापेक्षया प्राबल्यं स्यात्।

यत्तु **'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्'** इति न्यायानुसारेण शीघ्रगामित्याः श्रुतेः लिङ्गाद्यपेक्षया प्राबल्यमुक्तं तथैव प्रकृतेऽपि शीघ्रगामिनः प्रत्यक्षस्य आगमाद्यपेक्षया प्राबल्यं स्यात्, प्राबल्ये शीघ्रगामित्वस्य प्रयोजकत्वात्। आकांक्षाव्याप्त्यादिनिश्चायकमानान्तरसापेक्षत्वेन विलम्बितफलकत्वादा-गमानुमानादीनां मन्थरगामित्वं तदभावाच्च प्रत्यक्षादेः शीघ्रगामित्वमिति, तदपि न युक्तं, प्राबल्ये नहि शीघ्रगामित्वं प्रयोजकं, परीक्षितस्य मन्थरगामिनः आगमादेः प्राबल्यदर्शनात्, शीघ्रगामिनः चन्द्रप्रादेशिकत्वप्रत्यक्षात् तदीयमहत्परिमाणबोधकागमस्य प्राबल्यदर्शनाच्च।

**अथ** यथा **'यदाहवनीये जुहोति'** इत्यस्माद् गौर्येन वर्त्मना सोमक्रयणार्थं नीयते तद्वर्त्मनि विद्यमाने सप्तमे पदे होमः कर्तव्यः इत्यर्थकस्य **'पदे जुहोति'** इत्यस्य विशेषवाचित्वात्प्राबल्यमुक्तं तथैव सामान्यतो द्वैतनिषेधकश्रुत्यपेक्षया

सन् घट इत्यादिप्रत्यक्षस्य विशेषवाचित्वेन सामान्यविशेषन्यायानुसारेण प्राबल्यं स्यादिति चेत्?

तत्रोच्यते—सामान्यविशेषन्यायोऽपि तत्रैव प्रवर्तते यत्र द्वयोः प्रामाण्यं निश्चितं स्यात्। अन्यथा सामान्यवाचकात् 'गोरश्वो न भवति' इत्यस्मात् विशेषवाचकस्य 'अयं गौरश्वः' इत्यस्य प्रामाण्यं स्यात्।

**ननु** लक्षणादिवृत्त्यन्तरमाश्रित्य अनेकार्थकत्वेन विषयान्तरपरत्वेन वा श्रुतेः सावकाशत्वं, प्रत्यक्षस्य तु तदभावान्निरवकाशत्वमिति निरवकाशत्वा-त्प्रत्यक्षस्य प्राबल्यमस्तु। यथाहि—पञ्चदिनसाध्ये ज्योतिष्टोमे चतुर्थे दिने अग्नीषोमीयः क्रियते। तत्र तावत् **'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेन उपांशु चरति'** इति श्रुत्यनुरोधेन अग्नीषोमीयात् पूर्वं दीक्षणीया-उपसदादिषु उपांशुस्वरः प्राप्यते। किञ्च **'यावत्या वाचा कामयेत् तावत्या दीक्षणीयायामनुब्रूयात्'** इत्यनेन दीक्षणीयायां कामस्वरः प्राप्यते। तत्र यदि पूर्वविधिना दीक्षणीयायामपि उपांशुस्वर एव प्रयुज्यते तदा द्वितीयो विधिः निरवकाशः स्यात्। निरवकाशत्वाद् बाधको भवति। तथा च दीक्षणीयातिरिक्ते उपाशुस्वरः प्रयोक्तव्य इति यत्किञ्चित्प्राचीनमित्यादि श्रुतेस्तात्पर्यं पर्यवस्यति। तथाच निरवकाशस्य सबलत्वं सिध्यति। प्रकृते च मिथ्यात्वबोधिन्याः श्रुतेः अन्यार्थकत्वेन सङ्कोचे सम्भवति सावकाशत्वाद्दुर्बलत्वमेवेति चेत्? न, उपक्रमादिषड्विधतात्पर्यलिङ्गैः अद्वैतश्रुतेः द्वैतनिषेधपरत्वे निर्णीते तस्या अपि तदन्यार्थपरत्वाभावेन सावकाशत्वाभावात्।

किञ्च व्यावहारिकसत्यत्वविषयकत्वेन प्रत्यक्षस्यापि सावकाशत्वमस्त्येव।

ननु **'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्स्वधर्मत्वम्'** भूयोऽनुग्रहन्यायेनास्तु प्रत्यक्षस्य प्राबल्यम्। तथा हि—यथा पञ्चदशरात्रे प्रथमे दिने क्रियमाणे अग्निष्टुद्यागे प्रकृतितः आग्नेयी सुब्रह्मण्या प्राप्ता, शेषेषु चतुर्दशसु तत्प्रकृतितः ऐन्द्री सुब्रह्मण्या प्राप्ता। तथाच सर्वेषामपि यागानां सुब्रह्मण्यावाहनं तन्त्रेण कर्तव्यमिति शास्त्रानुरोधेन सर्वेषां कृते आग्नेय्याः सुब्रह्मण्यायाः आवाहनं कार्यमुत ऐन्द्र्याः इति संशये उपक्रमन्यायेन आग्न्येयीसुब्रह्मण्यावाहनं प्राप्यते इति पूर्वः पक्षः। तत्र सिद्धान्तस्तु आग्नेयीसुब्रह्मण्याह्वाने बहूनां यागानामङ्गबाधा, ऐन्द्र्या आह्वाने तु एकस्यैवेति भूयोनुग्रहन्यायेन सर्वेषां कृते ऐन्द्रीसुब्रह्मण्याह्वानमेव कर्तव्यम्। तथा प्रकृतेऽपि द्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकाण्डादिबहुविधप्रमाणबाधः, उत अद्वैतश्रुतेः

प्रतीतार्थबाध इत्युपस्थिते भूयोऽनुग्रहन्यायेनाद्वैतश्रुतेः प्रतीतार्थबाध एव स्वीकार्य इति चेत्? न, तात्पर्यवत्त्वेनाद्वैतश्रुतेरनन्यपरत्वे निर्णीते बहुभिरपि प्रमाणैः तस्या बाधस्य कर्तुमशक्यत्वात्। वस्तुतस्तु तानि प्रमाणानि प्रमाणाभासरूपाण्येव। तथा च यथा देहात्मैक्ये नैकविधप्रमाणाभाससत्त्वेऽपि तैः तात्पर्यवत्तयाऽनन्यपरत्वेन देहात्मभेदप्रतिपादकश्रुतेर्न बाधः तथा प्रकृतेऽपि बोध्यम्।

किञ्च दृष्टान्तद्राष्टान्तिकयोः स्याम्यमपि नास्ति, दृष्टान्ते बहुविषयया ऐन्द्र्या सुब्रह्मण्यया एकविषयाया आग्नेय्याः बाधः अत्र तु बहुभिः एकस्य बाध इति।

किञ्चापच्छेदन्यायेनाप्यागमस्य प्रत्यक्षापेक्षया प्रबलत्वं सिध्यति। तथाहि ज्योतिष्टोमे बहिष्पवमानस्तोत्रार्थं हविर्धानमण्डपात् बहिर्गच्छतामृत्विग्य-जमानानां परस्परमन्वारम्भः श्रुतः—**'अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता'** इति। इत्थं परस्परमन्वारभ्य गच्छतां कथञ्चित् विच्छेदे प्रायश्चितं श्रूयते—**'यद्युद्गाताऽपच्छिन्द्याद् अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत्। तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्। यदि प्रतिहर्ता (अपच्छिन्द्यात्) सर्ववेदसं दद्यात्'** इति। एवं स्थिते यस्मिन् ज्योतिष्टोमप्रयोगे उद्गातुः प्रतिहर्तुश्च क्रमेणापच्छेदो जातः तत्र किम् उद्गात्रपच्छेदनिमित्तिकं प्रायश्चित्तमनुष्ठेयमुत प्रतिहर्त्रपच्छेदनिमित्तकम् इति संशयो भवति। द्वयोः प्रायश्चित्तयोस्तु एकस्मिन् प्रयोगेऽनुष्ठानं न सम्भवति, कथमेक एव प्रयोगः अदक्षिणाकः सर्वस्वदक्षिणाकश्च भवेत्। अतोऽन्यतरस्यैवानुष्ठानं सम्भवति। तत्कतरस्येति संशयः। तत्रोपक्रमन्यायेन उद्गात्रपच्छेदस्य पूर्वभावित्वे असञ्जातविरोधितया तन्निमित्तकं प्रायश्चित्तं विधेयम् इति एकः पक्षः प्राप्यते। पूर्वोत्तरयोः परस्परसापेक्षत्वाभावेनोपक्रमन्यायस्याप्रवृत्तौ प्रायश्चित्तबोधकयोः शास्त्रयोः प्रामाण्ये समकक्ष्यतया विकल्पेनान्यतरदनुष्ठेयमिति द्वितीयः पक्षः प्राप्यते।

एवं पूर्वपक्षे सिद्धान्तस्तु—**'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्'** इति परस्यैव सबलत्वं स्वीकार्यमिति। यथा हि ज्योतिष्टोमे द्वादशशतदक्षिणा नित्या विहिता। तत्र यत्किञ्चिदपच्छेदे सर्वस्वेनादक्षिणेन वा तस्याः बाधः क्रियते। तथैव प्रतिहर्त्रपच्छेदस्य परभावित्वे तन्निमित्तकसर्वस्वदक्षिणाकप्रायश्चितमेव करणीयम्। एवं वैपरीत्ये उद्गात्रपच्छेदस्य परभावित्वे तं यज्ञमदक्षिणमिष्ट्वा पुनः सदक्षिणप्रयोगः करणीयः। तत्रापि 'तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्'

इत्यनुरोधेन किं दातव्यं? सर्वस्वं नित्या द्वादशशतदक्षिणा वेति संशयेऽनेनैव न्यायेन द्वादशशतदक्षिणायाः परेण प्रतिहर्त्रपच्छेदे विहितेन सर्वस्वेन बाधात् सर्वस्वमेव दातव्यमिति सिद्धान्तः। एतेन पूर्वापेक्षया परस्य प्राबल्यं सिध्यति। तथा च प्रकृते परेणागमेन पूर्वस्य प्रत्यक्षस्य बाध इति।

**नन्वस्तु** मिथ्यात्वबोधकानुमानागमाद्यपेक्षया सत्त्वबोधकप्रत्यक्षस्योपजीव्यत्वेनैव प्राबल्यम्। प्रत्यक्षस्योपजीव्यत्वमनुमानागमापेक्षिताशेषग्राहकतया। अर्थात् अनुमानादिभिरपेक्षितं यत् लिङ्गदर्शनादिकं तत्सर्वं प्रत्यक्षादेव।

यत्किञ्चिदपेक्षितग्रहणेऽप्युपजीवव्यत्वं दृश्यते तेन च तद्विरुद्धग्राहकस्य बाधोऽपि दृश्यते। यथा—घटः विभुः सत्त्वादित्यनुमानेऽपेक्षितं यत्किञ्चित्-पक्षग्रहणं तत्प्रत्यक्षेण सम्पाद्यते। तथाच प्रत्यक्षेण गृह्यमाणो घटः परिच्छिन्नत्वेनैव गृह्यत इति तेन प्रत्यक्षेण अनुमानस्य बाधः।

एवं नरशिरः कपालं शुचि प्राण्यङ्गत्वादित्यनुमानस्य साध्यबोधकागमेन बाधः। साध्यं शुचित्वं तदागमेनैव बोद्धुं शक्यम्। आगमस्तु मनुष्यास्थिमात्रस्याशुचित्वं प्रतिपादयति इति तेनोक्तानुमानस्य बाधः।

एवं मनो विभु ज्ञानासमवाय्याश्रयत्वादात्मवत् इत्यनुमानस्य हेतुग्राहिणाऽनुमानेनैव बाधः। ज्ञानस्यासमवायिकारणमात्ममनःसंयोगः, तदाश्रयत्वं यथात्मनि तथैव मनस्यपीति आत्मन इव मनसोऽपि विभुत्वमस्तु। किन्तु मनसः आत्ममनःसंयोगाश्रयत्वं गृह्णत् अनुमानं मनसोऽणुत्वमपि गृह्णाति—**'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्'** इत्यक्षपादसूत्रं मनोऽणुत्व-बोधकमनुमानं सूचयति। तथाचोक्तस्थलेष्वपेक्षितैकैकग्राहिणः उपजीव्येन विरोधादप्युपजीवकस्य बाधो दृश्यते चेदपेक्षिताशेषग्राहिणा उपजीव्येन प्रत्यक्षेण विरोधे उपजीवकस्य बाधः कथं न स्यादिति।

न चेन्द्रियं प्रत्यक्षप्रमाणम्। तदप्यतीन्द्रियमनुमानगम्यमित्यनुमानस्यापि प्रत्यक्षोपजीव्यत्वेन तुल्या उपजीव्यतेति वाच्यं, वैषम्यात्, तथाहि नहीन्द्रियं विषयज्ञानजननाय स्वज्ञानमपेक्षते येनानुमानस्योपजीवकं स्यात्। अनुमानं तु पुनः ज्ञानजननार्थमेव पक्षादिज्ञानपेक्षते तदर्थञ्च प्रत्यक्षस्यापेक्षित्वेन प्रत्यक्षस्योपजीव्यत्वं सिध्यतीति चेत्? न, उपजीव्योपजीवकयोर्विरोधे सत्येवोपजीव्यस्य प्राबल्यात्, विरोधे एव बलाबलविचारप्रसक्तेः। तथा च प्रकृते मिथ्यात्वानुमानेन यत्स्वरूपं बाध्यते तदेव चेत् प्रत्यक्षेण उपजीव्येत अथवा प्रत्यक्षेण यत्स्वरूपमुपजीव्यते तदेव चेदनुमानेन बाध्येत तदैव तयोर्विरोधः स्यात्। प्रकृते

तु न तथा। प्रत्यक्षेण हि प्रपञ्चस्य व्यावहारिकसत्त्वमुपजीव्यते। तत्त्वनुमानेन न बाध्यते। अनुमानेन तु तस्य तात्त्विकत्वाकारः बाध्यते, स च न प्रत्यक्षेणोपजीव्यत इति विरोधाभावे बलाबलविचारप्रसङ्ग एव नास्ति। प्रत्युत मिथ्यात्वानुमानस्य श्रुत्यनुगृहीततया तस्यैव प्रबलत्वं वक्तव्यम्।

अपि चापेक्षितग्राहित्वमात्रेणोपजीव्यता तया च बाधकत्वं यद्युच्यते तदा नेदं रजतमिति बाधस्य प्रतियोगिग्राहकतया इदं रजतमिति भ्रमोऽप्युपजीव्यः स्यात् तथात्वे च तादृशभ्रमस्य बाधबाधकत्वमपि स्यात्।

यदि चाभावबुद्धिं प्रति प्रतियोगिज्ञानस्य प्रतियोगिज्ञानत्वेनोपजीव्यत्वं न तु तत्प्रमात्वेन, प्रतियोगिभ्रमादप्यभावबुद्ध्युदयदर्शनात्। तथा च प्रतियोगि-प्रामाण्यं नोपजीव्यं तदेव च बाधज्ञानेन बाध्यत इत्यत्रोपजीव्यविरोधाभावात् बाधबुद्ध्युदये बाधकाभाव इत्युच्यते, तर्हि प्रकृतेऽप्यनुमानं प्रति पक्षादिज्ञानमेवोपजीव्यं न तु तत्प्रामाण्यमिति नोपजीव्यविरोधः।

ननु यस्य प्रामाण्यं स्वनिश्चयार्थं, स्वाभाववत्तानिश्चयार्थं स्वगताप्रामाण्य-निरासार्थञ्च यस्य प्रामाण्यमुपजीवति=अपेक्षते तत्तस्योपजीव्यम्। यथा स्मृतिः स्वप्रामाण्यनिश्चयार्थं स्वगताप्रामाण्यनिरासार्थञ्चानुभवस्य प्रामाण्यमपेक्षते, अतः अनुभवः स्मृतेरुपजीव्यः। नेदं रजतमिति ज्ञानस्य प्रामाण्यं तु स्वज्ञानाय स्वाभाववत्ताबुद्धिनिरासाय च नहि भ्रमस्य प्रामाण्यमपेक्षत इति नहि भ्रमस्य बाधबुद्ध्युपजीव्यत्वमिति चेत्? न, तथासति व्याप्तिज्ञानमप्यनुमित्युपजीव्यं न स्यात् अनुमितिप्रामाण्ये व्याप्तिज्ञानप्रामाण्यस्य सर्वत्रानपेक्षणात्। वस्तुतो वह्निमति पर्वते जलादिना वह्निसाधने भ्रमात्मकव्याप्तिज्ञानादपि प्रमात्मकानुमितिदर्शनादिति।

अथैवमपि सन् घट इति प्रत्यक्षबाधितमपि मिथ्यात्वानुमानं यदि प्रपञ्चमिथ्यात्वं साधयेत्तर्हि वह्न्यौष्ण्यप्रत्यक्षबाधितमपि वह्निरनुष्णः कार्यत्वादित्याद्यनुमानं वह्न्यनौष्ण्यसाधकं स्यात्। एवं स्थिते बाधमात्रोच्छेदः स्यात्।

ननु वह्न्यनौष्ण्यानुमाने अनौष्ण्यं साध्यं तच्चौष्ण्याभावरूपम्। तत्प्रतियोगि औष्ण्यं पक्षे एव प्रसिद्धम्। तथा च यस्मिन् पक्षे औष्ण्यं प्रत्यक्षेण गृहीतं तस्मिन्नेव औष्ण्याभावसाधने प्रतियोगिग्राहिणा उपजीव्येन सह विरोधादुपजीव्यनुमानं बाधितं भवेत्। अतोऽत्रैवानुमाने बाधः सावकाशः। मिथ्यात्वानुमानस्य तु नैतदनुमानतुल्यता। अनुमानेन तावत्प्रपञ्चे

पारमार्थिकसत्यत्वाभावः साधनीयः। तत्प्रतियोगिपारमार्थिकं सत्यत्वं प्रपञ्चे नहि प्रत्यक्षेण सिद्धमित्युपजीव्यविरोधाभावान्नानुमानस्य प्रत्यक्षबाध इति चेत्? न, तत्रापि यत्र वह्नावौष्ण्यं प्रसिद्धं तदन्यवह्नावौष्ण्याभावानुमाने वह्नौ शैत्यानुमाने वा पक्षे प्रतियोगिप्रसिद्ध्यभावेनोपजीव्यविरोधाभावादनुमानस्य बाधाभावात्।

न च वह्न्यनौष्ण्यानुमाने औष्ण्यप्रत्यक्षं प्रबलमिति तत्रास्तु बाधः, मिथ्यात्वानुमाने तु प्रत्यक्षं न प्रबलमिति न तत्र बाधः। तथा च बाधमात्रोच्छेदोऽपि नेति वाच्यम्, उभयोः प्रत्यक्षयोः परीक्षितत्वे एकस्य प्रबलत्वमपरस्य नेति वक्तुमशक्यत्वेन उभयोः प्राबल्यं दौर्बल्यं वा वक्तव्यम्। आद्ये मिथ्यात्वानुमानबाधः द्वितीये बाधमात्रोच्छेदः स्यात्। बाधमात्रोच्छेदेऽसदनुमानादपि अनुमितिः स्यादतो द्वयोः प्राबल्यमेव वक्तव्यं, तथा च मिथ्यात्वानुमानस्य प्रत्यक्षबाधः सिद्ध एव।

ननु औष्ण्यप्रत्यक्षस्योभयवादिसिद्धप्रामाण्यकत्वेन तस्यास्तु प्रबलत्वं, सत्त्वप्रत्यक्षस्य तु तथात्वाभावान्नेति चेत्? न, सत्त्वप्रत्यक्षे प्रामाण्यमुभयवादिसम्मतं नेत्यत्र हेत्वभावेन तयोस्तुल्यत्वादिति चेत्?

अत्रोच्यते-वह्न्यनौष्ण्यानुमितिस्थले अनुमानेन सिषाधयिषितमनौष्ण्यमपि व्यावहारिकं, प्रत्यक्षेण गृहीतमौष्ण्यपि च व्यावहारिकमिति तत्रोपजीव्यविरोधः सम्भवति। मिथ्यात्वानुमाने त्वनुमानेन पारमार्थिकसत्यत्वस्याभावः साध्यते प्रत्यक्षेण तु व्यावहारिकं सत्त्वं सिद्धमिति विरोधाभावेन मिथ्यात्वानुमानस्य वह्न्यनौष्ण्यानुमानतुल्यता नास्ति।

ननु विरोधो नास्तीत्यस्य कोऽभिप्रायः—मिथ्यात्वानुमानं तात्त्विकविषयकमिति तद् बाधकमेव न बाध्यम् इति वा? परस्परविरुद्धविषयकत्वेन प्रत्यक्षानुमानयोर्बाध्यबाधकभाव एव नास्तीति वा। द्वितीये पक्षेऽपि विकल्पद्वयं सम्भवति (१) प्रत्यक्षसिद्धव्यावहारिकसत्त्वमगृहीत्वैव प्रत्यक्षासिद्धतात्त्विकसत्त्वस्याभावोऽनुमानेन गृह्यते। (२) अथवा प्रत्यक्षविषयीकृतस्यैव तात्त्विकाभावोऽनुमानेन गृह्यते। द्वितीये तावदन्तिमो विकल्पः (प्रत्यक्षविषयीकृतस्यैव तात्त्विकाभावोऽनुमानेन गृह्यते) न सम्भवति, प्रत्यक्षविषयस्याभावं गृह्णदनुमानं प्रत्यक्षाविरोधि इति कथनं विरुद्धं स्यात्।

द्वितीये प्रथमोऽपि विकल्पः न सम्भवति, प्रत्यक्षासिद्धस्य तात्त्विकसत्त्वस्यानुमानेन निषेधेऽप्रसक्तप्रतिषेधापत्तिः स्यात्। तथा च विकल्पद्वयस्याप्यसम्भवात्. द्वितीयः पक्षो न युक्तः।

प्रथमोऽपि पक्षः न समीचीनः, उपजीव्यविरोधेनानुमानस्य तात्त्विकविषयकत्वमेव न सिद्ध्येत् येन तस्य बाधकत्वं स्यादिति चेत्? न, पक्षद्वयेऽपि दोषाभावात्। तथाहि, प्रत्यक्षस्य परीक्षितत्वेनैवानुमानापेक्षया प्राबल्यं स्वीकृतम्। श्रुत्यादिविरोधेन प्रत्यक्षस्य दुर्बलत्वे सिद्धे तेनानुमानस्य बाधाभावात् तस्य तात्त्विकविषयकत्वमप्यबाधितमेवेति प्रथमः पक्षः युक्तः।

यद्यपि प्रत्यक्षासिद्धमेव पारमार्थिकसत्त्वमनुमानेन निषिध्यते तथापि नाप्रसक्तप्रतिषेधापत्तिः, तत्र परोक्षप्रसक्तेरपि सम्भवादिति द्वितीयोऽपि पक्षो युक्त एव।

अथवा अभावस्य प्रत्यक्षे एव खलु प्रतियोगिनः प्रसक्तिरपेक्षिता, शब्दानुमानादौ च तदनपेक्षितत्वेनाप्रसक्तप्रतिषेधो न दोषाय।

किञ्च प्रत्यक्षविषयस्यानुमानेनानिषेधात् तस्य तात्त्विकत्वं यदापादितं तदपि न युक्तम्, अनुमानेन तत्र तात्त्विकत्वाभावस्यैव बोधनात्। तथा च पारमार्थिकसत्त्वनिषेधादनुमानस्योपजीव्यविरोधो नास्त्येव। अयमेवाशयः खण्डनकारस्य—

**पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।**
**विरोधादुपजीव्येन न बिभेति कदाचन।।** इति। (का.सं. २२)

ननु तात्त्विकविषयकत्वान्न मिथ्यात्वानुमितिर्बाध्या चेत् तदा अनौष्ण्यस्य तात्त्विकस्यैव स्वीकारात् तदनुमितिरपि औष्ण्यप्रत्यक्षेण बाधिता न स्यात्। तथैव आदित्यो यूपः इत्यत्र यूपस्य तात्त्विकादित्यत्वं प्रतिपादयन्त्याः श्रुतेः प्रत्यक्षेण बाधो न स्यादिति चेत्? न, अनौष्ण्यं तात्त्विकमित्यस्य कोऽर्थः? तत्त्वतः औष्ण्यं नास्तीत्यर्थः उत व्यवहारतोऽपि नास्तीत्यर्थः। आद्ये अद्वैते पर्यवसानम्, अद्वैतिभिरपि औष्ण्यस्य तात्त्विकत्वास्वीकारात्।

व्यवहाराविसंवादादिरूपपरीक्षितत्वविशिष्टेनौष्ण्यप्रत्यक्षेण बाधात् द्वितीयोऽपि कल्पो न युक्तः। अतो न औष्ण्यस्य तात्त्विकत्वसिद्धिः।

एवमेव यूपस्यापि तात्त्विकादित्यता उक्तविकल्पद्वयमुत्थाप्य दूषणीया। अतएवैतादृशस्थलेषु गुणवादार्थतया स्तुतिपरत्वमुक्तम्। अतो न शैत्यानुमितेः अनौष्ण्यानुमितेर्वा मिथ्यात्वानुमितिसाम्यम्।

इत्थञ्च यत्र कुत्रापि प्रत्यक्षस्य प्राबल्यमुच्यते दृश्यते वा तत्र सर्वत्र परीक्षितस्यैव। अन्यथा—इदं रजतम् इति प्रत्यक्षस्य अनुमानागमाभ्यां,

नभोनैल्यप्रत्यक्षस्य नीरूपत्वानुमानेन, गौरोऽहमिति प्रत्यक्षस्य 'अहमिहैवास्मि सदने जानानः' इति प्रत्यक्षेण, चन्द्रप्रादेशिकत्वप्रत्यक्षस्य च अनुमानागमाभ्यां, पीतः शंखः, तिक्तो गुडः इत्यादिप्रत्यक्षस्य चानुमानाप्तवाक्याभ्यां बाधो न स्यात्।

ननु नहि प्रत्यक्षभ्रमस्य परोक्षज्ञानेन बाधः सम्भवति, अपरोक्षभ्रमं प्रति अपरोक्षविशेषदर्शनस्यैव विरोधित्वात्। यदि अपरोक्षभ्रमस्य परोक्षप्रमयाऽपि बाधः स्यात् तर्हि सन् घट इति प्रत्यक्षभ्रमविरोधिनो वेदान्तवाक्यजन्यज्ञानस्य शाब्दबोधात्मकस्यापरोक्षप्रमात्वप्रतिपादनप्रयासो व्यर्थः स्यादिति चेत्?

सत्यम्, अपरोक्षप्रमाया एव अपरोक्षभ्रमनिवर्तकत्वम्। यच्च शब्दादिनाऽपरोक्षभ्रमनिवर्तकत्वमुक्तं तस्यायमाशयः—नायं सर्पः इत्यनेन वाक्येन नहि स्वकार्येण सह अज्ञानस्य निवृत्तिर्भवति। तदर्थमपरोक्षप्रतीतिरेवावश्यिकी। शब्देन पुनः 'अयं सर्पः' इति भ्रमस्याप्रामाण्यं ज्ञाप्यते तेन च भ्रमे प्रमाणत्वबुद्धिः भ्रमविषयस्य सत्यत्वबुद्धिश्च निराकृते भवतः। इतावतैव नायं सर्प इति वाक्यस्य भ्रमनिवर्तकत्वव्यपदेशः। भ्रमस्य प्रामाण्यभ्रमः भ्रमविषयस्य सत्यत्वभ्रमश्च नह्यपरोक्षभ्रमौ येन तन्निवृत्तयेऽपरोक्षप्रमाऽपेक्षिता स्यात्। भ्रमप्रमाणत्वबुद्धेः भ्रमविषयस्य सत्यत्वबुद्धेश्च निरासे 'अयं सर्पः' इति भ्रमः स्वरूपतः वर्तमानोऽपि भयाद्युत्पादने न समर्थ इति बाधित उच्यते।

ननु तथापि इदं रजतं, गौरोऽहमित्यादौ नहि युक्तिमात्रस्य प्रतिबन्धकत्वमपितु सयुक्तिकस्य प्रत्यक्षस्यैव। यच्च 'अहमिहैवास्मि सदने जानानः' इति प्रत्यक्षे विभोरात्मनः सदनावच्छिन्नत्वेन विषयत्वे तादृशप्रतीतेः भ्रमत्वं, तस्यानुमानामाभ्यां बाध इत्युक्तं, तन्न युक्तं, जीवस्याणुत्वस्वीकारेणोक्त-प्रतीतेः प्रमात्वस्यैव स्वीकारात्। तथा च प्रत्यक्षस्य नानुमानादिबाध्यत्वमिति चेत्?

अत्रोच्यते—यदि प्रत्यक्षं प्रति युक्तिः न प्रतिबन्धिका तदा इदं रजतं गौरोऽहमित्यादिप्रत्यक्षे विद्यमाने तद्विरोधिविषयकं प्रत्यक्षमेव नोत्पन्नं स्यात् पूर्वप्रत्यक्षेण तद्बाधात्। अतः युक्तेः प्रत्यक्षबाधकत्वमङ्गीकार्यम्। एवम् **'आकाशवत् सर्वगतश्च नित्यः'** इत्यादिश्रुत्यैव आत्मनो विभुत्वप्रतिपादनात् 'अहमिहैवास्मि सदने जानान' इति प्रतीतेः प्रमात्वं स्वीकर्तुं न शक्यते। किञ्च आत्मनोऽणुत्वस्वीकारे एककालावच्छेदेन विभिन्नशरीरावयवावच्छेदेन च सुखदुः-

खानुभवो न स्यात्, अणोरात्मनः एककालावच्छेदेनानेकत्र सत्त्वासम्भवात्। यच्च नभोनैल्यप्रत्यक्षस्य नीरूपत्वग्राहकेण अनुमानेन बाध इति यदुक्तं, तन्न युक्तं, हेत्वभावादनुमानस्यासम्भवात्? तथाहि—नभो नीरूपं परममहत्परिमाणवत्त्वात् द्रव्यानारम्भकत्वाद्वा आत्मवदित्यनुमानं न युक्तं, **'ज्यायान् अन्तरिक्षात्'** (छा. ३-१४-३) इति श्रुत्या आकाशे परममहत्त्वाभावस्य, **'आकाशाद् वायुः'** इत्यादि श्रुत्या द्रव्यारम्भकत्वस्यैव च प्रतिपादनात्। अत्र द्रव्यानारम्भकत्वहेतुः अन्त्यावयविनि घटादौ व्यभिचरितः स्यादतो द्रव्यारम्भकत्वसमानाधिकरण-द्रव्यत्वव्याप्यजात्यभाव इति तदर्थो वक्तव्यः।

एवं नभो नीरूपं पृथिव्यादित्रयेतरभूतत्वात् वायुवत् इत्यपि अप्रयोजकत्वान्न युक्तम्। अत्रापि पृथिव्यादित्रयेतरभूतत्वमित्यस्य पृथिव्यादि-भेदत्रयवद्भूतत्वमित्यर्थः, अन्यथा पृथिव्यादित्रयभेदस्य प्रत्येकं पृथिव्यादावपि सत्त्वाद्व्यभिचारः स्यात्। तथाचानुमानाभावे नीरूपत्वग्राहकं साक्षिप्रत्यक्षमेव नभोनैल्यप्रत्यक्षे बाधकं वक्तव्यम्। यथा पिशाचग्रहणासमर्थेनापि चक्षुषा स्तम्भादौ पिशाचान्योन्याभावः गृह्यते तथैव रूपग्रहणासमर्थेन साक्षिणा आकाशादौ रूपाभावग्रहणे बाधकाभावः।

यद्वा वायौ यथा रूपाभावः गृह्यते तथैव नभस्यपि रूपाभावस्य चक्षुषा ग्रहणमिति तत्र प्रत्यक्षमेव बाधकं नत्वनुमानमिति चेत्?

अत्रोच्यते, नीलं नभः इति प्रत्यक्षे विद्यमाने नभो नीरूपमिति चाक्षुषं प्रत्यक्षं साक्षिप्रत्यक्षं वा सम्भवत्येव नहि, पूर्वप्रत्यक्षेण तद्बाधात्। अतः अनुमानमेव बाधकं वक्तव्यं, तच्चेत्थं, नभो नीरूपं, चक्षुरन्वय-व्यतिरेकानुविधायिरूपाविशेषितप्रतीतिविषयत्वात् रूपवदिति। नभो यदि नीरूपं स्यात् तर्हि चक्षुरन्वयव्यतिरेकानुविधायिरूपाविशेषितप्रतीतौ विषयतया भासमानं न स्यादित्यनुकूलतर्कस्य सत्त्वेन अप्रयोजकत्वशङ्का नास्ति, सविधे नभसि रूपासम्बन्धित्वस्य सर्वानुभसिद्धत्वात्। तस्मात् नानुमानं प्रत्यक्षबाध्यं प्रत्युत प्रत्यक्षमेवानुमानबाध्यमिति संक्षेपः।

**ननु** प्रपञ्चमिथ्यात्वसाधकानुमानघटकसाध्यहेत्वादीनां तैरेव हेतुभिः मिथ्यात्वं बोध्यते न वा?। अन्त्ये तेषां मिथ्यात्वासिद्धौ सर्वमिथ्यात्वं न सिध्येत्। आद्ये परस्परव्याहतिः स्यात्, साधनीयस्य मिथ्यात्वरूपार्थ-स्याप्यनुमानेन मिथ्यात्वसाधनात्। प्रतिज्ञादिभिस्तावत्पक्षे साध्यसत्त्वं प्रतिपाद्यते दृश्यत्वादिहेतुभिश्च तस्यैव साध्यस्य अत्यन्ताभावः (मिथ्यात्वं) प्रतिपाद्यते इति चेत्?

अत्रोच्यते—यद्यपि प्रतिज्ञादिभिः साध्यस्य सत्त्वं प्रतिपाद्यते किन्तु तन्न त्रिकालाबाध्यत्वरूपं परमार्थसत्त्वम्, अपितु व्यावहारिकसत्त्वमेव। दृश्यत्वादि-हेतुभिस्तु प्रपञ्चस्य त्रैकालिकनिषेधप्रतियोगित्वं साध्यते इति न व्याहतिरिति।

**अथ** साधकत्वं परमार्थसत्त्वं विनाऽनुपपन्नम्। तथा च दृश्यत्वादयो हेतवो यदि साधकाः तर्हि तादृशसाधकत्वान्यथानुपपत्त्या तत्र परमार्थसत्त्वं कल्प्यते। परमार्थसत्त्वमेव हि साधकत्वे तन्त्रं वक्तव्यम्, नतु धीमात्रविषयत्वम्, अपरोक्षधीविषयत्वं सत्त्वेनापरोक्षधीविषयत्वं वा, तथासति धीमात्रविषयत्वस्य तुच्छेऽपि सत्त्वादतिव्याप्तिः अपरोक्षधीविषयत्वस्य सत्त्वेनापरोक्षधीविषयत्वस्य च नित्यातीन्द्रिये गुरुत्वादावभावादव्याप्तिश्च।

अत एवापरोक्षज्ञानविषयत्वेन ज्ञातत्वमपि न साधकताप्रयोजकम्। किञ्च तथोच्यमाने यत्र वह्निः वह्नित्वेन न ज्ञातः तत्र तत्त्वेन ज्ञातत्वाभावेऽपि वह्नौ दाहकत्वं दृश्यत इति व्यतिरेकव्यभिचारः। यत्र च गुञ्जापुञ्जो वह्नित्वेन ज्ञातः तत्रापरोक्षज्ञानविषयत्वेन ज्ञातत्वसत्त्वेऽपि दाहकत्वं न दृश्यत इत्यन्वयव्यभिचारोऽपि स्यात्।

त्रिचतुरकक्ष्यास्वबाधिता सत्त्वप्रतीतिः साधकत्वे तन्त्रमित्यपि न युक्तं, तथासत्यात्मनो गौरत्वप्रतीतेः नभसो नीलत्वप्रतीतेश्चापि त्रिचतुरकक्ष्यास्वबाधात् आत्मनः अनित्यत्वस्य नभसो स्पर्शवत्त्वस्य चापत्तिः स्यात्, यत्र गौरत्वं तत्रानित्यत्वं, यत्र नीलत्वं तत्र स्पर्शवत्त्वमिति च व्याप्तेः। यद्यात्मनो गौरत्वं नभसो नीलत्वं च युक्त्या बाधितमित्युच्यते तदा प्रपञ्चस्य सत्त्वमपि युक्त्या बाधितमेवेति दृश्यत्वादीनां त्रिचतुरकक्ष्यास्वबाधितत्वाभावात्साधकत्वं न स्यात् इति चेत्?

अत्रोच्यते—घटादौ सत्त्वसिद्धये नभोनैल्यादिधीव्यावृत्ता काचन बुद्धिः स्वीकर्तव्या। तादृग्बुद्धिविषयत्वमेव साधकत्वे तन्त्रम्। तच्च व्यावहारिकबुद्धिविषयत्वे पर्यवस्यति। नभोनीलत्वादेः तथाविधबुद्धिविषयत्वस्य केनाप्यस्वीकारात्। अन्यथा घटादेरिव तेषामपि सत्त्वं सिध्येत्। लोकप्रसिद्धिरपि तन्त्रमितीष्टसिद्धिवचनस्याप्ययमेवाशयः।

ननु क्लृप्तदोषरहितत्वेन ज्ञातायाः श्रुतेः यथा ब्रह्मसत्त्वसाधकत्वं तथैव क्लृप्तदोषरहितत्वेन ज्ञातस्य प्रत्यक्षस्य प्रपञ्चसत्वसाधकत्वं कुतो न स्यात्, उभयत्र साधकतायाः तुल्यत्वात् इति चेत्? न, ब्रह्मसत्त्वबुद्धेरत्यन्ताबाधित्वात् जगत्सत्त्वबुद्धेस्त्वतथात्वात्।

न च बुद्धिविषयत्वं साधकत्वे न तन्त्रं तथासति यत्र वह्निः वह्नित्वेन न ज्ञातस्तत्र वह्नौ दाहकत्वं न स्यात्, यत्र विषम् अमृतत्वेन ज्ञातं तत्र तादृशविषस्य सञ्जीवकत्वं च स्यादिति वाच्यं, वह्नित्वेनाज्ञाते वह्नौ अस्मद्बुद्धिविषयत्वस्याभावेऽपि ईश्वरीयबुद्धिविषयत्वस्य सत्त्वादुक्तदोषाभावात्।

विषं यद्यप्यमृतत्वेन ज्ञातं तथापि न तादृशबुद्धिः नभोनैल्यादि-बुद्धिव्यावृत्तेति न सञ्जीवकत्वप्रसङ्गः।

वस्तुतस्तु ब्रह्मज्ञानेतराबाध्यत्वमेव साधकत्वे तन्त्रम्। तच्च ब्रह्मणीव ब्रह्मज्ञानबाध्ये घटादावपि वर्तते इति न परमार्थसत्त्वव्याप्यं येन प्रपञ्चस्य परमार्थसत्त्वं साधयेत्। तथा च न परमार्थसत्त्वं साधकत्वान्यथानुपपत्त्या कल्पयितुं शक्यम्।

ननु हेतुसाध्ययोः समानसत्ताकत्वमपेक्षितं, तथाच व्यावहारिकेण दृश्यत्वादिना प्रपञ्चस्य पारमार्थिकं मिथ्यात्वं न सिद्ध्येदिति चेत्? न, साध्यस्य मिथ्यात्वस्यापि व्यावहारिकत्वेन समानसत्ताकत्वोपपत्तेः। वस्तुतस्तु हेतुसाध्यतोः समानसत्ताकत्वनियमो बाधित एव, अन्यथा धूलीपटले धूमभ्रमात् प्रमात्मकवह्न्यनुमितिर्न स्यात्। एवं गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथ्वीत्वादित्यत्र पृथ्वीत्वप्रमातः तादृशघटे भ्रमात्मकगन्धानुमितिर्न स्यात्।

ननु ब्रह्मज्ञानेतराबाध्यत्वरूपं सत्त्वं ब्रह्मघटोभयसाधारणमिति सत्त्वत्रैविध्यविभागो नोचित इति चेत्? न, विभागे त्रैविध्यस्वीकारेऽपि साधकतायामुभयसाधारणसत्त्वस्वीकारे दोषाभावात्।

वस्तुतस्तु ब्रह्मज्ञानबाध्यत्वरूपं व्यावहारिकसत्त्वमेव साधकताप्रयोजकम्। नच साक्षिणि तादृशव्यावहारिकसत्त्वस्याभावेनाज्ञानादिसाधकता कथं तस्य स्यादिति वाच्यम्, अज्ञानोपहितस्यैव साक्षिणोऽज्ञानादिसाधकत्वेन तादृशस्य साक्षिणो व्यावहारिकत्वस्यैवाभ्युपगमात्, शुद्धस्यैव साक्षिणः पारमार्थिकत्वात्तस्य चाज्ञानाद्यसाधकत्वात्।

अपि च नहि पारमार्थिकसत्त्वं साधकत्वे प्रयोजकं, सद्विलक्षणे प्रतिबिम्बादौ साधकत्वदर्शनात्, बिम्बरूपेण सतोऽपि प्रतिबिम्बात्मनाऽसतः प्रतिबिम्बस्य बिम्बसाधकत्वात्। एवमसतोऽपि स्वाप्नार्थस्य भाविशुभाशुभ-सूचकत्वमस्ति।

ननु स्वप्नार्थो न शुभाशुभसूचकः, किन्तु तत्रत्यं दर्शनं, **'पुरुषं कृष्णं कृष्णदन्तं पश्यतीति'** श्रुतेरिति चेत्? न, ज्ञानस्य हेतुत्वेऽपि विषयस्य परम्परया हेतुत्वसम्भवात् निर्विषयस्य ज्ञानस्यानङ्गीकारात्।

ननु ज्ञानस्य हेतुत्वेऽपि तदवच्छेदकस्यार्थस्य तटस्थत्वमेव, तथाहि— यथा घटात्यन्ताभावो घटानधिकरणदेशवृत्तिः घटध्वंसः घटानधिकरणकालवृत्तिः किन्तु घटात्यन्ताभावतद्ध्वंसावच्छेदको घटः तटस्थः न तु तदनधिकरण-देशकालवृत्तिः। तथैव ब्रह्मज्ञानं वेदान्तसाध्यं किन्तु ब्रह्म न वेदान्तसाध्यम्। एवं रीत्या अवच्छिन्नस्य हेतुत्वेऽपि अवच्छेदकस्य तटस्थत्वं दृश्यते, तस्मात् सतो ज्ञानस्यैव हेतुत्वं न तु तदवच्छेकस्यार्थस्येति। नचार्थ एव ज्ञानस्य ज्ञानान्तराद्व्यावर्तकः। व्यावर्तकत्वञ्च व्यावृत्तिधीजनकत्वं, तथा च अर्थस्यापि जनकत्वं सिध्यतीति वाच्यं, व्यावर्तकत्वं हि व्यावृत्तिधीजनकीभूतज्ञानविषयत्वं नतु व्यावृत्तिधीजनकत्वं, दण्डस्य सत्त्वेऽपि तज्ज्ञानाभावे व्यावृत्त्यज्ञानात्।

न चावच्छेदकस्य मिथ्यात्वेऽवच्छिन्नस्य मिथ्यात्वनियमादर्थस्य मिथ्यात्वे तदवच्छिन्नस्य ज्ञानस्यापि मिथ्यात्वमिति वाच्यम्, अवच्छेदकस्वभावोऽ-वच्छिन्नोऽपि भवेदेवेति नियमाभावात्, अन्यथा तुच्छज्ञाने तुच्छवैलक्षण्ये च तुच्छत्वं स्यात्। एवमनृतद्वैतस्याभावेऽनृतत्वं स्यात्। तस्मादवच्छेदकस्य ताटस्थ्येऽप्यवच्छिन्नस्य कारणत्वं सम्भवत्येवेति चेत्?

अत्रोच्यते—अवच्छेदकस्य ताटस्थ्यं नाम तस्योपलक्षणत्वम्। किन्तु तन्न सर्वत्र युक्तं, विशेषणत्वे सम्भवति उपलक्षणत्वस्वीकारस्यायुक्तत्वात् विशेषणत्वबाधपूर्वकत्वादुपलक्षणत्वस्य। अन्यथा **'दण्डी प्रैषानन्वाह'** **'लोहितोष्णीषा ऋत्विजः प्रचरन्ति'** इत्यादिस्थले दण्डलौहित्यादेरप्युपलक्षणत्वं स्यात्। तथा च तदभावेऽप्यनुष्ठानं स्यात्। तस्मात् यत्रावच्छेदकस्य विशेषणत्वे बाधकं तत्रैव तस्योपलक्षणत्वम्। यच्चोक्तं घटाभावस्य घटभिन्नदेशवृत्तित्वमिव घटस्यापि घटभिन्नदेशवृत्तित्वं स्यात्, तत्रेदं बाधकं यत् घटभिन्नदेशे घटसम्बन्धस्वीकारे तस्य तटभिन्नदेशत्वमेव न स्यादिति। तथैव ध्वंसस्यापि। ब्रह्मज्ञानस्येव ब्रह्मणोऽपि वेदान्तसाध्यत्वे ब्रह्मणोऽनित्यत्वं स्यात्। तस्मात् तत्तद्बाधकसत्त्वादुक्तस्थलेषु उपलक्षणत्वपक्षो युज्यते।

एवं ज्ञानस्य कारणत्वे विषयस्यापि कारणत्वमित्यत्रेदमपि प्रमाणं यत् कारणोत्कर्षं विना कार्योत्कर्षो न भवतीति। तथाहि, उत्कृष्टकलधौतदर्शनादुत्कृष्टं सुखम्, उत्कृष्टसर्पादिदर्शनादुत्कृष्टं भयादि जायते। तद्यदि विषयस्य कारणत्वं न स्यात् तर्हि दर्शनादौ उत्कर्षापकर्षव्यवस्था न स्यात्, न च ज्ञानगतप्रकर्ष एव तत्र हेतुर्नतु विषयगत इति वाच्यं, विषयप्रकर्षस्यैव ज्ञानप्रकर्षरूपत्वात्। नहि तत्र विषयगतप्रकर्षातिरिक्तः कश्चन प्रकर्षोऽस्ति। ज्ञानगतो जातिविशेष एव तत्र प्रकर्षः स च विषयप्रकर्षभिन्न इत्यपि न युक्तं, तादृशप्रकर्षस्य

चाक्षुषत्वादिना साङ्कर्यात् तत्र जातित्वाभावात्। तथाहि प्रकर्षं विहाय चाक्षुषत्वम् अपकृष्टचाक्षुषज्ञाने, चाश्रुषत्वं विहाय प्रकर्षः प्रकृष्टशाब्दादिज्ञाने, उभयोः समावेशः प्रकृष्टचाक्षुषज्ञान इति।

किञ्च सर्पज्ञाने रूपद्वयं-ज्ञानत्वं सर्पाद्यवच्छिन्नत्वञ्च। तत्र भयजनकतावच्छेकं रूपं न ज्ञानत्वम् अतिरिक्तवृत्तित्वात्। किन्तु सर्पाद्यवच्छिन्नत्वमेव। तथाच ज्ञानं स्वरूपतः सदपि सर्पत्वावच्छिन्नत्वेन रूपेण मिथ्यैव। भ्रमज्ञानं तु स्वरूपतोऽपि मिथ्यैव विषयतो मिथ्यात्वात्, यत् स्वरूपतोऽमिथ्या तद्विषयतोऽप्यमिथ्यैवेति व्याप्तेः। नन्वत्र गुणजन्यत्वमुपाधिः स्यात्। तथाहि विषयतोऽमिथ्यात्वं प्रमात्मकघटादिज्ञाने वर्तते तत्र गुणजन्यत्वमस्तीति साध्यव्यापकत्वम्। एवं (पूर्वपक्षिमते) स्वरूपतोऽबाध्यत्वं भ्रमेऽप्यस्ति किन्तु तत्र गुणजन्यत्वं नास्तीति साधनाव्यापकत्वमिति चेत्? उच्यते, वह्न्यनुमाने यथा वह्निसामग्र्याः नोपाधित्वं तथैवात्रापि गुणजन्यत्वस्य उपाधित्वाभावात्, यत्स्वरूपतोऽबाध्यं तत् गुणजन्यमित्यस्या अपि व्याप्तेः सम्भवात्, भ्रमज्ञानं यदि स्वरूपतोऽबाध्यं स्यात् विषयतोऽप्यबाध्यं स्यादितिवत् गुणजन्यं स्यादित्यस्यापि वक्तुं शक्यत्वेन गुणजन्यत्वस्यापाद्यतया साधनाव्यापकत्वाभावात्।

यच्चोक्तं तुच्छ इव तदवच्छिन्ने तुच्छवैलक्षण्येऽपि तुच्छत्वं स्यादिति तदयुक्तं, नहि सर्वत्रावच्छेद्यावच्छेदकयोः सारूप्यमिति ब्रूमः, विषयस्य मिथ्यात्वे ज्ञानस्यापि मिथ्यात्वमित्यत्र तु विषयज्ञानयोरुभयोः मिथ्यात्वप्रयोजकं दृश्यत्वं तुल्यमिति तत्र सारूप्यं युक्तम्। तुच्छतुच्छवैलक्षण्ययोस्तु तुच्छत्वप्रयोजकं न किमपीति न तत्र सारूप्यम्।

ननु ज्ञाननिष्ठजनकतायामवच्छेदको न विषयः, तदनपेक्ष्यैव सर्पज्ञानाद् घटादिज्ञानस्य व्यावृत्तिसम्भवे सर्पज्ञानादिव घटादिज्ञानात् न भयोत्पत्त्यापत्तिः। तथाहि, तत्र विषयस्य व्यावर्तकत्वं न सम्भवति। यतोहि ज्ञानेनासम्बद्धो विषयो नहि व्यावर्तकः, असम्बद्धस्याव्यावर्तकत्वात्। सम्बद्धो यद्यपि व्यावर्तकः सम्भवति तथापि स सम्बन्धः स्वरूपमेव। तस्य च ज्ञानरूपत्वात् ज्ञानमात्रनिष्ठधर्मरूपत्वाद् वा न तत्र विषयस्यान्तर्भाव इति न तस्य व्यावर्तकत्वम्। अपितु सर्पज्ञानमसर्पज्ञानात् स्वरूपत एव व्यावृत्तम्। तथाचात्रानुमानमपि सर्पज्ञानम् असर्पज्ञानात् धर्म्यन्तरसम्बन्धमपेक्ष्य विलक्षणं, तज्जनकविलक्षणजन्यत्वात्, यवाङ्कुरात् कलमाङ्कुरवदिति। तथैव तज्जन्यविलक्षणजनकत्वमपि तत्र हेतुः सम्भवति, तथात्वे दृष्टान्तस्तु यवबीजात्

कलमबीजवदिति। यथा यवबीजजन्यात् कलमबीजजन्यो विलक्षण इति तत्तद्विलक्षणजनकत्वेन यवबीजकलमबीजयोर्वैलक्षण्यं तथैव सर्पज्ञानाद् भयं जन्यते असर्पज्ञानात्तु नेति कार्यवैलक्षण्यम्। यथा सर्पप्रमातः सर्पभ्रमस्य वैलक्षण्यम्, उभयोः ज्ञानयोर्यद्यपि भयादिहेतुत्वमस्ति तथापि तज्जनकौ विलक्षणौ। प्रमायां गुणो जनकः भ्रमे च दोष इति। सर्पज्ञानत्वेन तु तयोरवैलक्षण्यमेव, भ्रमस्य दोषजन्यत्वेनाधिकजन्यत्वेऽपि सर्पज्ञानजनकसामग्री-जन्यत्वात्। विषयस्यावच्छेदकत्वे तु अतीतादिविषयकज्ञानस्य ज्ञानान्तराद् व्यावृत्तिर्न स्यात्, व्यावर्तकस्य विषयस्य तदानीमभावात्। एवमेवासद्विषयकज्ञानेऽपि। अतएव अभावोऽप्यभावान्तरात् स्वत एव व्यावृत्तः। अन्यथा प्रतियोगिनो व्यावर्तकत्वे ध्वंसस्य अभावान्तराद् व्यावृत्तिर्न स्यात्, व्यावर्तकस्य प्रतियोगिनस्तदानीमभावादिति चेत्?

अत्रोच्यते—व्यावृत्तसामान्यानुगतस्यैव धर्मस्य व्यावर्तकत्वं वक्तव्यम्। तथाच ज्ञानस्य स्वरूपतो व्यावृत्तत्वे तत्तत्स्वरूपस्य च व्यावर्तकत्वे सर्पज्ञानसामान्यस्यासर्पज्ञानाद्व्यावृत्तिर्न स्यात् व्यावर्तकस्य तत्तत्स्वरूपस्य यत्किञ्चित्सर्पज्ञानविश्रान्तत्वेन व्यावृत्तत्वन्यूनवृत्तित्वात्। अतः सर्पज्ञान-सामान्यानुगतः कश्चन धर्मो व्यावर्तको वाच्यः। स च विषय एव नतु जात्यादिरूपः, सर्पज्ञानत्वस्य प्रत्यक्षत्वादिना साङ्कर्यात् जातिरूपत्वाभावात्। यच्चोक्तमतीतासद्विषयकज्ञानयोः स्वरूपतो व्यावृत्तिरिति, तन्न, तत्रापि विषयस्यैव व्यावर्तकत्वात्। व्यावर्तकत्वं हि न व्यावृत्तिधीजनकत्वं किन्तु व्यावृत्तिधीजनकधीविषयत्वम्। तच्च अतीतासतोरपि सम्भवति। अतएव ध्वंसादिस्थलेऽपि प्रतियोगिन एव व्यावर्तकत्वम्, उक्तरूपस्य व्यावर्तकत्वस्य तत्राक्षतत्वात्। ननु यत्र विषयस्य विशेषणत्वं न सम्भवति तत्रोपलक्षणत्वं स्वीकार्यम्। उपलक्षणेन च उपलक्ष्यगतसम्बन्धव्यतिरिक्तः कश्चिद्धर्म एवोपस्थाप्यते। यथा काकेन गृहस्थानविशेष उत्तृणत्वादिः उपस्थाप्यते। तथाचोपलक्षणोपस्थापितस्योपलक्ष्यगतधर्मविशेषस्यैव व्यावर्तकत्वं न तु विषयस्येत्यायातमिति चेत्?

अत्रोच्यते—नह्यत्र विषयस्योपलक्षणत्वं किन्तूपाधित्वम्। यतो येन स्वोपरागाद्विशेष्ये व्यावृत्तिबुद्धिर्जन्यते तद्विशेषणम्। अर्थात् व्यावृत्तिधीविशेष्ये विशेषणतया भासमानं सद्व्यावृत्तिधीकाले विद्यमानं विशेषणं, यथा घटत्वगोत्वादि। येन च स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तक-धर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणम्। यथा काकवन्तो देवदत्तगृहा

इत्यत्र काकस्याकाकगृहव्यावृत्तिधीकाले विशेष्ये विद्यमानत्वं नास्तीति तस्य न विशेषणत्वं किन्तूपलक्षणत्वम्। यच्च विशेष्ये नोपव्यञ्जकं न वा धर्मान्तरोपस्थापकम् अथ च व्यावर्तकम् तदुपाधिः। तथा च विशेषणोपलक्षणविलक्षणत्वे सति व्यावर्तकत्वमुपाधित्वमिति। यथा पङ्कजशब्द-प्रयोगे पद्मत्वमुपाधिः, पद्मत्वं हि न स्वोपरक्तां बुद्धिं जनयति पद्मत्वविशिष्टे पङ्कजशब्दस्य शक्त्यभावादिति न तद्विशेषणम्। नापि तत् विशेष्यधर्मान्तरोप-स्थापकमित्युपलक्षणमपि। अथ च कुमुदादिभ्यो व्यावर्तकमित्युपाधिरेव। यथा वा आकाशशब्दप्रयोगे शब्दाश्रयत्वम्। तस्माद्यत्र विषयस्य न विशेषणत्वं तत्रोपाधित्वेन निर्वाहः विशेषणत्वोपाधित्वयोरभावे एव उपलक्षणत्व-स्याङ्गीकारात्। तस्माद् विषय एव सर्वत्र ज्ञाने व्यावर्तक इति सुस्थम्।

ननु विश्वं यदि कल्पितं स्यात् तदा 'जन्माद्यस्य यतः' इति श्रुत्या जन्माद्युक्तिः अयुक्ता स्यात्, नहि कल्पितस्य रूप्यादेर्जन्मादिकम् ईक्षापूर्वं स्रष्टृत्वं वा युक्तम्। विश्वस्य कल्पितत्वे तत्र तत्तद्विरोधशंका तन्निराकरणञ्चायुक्तमिति चेत्? न, प्रातिभासिके तत्तद्विरोधशंकातत्परिहारयोरयुक्तत्वेऽपि व्यावहारिके तयोर्युक्तत्वात्। प्रपञ्चस्य कल्पितत्वेऽपि न तस्य प्रातिभासिकत्वमपि तु व्यावहारिकत्वमेव। तथा च व्यावहारिके तस्मिन् उक्तविरोधशंकातत्परिहारदिर्नानुचितः। किञ्च प्रातिभासिकेऽपि इन्द्रजालादौ ऐन्द्रजालिकस्य ईक्षापूर्वकस्रष्टृत्वं दृश्यत इति कल्पिते ईक्षापूर्वं स्रष्टत्वमविरुद्धम्।

ननु दृशि दृश्याध्यासस्वीकर्तृमते जीवचैतन्यं विषयदृग् ब्रह्मचैतन्यं वा? तत्र तावत् जीवचैतन्यस्य विषयदृक्त्वं न सम्भवति, जीवस्य अवच्छिन्नचिद्रूपस्य कल्पितत्वेन तत्र विषयाध्यासस्यासम्भवात् अकल्पितस्यैव अधिष्ठानत्वाङ्गी-कारात्। नचास्तु ब्रह्मचैतन्ये एव अध्यासः विषयदृक्त्वं तु पुनर्जीवचैतन्यस्यैवेति वाच्यं, तथासति ब्रह्मचैतन्यस्य दृग्भिन्नत्वेन दृश्यत्वापत्त्या दृश्ययोरेव अध्याससम्बन्धापत्तिः स्यात्। एवमेव ब्रह्मचैतन्यमपि न विषयदृग् सविशेषस्यैव तस्य विषयदृक्त्वसम्भवेन तस्य च कल्पितत्वेन पूर्ववदेव तत्रापि अध्यासायोगात्। न च शुद्धचैतन्यमधिष्ठानं तदेव च जीवशब्देन व्यपदिष्टं विषयदृग्भवतीति नोक्तरीत्या दृश्याध्यासानुपपत्तिरिति वाच्यं, शुद्धस्य विषयप्रकाशकत्वाङ्गीकारे तस्य च स्वयमासंसारमावृतत्वेन कदापि विषयप्रकाशो न स्यादिति जगदान्ध्यप्रसङ्गादिति चेत्?

अत्रोच्यते—ब्रह्मचैतन्यस्य विषयप्रकाशकत्वेऽपि घटाद्याकारवृत्त्या मूला-ज्ञाननिवृत्त्यभावेऽपि घटाद्यवच्छेदेन तूलाज्ञाननिवृत्तौ घटप्रकाशोपपत्तौ न

जगदान्ध्यप्रसङ्गः। ननु तथा सति संसारावस्थायामेव ब्रह्मस्फुरणे इदानीमेव मोक्षापत्त्या अखण्डाकारवृत्तिः किमर्थं स्वीकार्या घटादेस्तत्र अधिकस्य स्फुरणेऽपि ब्रह्मणोऽपि स्फुरणादिति चेत्? न, ब्रह्मविषयकत्वेन स्फुरणयोः साम्येऽपि इदानींतनस्फुरणस्य घटाद्युपाधिविषयकत्वेन सप्रकारकत्वान्न् उपाध्यविषयकस्यैव ब्रह्मस्फुरणस्य च चरमवृत्तिप्रयुक्तत्वात् उभयोर्वैषम्यादिति न चरमवृत्तिवैयर्थ्यं न वा सद्यो मोक्षापातः, **एकधैवानुद्रष्टव्यम्**इत्यादिश्रुतिवचनात् उपाध्यविषयकस्यैव ब्रह्मस्फुरणस्य मोक्षं प्रत्युपयोगित्वादिति दिक्।।



# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु 'स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. **"वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२ (उ.प्र.)"** इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **"सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२ (उ.प्र.)"** इति सङ्केतेन विधेयः।

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां**, श्रीमत्त्रिलोचनदासकृतया **'कातन्त्रवृत्तिपञ्जिका'**टीकया, कविराजसुषेणशर्मकृतया **'कलापचन्द्र'**टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया,** विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः —

| | | | |
|---|---|---|---|
| प्रथमो भागः | ३५०.०० | द्वितीयो भागः खण्डम्-१ | ५००.०० |
| द्वितीयो भागः खण्डम्-२ | ६००.०० | तृतीयो भागः खण्डम्-१ | ४८०.०० |
| तृतीयो भागः खण्डम्-२ | ५००.०० | चतुर्थो भागः | ८००.०० |

२. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह सर्वासामुपासनानां प्रतिपादकोऽस्ति। श्रीरामेश्वरवृत्तेर्मुख्यांशेन समलङ्कृतो **नीरक्षीरविवेकाभिधेन भाषाभाष्येण** संवलितः प्रो. विद्यानिवासमिश्रैः, डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — २८०.००

३. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धनस्य सदुद्देश्येन तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां राद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको रत्नाकरसदृशो विराजते। स्वात्मविमर्शाख्यया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

४. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। अस्य प्रथमभागस्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशकुमारपाण्डेयेन सुसम्पाद्य प्रकाशितः— प्रथमो भागः ४५०.००
द्वितीयो भागः ४६०.००

५. **जैमिनीयं सामगानम्** : जैमिनिमुनिना प्रणीतं ग्रन्थरत्नमिदं द्वितीयसंस्करणात्मकं प्रकाशतामानीतम्। ग्रन्थेऽस्मिन् सामगानस्यानेकेषां छन्दसामुपबृंहणमस्ति। ग्रन्थोऽयं श्रीरामनाथदीक्षितस्य विस्तृतया भूमिकया सुशोभितोऽस्ति— २००.००

६. **सात्वतसंहिता** : वैष्णवतन्त्रस्य मूर्धन्यतमोऽयं ग्रन्थः अलशिङ्गभट्टस्य व्याख्यया सनाथितः प्रकाशतामानीतः। श्रीव्रजवल्लभद्विवेदिना सम्पादितस्य सभाष्यस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रस्तूयते— ३६०.००

७. **श्रीमालिनीविजयोत्तरतन्त्रम्** : तन्त्रशास्त्रस्य ग्रन्थोऽयं डॉ. परमहंसमिश्रस्य **'नीरक्षीरविवेक'**भाषाभाष्येण समलङ्कृत्य प्रकाशतामानीतः। ग्रन्थोऽयं सम्पूर्णाध्वावर्गोपरि स्वकीयां स्वतन्त्रां दृष्टिं प्रस्तौति। स्वात्म-विमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पादितोऽयं ग्रन्थः प्रकाशितः— २४०.००

८. **मैत्र्युपनिषद्** : श्रीरामतीर्थविरचितया **'दीपिका'**ख्यसंस्कृतव्याख्यया, प्रो. ओमप्रकाशपाण्डेयेन सनाथि-तया **हिन्दीव्याख्यया** विस्तृतया भूमिकया सम्भूष्य सम्पाद्य च प्रकाशितोऽयं ग्रन्थः— १८०.००

९. **श्रीमद्भागवत में सांख्ययोग के तत्त्व : एक परिशीलन** : श्रीमद्भागवतस्य दार्शनिकविश्लेषणात्मकोऽयं ग्रन्थः प्रो. विमलाकर्नाटकमहोदयाभिर्हिन्दीभाषायां प्रणीतः। दर्शनेतिहासाख्यपटलद्वयेन विभक्तोऽयं ग्रन्थो विस्तृतया भूमिकया परिशिष्टादिभिश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

१०. **अक्षर पुरुष : पण्डित श्रीविद्यानिवास मिश्र स्मृति-ग्रन्थ** : विश्वविद्यालयस्यास्य कुलपतिचराणां राज्यसभायाः पूर्वसदस्यानां प्रख्यातचिन्तकानाम् आचार्यश्रीविद्यानिवासमिश्राणां स्मृतौ प्रकाशितोऽयं विशिष्टतमो ग्रन्थः। ग्रन्थेऽस्मिन् वेद-व्याकरणागम-ज्यौतिष-दर्शनप्रभृतिविविधशास्त्रसम्बन्धिनिबन्धाः सङ्कलिताः सुसम्पादिताश्च सन्ति— १६५०.००

११. **पण्डितश्रीक्षेत्रेशचन्द्रचट्टोपाध्याय-स्मृति-ग्रन्थ** : आचार्यश्रीक्षेत्रेशचन्द्रचट्टोपाध्यायवर्य्याणां पुण्यस्मृतौ प्रकाशितेऽस्मिन् विविधशास्त्रीयनिबन्धसंवलिते ग्रन्थे मनीषिमूर्द्धन्यैस्तत्तच्छास्त्रनिष्णातैर्विद्वद्वर्य्यैः प्रणीताः संस्कृत-हिन्दी-आङ्ग्ल-भाषामया निबन्धाः सुसम्पादिता अभिवर्द्धयन्ति ग्रन्थरत्नमिदम्— ११००.००

१२. **प्रो. वि. वेङ्कटाचलम्-स्मृति-ग्रन्थ** : विश्वविद्यालयस्यास्य कुलपतिचराणां मनीषिमूर्द्धन्यानां प्रो. वि.वेङ्कटाचलम्महोदयानां पुण्यस्मृतौ प्रकाशितोऽयं ग्रन्थः। ग्रन्थेऽस्मिन् संस्कृत-हिन्दी-आङ्ग्लभाषामया वेद-व्याकरणागम-ज्यौतिष-दर्शनप्रभृतिशास्त्रसम्बद्धास्तत्तच्छास्त्रीयविद्वन्मूर्द्धन्यैर्विरचिताः शोधनिबन्धाः सङ्कलय्य सुसम्पाद्य च प्रकाशिताः सन्ति— ८००.००

---

*पत्रव्यवहारसङ्केतः*— निदेशकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२

---